सेवामें ५.5

श्रीमान् पं० श्री प्रभुलाल गोस्वा.

जी वेदान्त विभाग

सं० सं० वि० विद्यालय

वाराणसी को सादर

समर्पण।

स्वामी सदानन्द शास्त्री

श्रीसद्गुरवे नमः

# हिन्दीकविकबीर-सिद्धान्तस्याद्वैतवेदान्तेन सह साम्यम्

लेखकः

डा० स्वामिसदानन्दशास्त्री

विद्यावारिधिः (पी-एच० डी०)

प्रथम संस्करण ]        अप्रैल १९८३        [ मूल्य

प्रकाशकः
डा० स्वामिसदानन्दः
बी० १/७२, अस्सी, वाराणसी

पुनः प्रकाशनं प्रकाशकाधीनम्

भारतीय-केन्द्रीय-शिक्षामन्त्रालयस्यार्थसाहाय्येन कृतमाद्यं मुद्रणम्

वितरकः
विश्वविद्यालय-प्रकाशन
चौक, वाराणसी

मुद्रकः
सुदर्शन मुद्रक
४२, उत्तर बेनियाबाग,
वाराणसी

# HINDĪ KAVI KABĪR
# Sidhāntasyādvaita Vedāntena Saha Sāmyam

Author

Dr. Swāmi Sadānanda śāstri
VEDĀNTĀCHĀRYA VIDYĀVĀRIDHI ( Ph. D. )

Viśva Vidyālava Prakāśan
CHOWK, VARANASI



श्री १०८ श्री सद्गुरु स्वामी गुरुचरणदास जी साहब

# समर्पणम्

कबीरपथप्रवराणाम्-

अस्मद्गुरूणां गुरुवर्याणाम्

गुरुचरणदासस्वामिपादानां

करकमलयोः

समर्पयति—

सदानन्दः

परमश्रद्धालुरयं श्रीमल्लालबहादूरसिंहतनयः श्रीमान् वासुदेवसिंहः ग्रन्थप्रकाशनेऽस्मिन्नर्द्धव्ययतुल्यं द्रव्यं सहाय्यं प्रदाय ममऋणमपाकरोत् ।

परम कारुणिको महामहिमा श्रीसद्गुरुः कबीरो जनमेनं पातु ।

अस्य वर्तमान निवासस्थानम्
शर्मा डेरी फार्म, अन्धेरी
३४६ स्वामी विवेकानन्द रोड
बम्बई ५८

# विषय-सूची

## द्वितीयोऽध्यायः



## तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः





अयं 'सदानन्दशास्त्री' 'हिन्दीकविकबीरसिद्धान्तस्याद्वैतवेदान्तेन सह साम्यम्' इतीमं विषयमधिकृत्यशोधप्रबन्धं सुचारु निर्मितवान्। अयञ्चाद्भुतः शोधप्रबन्धो यत्र एकादशयवनाः कबीराः सप्रमाणं सोपपत्तिकं दर्शिताः। इदानीं यावत्प्रायेणादृष्टपूर्वाः, एकश्च कबीरो हिन्दूजातीय आसीदिति दर्शितम्। तस्य च रचना वेदान्तानां साम्येन वर्णिता। एतस्य च सौष्ठवं गौरवञ्च अध्ययनेन विद्वांसो वेत्स्यन्ति इति किं बहुना प्रलापेन इति वेदयामि।

**पं० श्रीरघुनाथशर्मा**

अवकाशप्राप्त वेदान्त-विभागाध्यक्षः, सम्मानित
प्राध्यापकश्च, सं०सं०वि०वि० वाराणसी

॥ श्रीः ॥

श्रीकबीरमहात्मनो जीवनम् तथा तन्निर्मित साहित्यम्, इत्यादि विषयमवलम्ब्य वीतरागस्वामिसदानन्दशास्त्रिणा विरचिते 'हिन्दी-कविकबीरसिद्धान्तस्याद्वैतवेदान्तेन सह साम्यम्' इति नामके विस्तृते शोधप्रबन्धे संगृहीता विषया मया साकल्येनावलोकिताः। अनेन विदुषा विभिन्नप्रदेशस्थितेषु कबीरमठेषु तथानेकेषु राजकीय पुस्तकालयेषु गत्वा तत्र विद्यमानप्राचीन कबीरसम्बन्धिसाहित्यग्रन्थान् सपरिश्रमं विलोक्याद्यावधि न ज्ञातां सामग्री स्वप्रबन्धे समुपस्थाप्य तेषां भ्रमो दूरीकृतः, यैः स्वनिबन्धेषु कबीरचरित्रचित्रणावसरे बहुवंशे विरुद्ध-विचारः उपस्थापितः आसीत्।

कबीरमहात्मनो नैष्ठिकब्रह्मचर्यत्वं शास्त्रनिष्ठत्वं श्रीरामानन्दा-चार्यशिष्येषु मुख्यत्वम्, कबीरोपाधिधारिणामेकादशकबीरवर्णनम्-आदिविषया अनेन परिनिष्ठतविदुषा सप्रमाणं स्वनिबन्धे निरूपिताः सन्ति, यान् विषयेभ्य महतीं चमत्कृतिः जायते।

भाविशोधछात्रामनेन ग्रन्थेन महानुपकारः स्यादित्यत्र तु नास्ति स्वल्पोऽपि संशयः इति।

**मूलशंकरशास्त्री**

अवकाशप्राप्त वेदान्त प्राध्यापक
का०हि०वि०वि० वाराणसी

विद्यावैदुष्यविचक्षणेन श्रीमत्सदानन्दमहोदयेन हिन्दीकविकबीर-सिद्धान्तस्याद्वैतवेदान्तेन सह साम्यमिति विषयमुद्दिश्य सुग्रथितः शोधप्रबन्धः, तमेतं दृष्ट्वा महती प्रसन्नता सञ्जाता।

सर्वसम्प्रदायेष्वभेदभावप्रतिपादकस्य महापुरुषस्य कबीरमहाभागस्य सार्वदैशिकाद्वैतभावस्तु हिन्दीसाहित्यजगति सुप्रथित आसीत् किन्तु संस्कृतभाषायामेतद्विषयस्याध्ययनं, समीक्षणं विवेचनं च न केनापि महानुभावेनायासितम्। अस्मिन् प्रबन्धे उपर्युक्तविषयस्य कृते ये विचारणीयाः विषया आसन् तेषां सर्वेषां युक्तियुत्या सप्रमाणं निर्वचनं ग्रन्थकारेण महत्कौशलतया समनुष्ठितम्। अतः श्रीमत्सदानन्दमहाभागास्तु सर्वथाऽभिनन्दनीयाः धन्यवादार्हाः। तेषामुत्तरोत्तरसाहित्यचर्चां मुदा सुहृदा कामये।

आचार्य सीतारामचतुर्वेदः

'आईने अकबरी'—'खुलासातुत्तवारीख'–'दबिस्ताने मज़ाहिब'–"ख़ज़ीनतुल अस्फ़िया'–इत्याद्याख्यातेषु प्रख्यातेषु पारसीकग्रन्थेषु तदाश्रितेषु विविधभाषाप्रबन्धेषु च देशकाल,जातिभेदभिन्ना भूयांसः कबीरदासाश्चर्चिताः। तथैव चर्चावल्योपप्लाविता वाराणसेयस्य भगवतः कबीरदासस्य जीवनी सञ्जीवनीव जीवातुप्रतिकृत्या वनस्पतिसंहत्या। तेन परश्शता भ्रमा बभूवुः, तान् सर्वान् समूलकाषं कषितवानयं तत्त्वगवेषणपरायणः सदानन्दः स्वामी। अपि च गुरूणां सङ्कुलानीव वचांसि समुचितं विवेचयन्नद्वैतनिष्ठानीति निगमयति। गीर्वाणवाण्यामयं प्रथमः शोधप्रबन्धोऽद्भुतोऽतोऽयं "स तु विशेषदुर्लभः" इति नीतिमनुहरतीव भृशं प्रशंसाभरमर्हति स्वामिवरः।

वेदकः

उदासीन सं० विद्यालय
वाराणसी

स्वामी योगीन्द्रानन्दः
न्यायाचार्यो मीमांसातीर्थश्च
१०-३-८३

श्रीमत्स्वामिसदानन्दशास्त्रिणा लिखितः शोधप्रबन्धः मयावलोकितः। शोधकार्यं अतीवधैर्यस्य व्यापारः समयार्थसाध्यश्च। अस्मिन् देशे बहवो शोधार्थिनः विविधविषयस्य शोधकार्ये संलग्नाः भवन्ति, किन्तु सत्वरं शोधोपाधिं सम्प्राप्य जीविकोपार्जनमेव तेषां मध्ये अधिकांशस्योद्देश्यं न तु विषयेन सह न्यायः। श्रीमत्सदानन्दशास्त्री सद्गुरुकवीरमतानुयायी विरक्तः पुरुषः जीविकायाः समस्या नास्ति। दर्शनतर्कव्याकरणादिविषयेषु तस्याबाधगतिः। भारतवर्षस्थानेकान् कबीरमठान् गत्वा तेन अनेकानां समृद्धानां पुस्तकालयानां ग्रन्थराशिमालोड्य अत्यध्यवसायेन सामग्री सङ्कलिता। अतिधैर्येणस्थैर्येण च लिखितः अयं प्रबन्धः। तस्य प्रबन्धस्य श्रेष्ठतायाः इमे केचिद् हेतवः।

अस्मिन् प्रबन्धे तेनानेकत्र परम्परात्यागपूर्वकं आधुनिकशोधस्य वैज्ञानिकदृष्ट्या विचारितम्। अनेकाः निष्कर्षाः निष्कासिताः। ते विशेषरूपेण मननीयाः मनीषिभिः।

(१) श्रीकबीरस्य जन्मसंवत्सरं विद्वांसः १४५५ वैक्रमाब्दं स्वीकुर्वन्ति। किन्तु तेन त्रयोदशम् वैक्रमाब्दं निर्णीतम्।

(२) श्रीकबीरः आर्यमतावलम्बी कृषकगृहे जन्म लेभे। अभुक्तमूलनक्षत्रजन्मत्वाद् स लहरतारासरोवरे प्रक्षिप्तः।

(३) सः सर्वशास्त्रविशारद आसीत्, न तु निरक्षरः।

(४) सः नैष्ठिकब्रह्मचारी, न तु गृहस्थः। कमालः अन्यस्य सूनुः यवनश्च।

(५) नास्ति तस्योपरि सूफीमतानुयायिनां वज्रयानिसिद्धानाञ्च प्रभावः।

अनेकाः नवाः स्थापना भाविशोधार्थिनां शोधार्थाय नवानि क्षेत्राणि प्रस्तवन्ति। अतीवसरलभाषा व्यवहृता। अल्पसंस्कृतज्ञोऽपि अस्य भावं ग्रहीतुं समर्थः। अनेकदृष्टिभिः श्रेष्ठोऽयं प्रबन्धः। यदि सर्वथा मुद्रणदोषाभावः, तदास्माकं देशस्य मुद्रणकलाया आश्चर्यम्।

श्रीमत्स्वामिसदानन्दशास्त्री अस्य प्रबन्धस्य लेखनार्थसाधुवादार्हः नास्त्यत्र विचारणा।

लक्ष्मीशंकरगुप्तः
एम्० ए०, पी-एच्० डी०
हिन्दीप्राध्यापकः
काशीविद्यापीठम्

## कृतज्ञता

विषमं विषयमधिकृत्य अनुसन्धित्सुरहं श्रीस्वामियोगीन्द्रानन्दशास्त्रिभिरुद्बोधितः विषयस्योपचित्यै तथ्यानां समाकलने च मुहुर्मुहुर्निर्दिष्टिः, तस्मात्तत्कृज्ञतां सततं स्मरामि।

विश्वविद्यालयस्य वेदान्तविभागाध्यक्षाणाम् पं० श्रीदेवस्वरूपमिश्राणामतितरां कृतज्ञोऽहं येषामनुमत्या विषयोऽयं स्वीकृतः अहञ्चानुसन्धानाय प्रेरितः। विश्वविद्यालयस्यानुसन्धानसंचालकमहोदयं प्रति कृतज्ञोऽहं येन यथासमयं कार्यार्थे प्रेरितः। दिल्लीस्थकेन्द्रीयशिक्षामन्त्रालयस्य राष्ट्रियसंस्कृतसंस्थानस्य च कार्यकर्तृणामध्यक्षः महोदयानां च कृतज्ञोऽहं, यैः सर्वकार्यसाधनं द्रव्यं प्रदाय अस्य निबन्धस्य पूर्तिः कृता।

पूज्यवरश्रीस्वामिहनुमद्दासशास्त्रिणोऽकारणकृपालवोऽतिश्रद्धया स्मर्यन्ते यैः तथ्यानां स्फोरणे विषयपरिशीलनशैली उपदिष्टा।

स्वर्गीयाणां प० कमलाकान्तमिश्राणामधमर्णोऽहं यैः स्वकीयेन मार्गनिर्देशेनानुगृहीतोऽयं जनः। दिवङ्गतेषु च तेषु मान्यानां पण्डितप्रवराणां श्रीरघुनाथशर्ममहाभागानां निर्देशकत्वे ग्रन्थोऽयं पूर्णतामगात्। तैश्चाहं स्वकीयेऽभिजनेऽमूल्यनिर्देशनं दद्भिः नितरामुपकृतः।

मान्याः पण्डितवराः श्रीलालबिहारिमिश्राः, प० श्री मुरलीधरपाण्डेयाः श्रीहरिश्चन्द्रमणित्रिपाठिवराश्च मया विस्मर्तुं न शक्यन्ते यैः स्वकीयैरमूल्यैः, निर्देशैरनुगृहीतोऽहम्।

अन्ते सकलानपि विदुषः स्मरामि यैरुपकृतोऽहं शोधप्रबन्धमिमं उपस्थापयामि। पटनामण्डलान्तर्गत 'फतुहा' आचार्यपीठान्तर्गतमठेभ्यस्तथा वाराणसी स्थितशोधछात्र सुविधार्थनिर्मितात् श्रीसद्गुरुकबीरहनूमत्पुस्तकालयात् अस्य ग्रन्थस्य प्रकाशने मया स्वल्पमपि सहायं सौविध्यं वा न प्राप्तमिति मम चेतसि महद्दुःखमस्ति। किन्तु प्रकाशने पूज्यमहन्तश्रीशान्तिदासमहाराज साहब-संस्थापिते श्रीकबीरकीर्तिमन्दिरे सर्वसुविधा प्राप्ता। धन्यवादार्हैः श्रीश्यामदास शास्त्रिमहोदयैः, प्रूफ' संशोधने स्वामूल्यश्रमसमयौ प्रदत्तौ। श्रीजवाहररामभौर्यमहोदयाः अविस्मरणीयाः, यैः स्वकार्ये व्यस्तैरपि 'प्रूफ' संशोधने स्वसमयः प्रदत्तः।

अस्मिन् ग्रन्थमुद्रणे संशोधने चातिसावधनता कृतेऽपि यत्र तत्र त्रुटिर्दृश्यते, द्वितीयसंस्करणे तस्याः संशोधनं भविष्यति।

लेखकः

(स्वामिसद्गुरुनन्दः)

# अवतरणिका

प्रवृत्तिबीजम्:—

१९६५-६६ ईसवीये वर्षे शास्त्रिकक्षायामधीयानेन मया डा० हजारीप्रसाद-द्विवेदि-परशुरामचतुर्वेद-डा० रामकुमारवर्मप्रभृतिलेखकानां ग्रन्था अधीताः; तेषु च श्रीसद्गुरुकबीरस्य जन्मस्थानसिद्धान्तसमाधीनां विषये बहूनि कल्पितानि ह्यपुष्टानि च प्रमाणान्युपलब्धानि। लेखकैः 'किंवदन्ती जनश्रुति' इत्यादिभिः शब्दैः तथ्यानामवहेलनमक्रियत। श्रीकबीरस्य स्त्रीपुत्रादिविषये मतभेदान् दृष्ट्वा मया तत्त्वान्वेषणं प्रतिज्ञातं विशेषतश्च जिज्ञासितमिदं यत् साम्प्रदायिकाः परम्परातः श्रीसद्गुरुभिः सम्बद्धाः श्रीकबीरं पुत्रदारादिरहितं स्वीकुर्वन्ति। किन्तु लेखकाः श्रीसद्गुरोः स्त्रीपुत्री 'लोई कमाल' नामानी वर्णयन्ति। मते इमे च परस्परविरुद्धे। सम्प्रदायानुसारित्वात् मयाऽपि सम्प्रदायस्थितं मतं स्वीक्रियत एव, अतः लेखकानां मतानां सत्यत्वासत्यत्वविचारार्थं यतितम्। श्री सद्गुरोः 'साखीग्रन्थे नारी अङ्ग' इति शीर्षके यादृशी निन्दा नारीसंगतेः कृता वर्तते, तदध्ययनेनाध्येतुः घृणासमुज्जायते। अतः "श्रीसद्गुरुः दारपरिग्रहं कृतवान्" इति स्वीकर्तुं न शक्यते। किन्तु श्रीसद्गुरोः दारपरिग्रहविषये प्रचलितानां मतानामाधारभूतानां प्रमाणानां विवेचनं विना असत्यत्वप्रतिज्ञया स्वमतसिद्धिर्भवितुम् नार्हति। अतोऽस्मिन् शोधकार्ये प्रवृत्तोऽहम्।

श्रीसद्गुरुकबीरस्य वाणीषूपलब्धानां रहस्यानां सम्यग्विवेचनाभावे तेषां स्वरूपं तिरोहितमिवासीत्। रहस्यवादेऽस्मिन् वेदान्तसिद्धान्तानामद्भुतं समीक्ष्य साम्यं मम मानसं चकितमभूत्, श्रीसद्गुरोरद्वैतमतानुसारित्वं सुनिश्चितम्। उपनिषत्सु अन्यवेदान्तग्रन्थेषु चोपलब्धाः वेदान्तसिद्धान्ताः सद्गुरोः वाणीषु अविभक्तरूपेणोपलब्धाः। अतोऽद्वैतसिद्धान्तेन सह श्रीकबीरसिद्धान्तस्य समन्वयः कर्तव्य इति मम मनसि आयातम्।

## विषयप्रवेशः

अयि ! सम्माननीया नीरक्षीरविवेचननिपुणा गीर्वाणवाणीसमुपासकाः साधकवरेण्या विपश्चिदग्रेसराः सहृदया विद्वांसः !

नाविदितमस्ति तत्र भवतां 'यत्प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति विधिपरम्परया प्रख्यापितेन नियमेन श्रीसद्गुरोः कबीरस्य (भाषा-साहित्ये चर्चितस्य साधुशिरोमणेः) विषये कृतमिदमनुसन्धानं विविधभ्रान्तिनिवारकं समुज्ज्वलं प्रदीपनमस्ति ।

अपि च विदाङ्कुर्वन्त्वेव तत्र भवन्तो भवन्तः 'सन्त' साहित्येतिहासविदः समालोचका, यतस्तच्छास्त्राचार्याः सम्प्रदायप्रवर्तकाः सन्त विविधविद्याविभूषिताः प्राचीनाः लेखकाश्च स्वेषु ग्रन्थेषु स्वपरिचयात्मकं विवरणं याथातथ्येन न ददुः । यच्चापि क्वापि चर्चितमपि तदप्यकिञ्चित्करमेव । इदमेव कारणमस्ति यत् सतां प्रामाणिकं विवरणं नोपलभ्यते । यदि क्वापि किमप्युपलभ्यते तदेव दृष्ट्वा सन्तोषमावहन्ति पण्डितमानिनो जनाः । वैज्ञानिकेऽस्मिन् युगे सर्वं कार्यं वैज्ञानिकमेव भवति, तदनुसारेण च प्रस्तुतेऽस्मिन् प्रबन्धे नानासाक्ष्यमवलम्ब्य श्रीसद्गुरोः कबीरस्य प्रामाणिकं विवेचनं कृतमस्ति ।

श्रीसद्गुरुकबीरस्य संक्षिप्तः परिचयः—

प्रादुर्भावकालः – प्राचीनेतिहासलेखकानां मते सद्गुरुकबीरस्य जन्मकालः प्रादुर्भावकालो वा वैक्रमाब्दः सं० १४५५–५६ इत्येव निर्धारितोऽस्ति । अस्त्यस्मिन् विषयेऽनेकेषां तर्कवितर्काणां प्रमाणानाञ्चैकपत्यम् । एतेषां समेषामाधारभूतमेकमेव पद्यं साक्षीभूतमस्ति । तत्पद्यञ्च यथा—

चौदह सौ पचपन साल गए, चन्द्र वार इक ठाठ ठये ।
जेठ सुदी बरसाईत को पूरनमासी प्रकट भये ।।
—कबीर कसौटी, पृ० ६ ।

किन्तु प्रस्तुतं पद्यमिदमपूर्णमिव प्रतिभाति । यतो हि 'बरसाइत (वटपाविश्री) पूर्णिमा च न कदाप्येकदा भवतः । विभिन्नलेखकैः कृतगणनया खण्डितं मतमिदम् । पद्यञ्चेदं केनापि स्वार्थिना कविना कृतमस्ति । काश्यामपि दाक्षिणात्यैस्तु ज्येष्ठशुक्लपौर्णमास्यामेव वटसावित्रिव्रतमनुष्ठीयते । अतो न तत्र सन्देहकारणं विद्यते इति केषाञ्चिन्मतम् ।

ये चापि श्रीधर्मदासस्यानुयायिनः परमभक्ताश्च सन्ति ते श्रीकबीरं श्रीधर्मदासञ्च समकालिकं कल्पयन्ति। तदनुयायिनां विद्यमानलेखकानां श्रीमुक्तदासानामेकस्मिन् पद्ये श्रीसद्गुरुकबीरमहापुराणे १३५६ वैक्रमसम्वत्सरं प्रादुर्भावकालो वर्णितः। अन्येषामपि केषाञ्चित् मतमुद्धृतं यच्छ्रीसद्गुरोः प्रादुर्भावकालः १३५६ वि० अस्ति। अनन्तरं सप्रमाणं विवेचितं यच्छ्रीसद्गुरुकबीरः श्रीनामदेवस्य श्रीज्ञानेश्वरस्य च समकालिको विद्यते। मयाऽस्मिन् प्रबन्धे त्रयोदशशताब्द्या अन्तिमेंऽशे श्रीसद्गुरोः कबीरस्य प्रादुर्भावकालः सम्भावितः। श्रीस्वामिरामानन्दस्य प्रादुर्भावकालः केनापीतरस्ततः कृत इत्यपि तथैव विवेचितम्। श्रीस्वामिरामानन्ददिग्विजयनामके ग्रन्थे यच्छ्रीस्वामिरामानन्दस्य प्रादुर्भावकाल उट्टङ्कितः सोऽपि काल्पनिक एव। मया पृष्टस्तल्लेखकमहानुभावः स्वीकृतवान् यन्मया श्रीस्वामिरामानन्दस्य श्रीकबीरसाहबस्य च यौ जन्मकालौ मया लिखितौ, तयोः किमपि मत्पार्श्वे प्रमाणं नास्ति।

जन्मस्थानम्—श्रीसद्गुरुकबीरस्य जन्मभूमिविषये विभिन्नानि मतानि सन्ति। अस्मिन् ग्रन्थे तानि मतानि उद्धृत्य खण्डितानि, विभिन्नैश्च प्रमाणैः सद्गुरोर्जन्मभूमिः 'काशी' समर्थिता, भविष्यपुराणस्य आधार एव सम्यक् प्रतिभाति।

मतभेदस्य एकेन कारणेन भूयते। वस्तुतो द्वादशकबीरा अभवन्। वेस्टकाटमहोदयेन एकादशानां कबीराणां तथा खुलासातुत्तवारिखग्रन्थेन एकस्य कबीरस्योल्लेखो कृतः। एतेषु द्वितीयः, षष्ठः द्वादशश्च कबीर एक एव प्रतीयते। अतः त्रयाणामपि नामगुरुपाधीनां, सिकन्दरेण सह मेलनस्य, काशीनिवासस्य सूफीसिद्धान्तानुयायितायाश्च साम्यमुपलभ्यते। त्रयाऽपि हिन्दीकवितायाश्च रचयितारः सन्ति। अत एव कबीरपन्थपथिकानां लेखकानां च भ्रमो भवति। एवमेव विधवाब्राह्मणीपुत्रस्य, मुसलिमतन्तुवायोसरपुत्रस्य च खण्डनं कृत्वा, मानवतायाः पोषकस्य श्रीसद्गुरुकबीरस्य हिन्दूकृषकगृहेऽभुक्तमूलनक्षत्रे जन्म प्रतिपादितम्। लहरतारासरोवरे प्रक्षेपस्य ततः प्राप्तिकारणेन मूलनक्षत्रेणैव भूयते।

गुरुदीक्षा—अस्य महाभागस्य दीक्षागुरवः श्रीस्वामिरामानन्दचरणा आसन्नित्यत्र न वैमत्यम्। शिक्षा सम्बन्धे भ्रमः समेषामेव लेखकानामभवत्।

तस्य भ्रमस्य निराकरणाय चेष्टाऽक्रियत। अपठितव्यक्तिः जाज्वल्यमानं 'बीजकं' ग्रन्थं नैव लेखितुं पारयति। यथा श्रीस्वामिरामानन्दचरणानां शिष्या द्वादशापि सर्वशास्त्रपारङ्गता आसान् तथा सद्गुरुकबीरोऽपि सर्वशास्त्रनिष्णात आसीत्। अत एव शास्त्रार्थावसरे गुरुचरणाः श्रीकबीरमेवाग्रेसरं कुर्वन्ति स्म। यथा–

'रामानन्द के फौज में सम्मुख लड़े कबीर'। इति।

अत एवानेकेषु स्थलेषु मन्त्रब्राह्मणोपनिषत्पुराणानां श्रीकबीरकृता अनुवादा भावार्थाश्च पुस्तके दृश्यन्ते। अस्मिन् निबन्धे तु तत्स्वल्पः परिचयो विहितः।

पारिवारिकजीवनम्—श्रीसद्गुरुकबीरो नैष्ठिको ब्रह्मचारी आसीत्। किन्तु विभिन्नैर्लेखकैर्भ्रमवशात्तस्य स्त्रीपुत्रपुत्रीणां कल्पना कृता। वस्तुतस्ते अन्ये एव कबीरा आसन्, ये गृहस्था आसन् यवनधर्मानुयायिनश्चासन्। बहूनि स्थानानि पर्यटता मया अनुसन्धानाय सद्गुरोः श्रीकबीरस्य तथ्यं विलोक्य गृहस्थता खण्डिता। यथा–'कमालः' श्रीसद्गुरुकबीरस्य पुत्रः शिष्यश्च बहुभिः लेखकैः स्वीकृतः। किन्त्वयं 'कमालः' कश्चिदन्यस्य शेखकबीरस्य शिष्य आसीद् यो 'मालवदेशे' जन्म लेभे। ततोऽहमदाबादं गत्वा परकार्थम् ईश्वरभजनस्योपयोगं करोति स्म, अत एव तं 'शाह आलमः' स्वशक्त्याहूतवान्। अस्य कमालस्य पूर्णनाम 'शेखपीरकमालमालवी' आसीत्। स 'मालवा नवाब-मुहम्मद खिलजी' समकालिक आसीदितिज्ञातवान्।

श्रीसद्गुरुकबीरस्य भ्रमणम्—विभिन्नैः प्रमाणैः सद्गुरोः श्रीकबीरस्य भ्रमणं समग्रे भारतवर्षेऽभवदिति निबन्धेऽस्मिन् प्रदर्शितम्।

उपदेशप्रणाली—श्रीसद्गुरुकबीरस्योपदेशप्रणाली विश्वप्रथिताऽस्ति स पाखण्डं खण्डयित्वा सत्यमार्गमुपदिशति स्म। रामनाम्नि तस्य दृढो विश्वास आसीत्। अतस्तस्योपदेशेऽद्वैतज्ञानेन मुक्तिः, संसारस्य मिथ्यात्वं, मुक्तेः साधनं भक्त्यादि च पदे-पदे दृश्यते।

समाधिस्थानम्—विभिन्नैः लेखकैर्विभिन्नानि समाधिस्थानानि निर्दिष्टानि, किन्त्वस्मिन् निबन्धे 'मगहरग्राम' एव श्रीकबीरस्य समाधिस्थानत्वेन प्रदर्शितः।

श्रीकबीरस्य रचनापरिचयः—श्रीसद्गुरुकबीरस्य रचनासु 'बीजक-ग्रन्थस्य प्रामाण्यं सर्वोपरि वर्तते। अत्र समेषां विपश्चितां सम्प्रदायविदां च

संवादः। अन्येषु त्रिषु ग्रन्थेषु (श्रीकबीरग्रन्थावलीसाखीग्रन्थशब्दामृतसिन्धुषु प्रक्षेपांशः सम्भाव्यते। स च नीरक्षीरन्यायेन मिलितोऽस्ति। अस्य विवेको हंस इव कश्चिद् विपश्चिदेव विधातुं शक्नोति, निबन्धेऽस्मिन् संक्षिप्तनिकषोऽपि प्रदर्शितः।

नागरीप्रचारिणीसभया तथा अन्यैः लेखकैश्च चत्वारिंशदधिकशतं ग्रन्थाः कबीरनाम्ना प्रख्यापिताः। चतुरो ग्रन्थान् विहाय सर्वे तेऽन्यकृता इति प्रमाण-पुरस्सरं प्रदर्शितम्। विभिन्नसम्प्रदायानां विवेकशीलविदुषामन्वेषकानाञ्च सम्मतयः प्रदर्शिता, यत् सम्वादात्मकाः सर्वे ग्रन्थाः अन्यकृताः सन्तीति। एवमेव श्रीकबीर-जीवनचरित्रसम्बन्धिन उपन्यासपद्धत्या लिखितस्य ग्रन्थस्य निबन्धेऽस्मिन् स्थानं न प्रदत्तम्।

बीजके ग्रन्थे एकादशप्रकरणानि सन्ति, तेषु एकादशस्वपि विभिन्ना रागा विभिन्नाश्च रीतयः सन्ति। एतदपि दर्शितं यद् बीजकस्य प्रतिपाद्या विषयाः श्रुतिस्मृतिपुराणभिन्ना न सन्ति।

श्रीसद्गुरुकबीरसमये प्रथिताः मतवादाः—

श्रीसद्गुरुकबीरपद्ये जङ्गम-शैव-वैष्णव-तपस्वि-विभूतिधारि-संन्यासि ज्ञान-मार्गि-देवतादेवीपूजक-व्रतोपवासवादिनां नामान्यायान्ति। एतेषां हेयत्वमुपन्यस्य रामनामजपेन मलविक्षेपविभ्रमनाश आत्मज्ञानेन च मुक्तिः प्रदर्शिता। पाख-ण्डिनो धूर्ताऽवधूताश्चोपालभ्यन्त।

श्रीसद्गुरुकबीरग्रन्थेषु साधकसमूहः—

श्रीकबीरकृतरचनासु द्वौ सम्प्रदायौ प्रदर्शितौ – (१) साधकसम्प्रदायः, (२) ज्ञानिसम्प्रदायश्च। आद्यः सम्प्रदायोऽतिप्राचीनस्तथापरः सम्प्रदायोऽर्वा-चीनोऽस्ति। आद्ये तु शिव-पार्वती-नर-नारायण-सनकादिसदृशानां देवानां नामान्यायान्ति, अर्वाचीने श्रीगोरखनाथमारभ्य श्रीकबीरसमकालिकानां नामदेवादीनां नामानि मिलन्ति। एतेषां केचन सम्प्रदाया श्रेयस्त्वेन केचन न श्रेयस्त्वेनापन्यस्ताः। अनेनापि सिध्यति यच्छ्रीसद्गुरुकबीरस्य पुराणाभिज्ञत्वं पूर्णतयाऽऽसीदिति।

श्रीसद्गुरुकबीरस्य स्वमतविवेचनम्—

अस्मिन् प्रकरणे विभिन्नानां लेखकानां विभिन्नानि मतानि प्रदर्शितानि।

केचन कथयन्ति यच्छ्रीकबीरो बुद्धानुयायी, केचन यदयं नाथपथपथिकः, केचन सूफीमतानुयायी, केचन शाङ्करमतानुयायी, केचन च स्वच्छन्दचारीति कथयन्ति । एतेषां सर्वेषां भ्रमः श्रीसद्गुरोः कबीरस्य शब्दैरेव सप्रमाणैः खण्डितानि सन्ति ।

सैद्धान्तिकपरम्परा—द्वितीयेऽध्याये श्रीस्वामिरामानन्दमहाभागस्य सिद्धान्तस्य संक्षिप्तः परिचयः, तदध्ययन-योग्यता-योगविद्याप्राप्ति-यौगिकशक्त्यादिः, अधिकार्यनुसारेणोपदेशदातृता चादीयन्त ।

श्रीसद्गुरुकबीरमहाभागः श्रीस्वामिरामानन्दस्य शिष्य आसीदित्यस्मिन् तथ्ये श्रीकबीरपद्यानि प्रमाणत्वेनोपन्यस्तानि ।

सम्प्रदायसम्मता श्रीकबीरशिष्यपरम्परा—

लोकप्रचलितकथाभिः, विभिन्नसम्प्रदायस्थैः लेखकैः, भक्तैः, मठैश्च कल्पितानां शिष्यपरम्पराणां विवेचनमत्राक्रियत । अस्मिन् विषये प्राक्तनानां लेखकानामनुमतिरप्युद्धृता । येषु सम्प्रदायेषु श्रीकबीरसिद्धान्तस्य प्रभावो दृश्यते तेषां नामानि परिगणितानि ।

श्रीसद्गुरुकबीरस्याद्वैतवादत्वे किं मूलमित्यस्य विवेचनम् । श्रीकबीरस्याद्वैतवादितायामपि संक्षिप्तविचारोऽक्रियत । श्रीसद्गुरुकबीरोऽद्वैतवेदान्ती वैदिक आसीत्, न त्ववैदिकः इत्यस्मिन् विषये प्रमाणानि उपन्यस्तानि ।

श्रीसद्गुरुकबीरप्रदर्शिता नामोपासना वैदिकीं पौराणिकीं च रीतिमनुसरति । किन्तु लेखकैः प्रमादवशात् पाश्चात्यजगतः सूफीसम्प्रदायस्य च प्रभावोऽमन्यत, अतस्तस्य भ्रमाः निरस्ताः ।

अवैदिकप्रसङ्गे तु ये ब्राह्मणाः उन्मार्गिण आसंस्तेषां श्रीकबीरेण स्पष्टतया बीजकेऽऽलोचना विहिता । ये वेदशास्त्रमतस्यावहेलनां कृत्वा स्वार्थसाधनाय परान् वञ्चयन्ति स्म, तेषां निन्दा श्रीसद्गुरुणा कृता । एवञ्चानेन कर्मणा श्रीसद्गुरुणा भारतीयधर्मस्य रक्षा कृता ।

तदानीं ब्रह्मविद्यां भगवद्भक्तिमात्मकल्याणमार्गं चापहाय भूतप्रेतानां पूजाप्रारब्धासीत् । प्रायः स्वस्वधर्मान् अपहायोन्मार्गिण आसन् । श्रीसद्गुरुकबीर एवंविधानेव सर्वान् जनान् कटुशब्दैः समबोधयत् । इमे मायाऽनुयायिनो जीवनस्य लक्ष्यं कर्ममात्रं स्वीकुर्वन्ति स्म । माया एतादृशान् जनान् जन्ममृत्युराशौ

बध्नाति । अतः सर्वेषां कृते सद्गुरुकवीरेण सन्मार्गो दर्शितः । अस्मिन्नेव प्रकरणे निगमागमविरोधिनां यवन-चार्वाक्-जैन-बौद्धमतानां संक्षेपेण खण्डन दर्शितम् । वस्तुतस्त्वेषु, कतिपये एतादृश आसन् ये वैदिकधर्मस्तु दूरे तिष्ठतु, स्वस्वसिद्धान्तमपि सम्यङ् न परिचिन्वन्ति स्म. तं प्रति श्रीसद्गुरुणा मार्गः प्रदत्तः ।

अस्मिन् प्रकरण उद्धृतैः पद्यैः तेषामपि निराकरणं विहितं ये श्रीकवीरं सूफीयवनसिद्धान्तानुयायिनं कथयन्ति । ये च श्रीकबीरं पीताम्बरपोरसूफीमहोदयस्यानुयायिनं मन्यते तेषां भ्रमोच्छेदोऽप्यस्मिन् प्रकरणे विहितः ।

श्रीमद्गुरोः कबीरात् प्रागद्वतवेदान्तस्य हिन्दीकविता नोपलभ्यते । यदि सम्भाव्यते तदा सा समकालिकी एव भवितुमर्हति । अद्यावधि श्रीकबीरोऽद्वैतवादस्य हिन्दीकवितायाः आदिलेखकः 'सन्त' मतस्य च प्रवर्तक आसीदिति मन्तुं शक्यते ।

श्रीकवीरवादस्वरूपस्य वेदान्तेन सह तस्य साधर्म्यवैधर्म्ययोरालोचनम्

इदं शोधप्रबन्धस्य हृदयमस्ति । इतः प्रभृति श्रीमद्गुरोः कबीरस्य बहिरङ्गं दर्शनमासीत्, बहिरङ्गेऽपि दर्शने अनेका भ्रान्तयः आसन्, तासां निराकरणाय मया सम्पूर्णभारतस्य प्रसिद्धेषु ग्रन्थालयेषु प्रसिद्धेषु स्थानेषु च भ्रमणं कृतम् । अस्मिन्नध्याये वेदान्तसिद्धान्तस्य श्रीसद्गुरोः कबीरस्य सिद्धान्तस्य च समन्वयो विद्यते । अस्मिन्नध्याये षट्प्रकरणानि सन्ति—

१—मायास्वरूपं तत्कार्यस्वरूपञ्च ।
२—जीवस्वरूपविमर्शः ।
३—अध्यासस्वरूपम् ।
४—प्रपञ्चस्य मिथ्यात्वम् ।
५—परतत्त्वस्य स्वरूपम् ।
६—चिदात्मरूपस्य ज्ञानस्य स्वप्रकाशत्वम् ।

मायाया यल्लक्षणं शास्त्रेषु मिलति—'अनादिभावरूपं यद् विज्ञानेन विलीयते' तच्छ्रीसद्गुरुकबीरेणाप्युक्तम्—'माया महा ठगनी हम जानी' (बीजक शब्द २) इति पदे निगमागमेषु मायाया यत्स्वरूपं वर्णितं तद्राष्ट्रभाषायां सुबोधसरण्या श्रीसद्गुरुकबीरेणापि स्थापितम् ।

परमार्थवस्त्वात्मज्ञानमस्ति, किन्तु प्राय: जना एतद् विमुच्य मायिकपदार्थाननुधावन्ति । अतः सद्गुरुणा मायायास्तथा तत्कार्याणाञ्च मिथ्यात्वं दर्शितम् । श्रीसद्गुरुणा सा माया मोहिनी रूपा, शक्तिरूपा निर्दिष्टा । वेदान्ते या माया अनिर्वचनीयोच्यते सा श्रीकबीरेण 'अकथ' शब्देन व्यपदिष्टा । क्वचन श्रीसद्गुरुणा रूपकैः क्वचन च कूटशब्दैर्मायाया अनेकानि नामानि विहितानि । माया दुरत्यया भवति । सा केन प्रकारेण संसारिजनान् वञ्चयतीति, वञ्चिताः वराका न जानन्ति । महान्तः शूरा, वीरा ज्ञानिनोऽपि मायया वञ्च्यन्ते । वञ्चिताश्च भूत्वा मार्गभ्रष्टा भवन्तीत्यस्मिन् प्रकरणे दर्शितम् । केवलं ज्ञानिन एव अनया मुच्यन्ते । वाचिकेन ज्ञानेन न काचित् सिद्धिः, अनुभवमन्तरा शास्त्रज्ञानमपि न कार्यवाहीति सद्गुरुणा सरलभाषया प्रदर्शितम् । इदमेव वस्तु निगमागमेषु दुरूहतयोपेतम् ।

जीवविषयेऽद्वैतवेदान्तस्यैव सिद्धान्तः श्रीसद्गुरोः कबीरस्य शब्दैर्निसृतः । वेदान्तस्य सिद्धान्तोऽस्ति— 'स प्रथमो जीवो बभूव'

'एकोऽहं बहुस्यां प्रजायेय'

अयमेव राद्धान्तः श्रीसद्गुरुकबीरस्य शब्देषु दृश्यते—'जीवरूप एक अन्तर वासा, (बीजक रमैनी १)इति । बीजकस्य रमैनीप्रकरणस्यारम्भोऽनयैवोक्त्या अभवत्, तथा 'ये जीयरा तैं दुःखहि सम्भाइ' अनयान्तिमरमन्या जीवशब्दपूर्वक एवोपसंहारो विहितः । अयं पाठः फतुहास्थे श्रीसद्गुरुकबीरमठपाठे उपलभ्यते । अत्रत्यः पाठः अन्येषां मठानां पाठेषु प्रकरणबद्धतमः, क्रमबद्धतम नास्ति । अतः फतुहामठस्थो 'बीजक' पाठ एव मया समादृत आधारीकृतश्च । यद्यपि कस्मिन्नपि पाठे बीजके रमैनीशब्दसाख्यादिषु शब्दभेदो नास्ति तथापि क्रमभेदो वर्तत एव ।

जीवस्वरूपज्ञानानन्तरमेव तस्य बद्धतायाः मुक्ततायाश्च प्रश्न उदेति । अस्मिन् प्रबन्धे प्रथमं बद्धजीवस्य स्वरूपं प्रदर्शितम् । कर्तृत्व-भोक्तृत्व-भय-क्रोध-राग-द्वेषाभिमान-भ्रम-सुख-दुःखादयो धर्मा बद्धजीवे दृश्यन्ते । इमे धर्मा ब्रह्माणमारभ्य कीटपतङ्गादियोनिपर्यन्तं न्यूनाधिकभावेन विभाव्यन्ते ।

यदा जीवो विवेकमङ्गीकृत्य स्वस्वरूपं विचारयति गुरुकृपया चात्मज्ञानं प्राप्नोति तदैव मुक्तो भवति । यदा मनसः विक्षेपमालिन्ये तिरोहिते भवतः ।

भयं पलायते, अपकर्षोत्कर्षेच्छातृष्णादीनि न दृश्यन्ते, आत्मा परमात्मरूपं प्राप्य तदाकाराकारितो भवति। तदा ईश्वरजीवभेदो विलीयते।

अस्मिन् प्रकरणे जीवस्य भयहेतुर्विवेचितः। वस्तुतोऽज्ञानी एव जीवो बिभेति। आशातृष्णे दुःखदे। सूक्ष्मवासनयैव जन्ममरणयोः कारणेन भूयते। स्थूलमाया त्यक्तुं शक्यते, किन्तु सूक्ष्मातिसूक्ष्मवासना त्यक्तुमशक्या भवति। इयमेव चावागमनयोः कारणं भवत्यनयैव जीवो बद्धो भवति। कामादिवासना ब्रह्मज्ञाने ज्ञानिनामपि बाधिका इति श्रीसद्गुरुः कथयति।

वस्तुतो जीवस्य जन्ममरणादयो न भवन्ति। किन्तु स्वभिन्नां देहादिकल्पनां कृत्वा जीवो भ्रान्तो भवति। परमात्मा सर्वत्र व्यापकोऽस्ति, तमेकदेशिनं मत्वा यस्तस्य प्राप्तयेऽथवा स्वर्गादिसुखप्राप्तये विभिन्नानां कर्मयोगभक्तीनामनुष्ठानं विदधाति स एव बद्धो भवति-इति वेदान्तसिद्धान्तः। इममेवार्थं श्रीसद्गुरुः कथयति--

चातक कहा पुकारे दूरी, सो जल जगत रहा भरि पूरी।

यदास्मादज्ञानाज्जीवो जागर्ति तदा स्वरूपेऽवस्थितो भवति। उपनिषत्सु आत्मा रथिरूपेणोपन्यस्तः, श्रीसद्गुरुकबीरः तं 'यन्त्री' शब्देन गृह्णाति। यथा-'यन्त्री यन्त्र अनुपम बाजे' इत्यादि। एवमेव सद्गुरुः रूपकोपन्यासेन साधारणजनवेद्येषु गेयेषु च पदेषु सरलभाषायामात्मपरमात्मनोरैक्यमजरामरतां च व्यपदिशत। अन्ये च जीवं सम्बोध्य तत्स्वरूपज्ञानमकारयत्। अथ अस्मिन् प्रकरणे मुमुक्षुजीवस्य स्वरूपं जिज्ञासुजीवस्य च स्थितिं निर्दिश्य अज्ञानात् संसृतिः परतत्त्वज्ञानाच्च मुक्तिरित्यदर्शयत्।

यद् वस्तु नाशवत्, परिणामि, परिणामे च दुःखदायि भवति, तन्मिथ्या भवति। संसारस्य सांसारिकवस्तुनश्चेयमेव दशा। अद्य विद्यते, श्वो नहि। यदद्य सुखमयं तद् श्वो दुःखमयं भवति। श्रीसद्गुरुकबीर एतेषां देह-गेहलोकपरलोकानां नाशवत्तां पदे-पदे प्रतिपादयति। मुहुर्मुहुश्चात्मानात्मनो विषये विचाराय जनान् सावहितान् करोति। प्रपञ्चस्य मिथ्यात्वप्रकरणे अयमेव विवेको मूलतया प्रतिपादितः।

सत्यासत्ययोरयं निर्णयो विवेकेन, विचारेण, सत्सङ्गेन, गुरुसान्निध्येन च प्राप्तुं शक्यते। आशा-रज्जुबद्धं जीवं तृष्णासर्पिणी अतीव संतापयति, तादृश्या-

मवस्थायां बुद्धिस्तपस्विनी किं कर्तुं शक्नोति ? अतः श्रीसद्गुरुकबीरः कथयति— "अये अभिमानिनो जीवाः, सत्कर्म कुरुत, नाम स्मरत, दुष्कर्म त्यजत, मनो मत्तो मातङ्गोऽस्ति, तत्संयमाङ्कुशेन संयतं कुरुत। धनयौवनादीनि नाशवन्ति सन्ति। अये मानवाः, सद्यः सावधाना भवत, अन्यथान्ते पश्चात्तापो भविष्यति। इदं शरीरं काकगृद्धशृगालादीनां भोजनं भविष्यति। अतो जीवाः, विचारं कुरुत। मिथ्यासंसारे कथमासक्ताः भवत ? एवं श्रीसद्गुरुकबीरस्य सिद्धान्ते जगतो मिथ्यात्वं सिद्धयति।

परतत्त्वज्ञानात् मुक्तिः तदज्ञानाद् बन्धनम् इति सर्वसम्मतं मतम्। तत्परतत्त्वं कश्चित् निर्गुणनिर्विकारनिराकारनिष्क्रियनिरव्ययसत्तारूपं परब्रह्मपदवाच्यं स्वीकरोति। श्रीसद्गुरुकबीरसिद्धान्ते तत्परतत्त्वं सर्वातीतमस्ति। यथा—

"अवधू छाड़हु मन विस्तारा।
सो पद गहहु जाहि ते सद्गति, पारब्रह्म ते न्यारा ।।" इत्यादि

वस्तुतः तत्परतत्त्वमविक्रियमस्ति। तस्य निर्गुणस्यापि ब्रह्मण उपनिषदादिषु यथा नामरूपकल्पना तथा कबीरसाहित्ये 'रामः, हरिः' इत्यादि नाम कल्पना कृता।

तदनन्तरमस्मिन् प्रकरणे एको भ्रमो निरस्तः। केचन कथयन्ति यच्छ्री-कबीरोऽपठित आसीदिति। अतो यत्किञ्चन एतस्य मनसि आगच्छत् तस्य गायनं तेन हिन्दीपद्ये निबद्धमिति। अस्य भ्रमस्य सप्रमाणं निराकरणं कृतम्। वस्तुत एतादृशमवाङ्मनसगोचरं तत्त्वं कश्चित् कथं कथयितुं शक्नोति ? कैश्चित् संकेतैरेव तस्य संकेतं कर्तुं पार्यते।

द्वैतभावं व्युदस्याद्वैतवादस्य मण्डनं श्रीसद्गुरोः कबीरस्य प्रधानमुद्देश्यमस्ति। अत्रानेके विद्वांसः संवदन्ति। एतद् वस्तु—डा० पीताम्बरदत्तबड्थ्वाल—डा० त्रिगुणायत्—डा० सरनामसिंहशर्मप्रभृतिभिः स्वस्वग्रन्थे उट्टङ्कितम्।

एतादृशमद्भुतं परतत्त्वं स एव प्राप्तुं शक्नोति, यः गुरुशुश्रूपुरस्ति। विरक्तस्तितिक्षुरप्रतिग्रही ध्यानयोगसमाधिमान् निरन्तरं च चिन्तनपरायणो विद्यते। इयमाधिकारितापि ईश्वर-गुरु-कृपातः सम्भाव्यते। सद्गुरोः कबीरस्य सिद्धान्ते ईश्वरे गुरौ च नाणीयानपि भेदः। आत्मानन्दस्योपलब्धिः समाध्यवस्थायां भवतीति विषयो मूकास्वादनवदकथनीयोऽस्ति——

कहा कहौं वा सुख की महिमा, ज्यों गुंगे गुड़ खायो ।

इयमनुभूतिरात्मनो भवति । आत्मा च स्वयं वाण्याऽविषयो निरवयवो निरिन्द्रियश्च । अतः कथनमात्रेण तदास्वादोऽज्ञाननिवृत्तिश्च न भवितुमर्हति—

'पण्डित वाद वदै सो झूठा' इत्यादि ।

उपनिषत्प्रतिपादितं 'सोऽहं, अहं ब्रह्मास्मि' इत्यनुभवगम्यं ज्ञानं श्रीसद्गुरुः 'हंस' शब्देन व्यनक्ति । यथा हंसः विविच्य क्षीरं गृह्णाति तथा साधकोऽपि नित्यमनित्यं च विविच्य सारं गृह्णाति, असारं च त्यजति । यथा—

सोहं हंसा एक समाना, काया के गुण आनहि आना । इत्यादि ।

पञ्चदशी इमामेव वार्तां धान्यपलालन्यायेन प्रतिपादयति ।

श्रीसद्गुरोः कवीरस्य खण्डनपरा वाण्यः कर्मकाण्डमात्रसंलग्नानां कामनाक्रान्तानां शुष्कबुद्धिवादिनाम्, आडम्बरासक्तानां ब्राह्मणानां कृते सन्ति, न तु सद्ब्राह्मणानां कृते । कामनाक्रान्तता, आडम्बरपरता, शुष्कबुद्धिवादिता च यत्र कुत्रापि सम्प्रदाये भवतु इमास्त्याज्या एव । अतः श्रीसद्गुरुकबीरो ब्राह्मणानामिव साधुसम्प्रदायिनामपि तथैव ओजस्वितया खण्डनं विहितम्—

माला पेन्हे टोपी पेन्हे छाप तिलक अनुमाना ।
साखी शब्दे गावत फिरै, आत्म खबर न जाना ॥

मुसलिमसम्प्रदायेऽपि या रूढिवादिता सद्गुरुणा ज्ञाता तस्या अपि खण्डनं तेन विहितम्—

कंकड़ पत्थर चूनि के मसजिद लिया बनाय ।
तिहि चढ़ि मुल्ला बाँग दे, क्या बहिरा हुआ खुदाय ॥
दिन को रोजा रखत हो रात कुहत हो गाय ।
यह तो खून वह बन्दगी, क्यों कर खुशी खुदाय ॥

हिन्दूधर्मः मूर्तिपूजां प्रथमसोपानत्वेन स्वीकरोति, किन्तु येऽनभिज्ञतया तां साध्यां मन्यते तान् प्रति सद्गुरोरियमुक्तिः —

पाथर पूजें हरि मिले, तो मैं पूजुं पहार ।
याते वह चक्की भली, जो पीस खाय संसार ॥

अत एव भक्तिरसमदमत्तानां महाभागवतानां गणना प्रसङ्गे श्रीसद्गुरुः कबीरः तं प्रह्लादमपि प्रेम्णा स्मरति यः प्रस्तराद् 'ब्रह्म' प्रकटयामास—

'ध्रुव प्रह्लाद विभीषण माते' इत्यादि।

अतः सद्गुरुणा केवलं पाखण्डस्य खण्डनं कृतम्।

अनुभवरूपं ज्ञानं स्वप्रकाशमस्ति। यद्वस्तु वाङ्मनसागोचरमस्ति, तद्वस्तु-विषये कर्गलक्लेखन्यादीनां का आवश्यकता?

नहिं कागज नहिं लेखनी, निःअक्षर है सोय।
पुस्तक छाड़ि जो बांचई, पण्डित कहिये सोय॥

तस्यानुभवगम्यस्य वस्तुनः शोभा अनिर्वचनोया अस्ति--

'कहवे कूं शोभा नहिं देखे ही परमान' इति।

यत्र सूर्यादीनां गतिर्नास्ति, तत्रेन्द्रियाणां गतिः कथं संभाव्येत? यस्य कृते तपांसि तप्यन्ते, श्रुति-स्मृत्यादयोऽधीयन्ते, वेदान्ता अवगाह्यन्ते, तदेव वस्तु श्रीमद्गुरुकबीर उपदिशति। तद्वस्तु सद्रूपमस्ति, स्वस्वरूपमस्ति, ज्ञानिनां कृते समीपतममस्ति, अज्ञानिनां च कृते दूरतममस्ति, 'दूरात्सुदूरे तद इहान्तिके च' इति। श्रीसद्गुरुः कथयति—

ज्ञान अमर पद बाहिरे नियरे ते है दूर।
जाने ताको निकट है, अनजाने को दूर॥

उपर्युक्ता विषया अस्मिन्नध्याये निरूपिताः।

परतत्त्वज्ञानमेवात्मज्ञानमात्मज्ञानाच्च मुक्तिः, मुक्त्याचावागमन सुखदुःख-विनिवृत्तिसहितात्यमन्दानन्दधारोल्लासः। अतो जिज्ञासा भवति किं स्वरूपा मुक्ति? इति। श्रीसद्गुरुः कथयति--

वाह वाह अमर घर पाया है।
दुःख नहिं दर्द काल नहिं व्यापे, आनन्द मंगल गाया है॥ इत्यादि

मुक्त्यवस्थायां हृदयस्य ग्रन्थयो भिद्यन्ते सर्वाश्च विपरीतभावना नश्यन्ते।

अस्मिन् प्रकरणेऽन्यस्योदाहरण भ्रमस्य निरासस्य प्रयासः क्रियते। स भ्रम आसीत् यच्छ्रीसद्गुरुकबीरो बौद्धसिद्धान्तं शून्यवादं स्वीकरोति स्म इति। वस्तु-तस्तु श्रीसद्गुरुकबीरः शून्यवादं निरस्य शब्दातीतं शुद्धचैतन्यं 'रामं' स्वीक-रोति। शून्यवादस्य निरासावसाने कथयति--

शून्य सनेही राम विनु, चले अपन पौ खोय।
मनमथ मरै न जीवई, जीवहिं मरण न होय॥ (बीजक रमैनी ८३)

सहज शून्य मन सुमिरते, प्रकट भई एक जोत।
बलिहारी ता पुरुष की, निरालम्ब जो होत ॥ (बीजक रमैनी ६)

निर्वाणशून्यशब्दप्रयोगमात्रेण नेमं बौद्धं कथयितुं शक्यते। श्रीसद्गुरुः कथयति यदस्य मुक्तिमार्गस्योपदेशः मादृशा महात्मानो युगेयुगेभ्यो ददति, किन्तु मोहासक्ताः पुत्रकलत्रादीनामासक्तिं नैव त्यक्तुं प्रभवन्ति। यथा—

'कहइत मोहि भेल युग चारि, मानत नाहिं मोर सुत नारी।' इति

आसक्तित्यागमन्तरा नैव मुक्तिः सम्भाव्यते। ये जनाः सद्गुरुमाश्रयन्ति ते मुक्ता भवन्ति। तदाऽहंता ममतैव नश्यति, परब्रह्मरूपश्च ते भवन्ति। यथा—

जब मैं था तब हरि नाहिं, अब हरि है मैं नाहिं। इति

जीवनमुक्तावस्थायां प्रारब्धमात्रं तिष्यति, अन्यानि कृत्स्नानि कर्माणि समाप्तानि भवन्ति। शरीराध्यासो नश्यति, षष्ठीभूमिकायाः वर्णनमस्मिन् प्रकरण उपन्यस्तम्। अन्ते सालोक्य-सायुज्य-सामीप्य-सारूप्य-नामभिः भिन्नानां मुक्तीनां मध्ये सारूप्यमुक्तेरपि सद्गुरोः शब्देषु नोपलभ्यते इति व्यपदिशत्।

चतुर्थाध्यायस्य द्वितीयेंऽशे मुक्तेरुपायाः निरूपिताः, अद्वैतवेदान्तेऽविद्या-निवृत्तिरेव मोक्षप्राप्तिः। सा च विद्यया संभाव्यते—'ऋते ज्ञानान् न मुक्तिः' इति सिद्धान्तात्। श्रीसद्गुरुकबीरसिद्धान्तेऽपि ब्रह्मज्ञानेन मुक्तिर्भवतीति प्रतिपादितम्। तत्प्राप्तये सरला उपाया अपि प्रदर्शिताः। श्रीसद्गुरुः तेषु नामजपः सरलतम उपायः कथितः। सत्सङ्गति-भक्ति-गुरुशरणागत्यादीनि साधनानि सद्गुरुः निर्दिशति। एतानि सर्वाणि श्रुतिस्मृत्युदितानि सन्ति। सद्गुरुः भक्तिं दुरापां कथयति—

भक्ति दुहेली राम की, जस खाँड़े की धार।
जो डोले सो कटि मरै, निश्चल उतरे पार ॥

किन्तु इमां भक्तिं सद्गुरुः साधनरूपत्वेनैव स्वीकरोति लक्ष्यं तु ज्ञानमेव। अस्यां भक्तौ ज्ञाने वा सर्वेषां मनुष्याणामधिकारं श्रुतिस्मृत्यादिवत् सद्गुरुः स्वीकरोति।

साधनमार्गे गुरुशरणागतिरावश्यकी। यथा-पुष्टैरौषधैः रोगविनाशो भवति तथैव गुरुनिर्दिष्टैरुपायैरेव भवरोगो नश्यति। अतः सद्गुरुं गोविन्दादपि महत्तरं कथयति—

गुरु हैं बड़ गोविन्द ते, मन में देखु विचार।
हरि सिरजें ते वार हैं, गुरु सिरजे ते पार॥

किन्तु यो गुरुः एवंविधगुणविशिष्टो न भवति स त्याज्यो भवति। सद्गुरुः साधनरूपेण योग-ध्यान-विचारान् स्वीकरोति। यदि एते पाखण्डाय प्रयुज्यन्ते तदा अतीवाहितकारिणो भवन्ति। अतः सद्गुरुस्तान् निन्दयति—

जाका गुरु है गीरही, गीरही चेला होय।
कीच कीच के धोवते, दाग न छूटै कोय॥

कामक्रोधादयो सद्गुरुणा चोरलुंटकादिनामभिः कथिताः। अतः काम-कामिन्यौ साक्षात्सर्पिणीत्वेन कथिते—'कामिनी सुन्दर सांपिणी' इत्यादि। अस्याध्यात्मपथस्य कामक्रोधादयो यथा प्रथिताः प्रतिबन्धकास्तथैव देवा अपि प्रतिबन्धका भवन्ति। अनन्तरं साधनायाः ज्ञानस्य च सप्तभूमिकाः प्रदर्शिताः। ध्यानयोगस्य हठयोगस्य च परिचयं प्रस्तुतवता तेन ध्यानयोगस्तयोः ज्यायान् अभिहितः।

श्रीसद्गुरुकबीरस्य दर्शनस्य निष्कर्षः स एवास्ति, योऽद्वैतवेदान्तदर्शन-स्यास्ति। अद्वैतवेदान्तस्य मते यद् 'ब्रह्म' विद्यते तत्सद्गुरुकबीरस्य शब्दे 'राम' अस्ति। द्वाभ्यामपि शब्दाभ्यामेकमेव परमतत्त्वं निर्गुणनिष्क्रियशुद्ध-चैतन्यरूपं विद्यते।

अद्वैतवेदान्ते माया अनिर्वचनीयपदेन व्यपदिश्यते, सद्गुरुकबीरशब्दे सा 'अकथ' रूपेण दृश्यते। अद्वैतवेदान्ते 'जीवो ब्रह्मैव नापरः' इति कथ्यते, श्रीसद्गुरुकबीर इदमेव तथ्यं शब्दान्तरेण कथयति—

कबीरशोधि विचारिया, दूजा कोई नाहिं।
आपा पर जब चिन्हिया, उलटि समाना ताहिं॥

अद्वैतवेदान्ते ब्रह्मणोऽभिन्ननिमित्तोपादानता स्वीक्रियते। सैवाभिन्न-निमित्तोपादानता श्रीसद्गुरुणापि स्वीक्रियते—

एकहि ते अनन्त अनन्त एक होय आया।
परिचय भया जु एक ते, एक हि मांहि समाया॥

यथा मृत्पिण्डान्निर्मितानि मृत्तिकापात्राणि मृत्तिका एव सन्ति, तथैव [illegible]

वेदान्ते गूढसिद्धान्तस्य बुद्धिगम्यत्वकरणाय कदाचित् बिम्बप्रतिबिम्बवादस्य कदाचिदवच्छेदवादस्य यथा निरूपणास्यावश्यकता आयाति, तथैव श्रीसद्गुरु-कबीरसाहित्येऽपि बिम्बप्रतिबिम्बवादादेरुपयोगोऽभवत् ।

श्रीगुरुनिर्दिष्टे पथि गन्तारोऽनेके सन्ताऽभवन् तेषु केचन स्वस्वतन्त्र-सम्प्रदायमपि प्रावर्तयन् किन्तु सर्वेऽपि श्रीसद्गुरुकबीरसिद्धान्तं पूर्णतया स्वीकृतवन्तः, केचन साक्षात् तच्छिष्यत्वमङ्गीकृत्य कृतार्था अभवन्, केचन शिष्यत्वं तु न स्वीकृतवन्तः, किन्तु तत्सिद्धान्तं स्वीकृतवन्तः । यथा—आचार्यश्रीदादुदास-साहब-श्रीआचार्यशिवदास-आचार्यश्रीजीवनदासादयो श्रीसद्गुरुकबीरं गुरुं स्पष्टतया स्वीकुर्वन्ति । किन्तु एषामनुयायिनः भिन्नान् सम्प्रदायान् प्रवर्तयामासुः ।

श्रीगुरुनानकदेव-श्रीशिवनारायण-श्रीराधास्वाम्यादिमहाभागा वाणीं सिद्धान्तं च स्वीचक्रुः । एतेषां सतां कानिचन पद्यान्यपि निबन्धे प्रदर्शितानि ।

समग्रभारतस्य भ्रमणं कृत्वा श्रीसद्गुरुकबीरस्य जीवनसम्बन्धीनि तद्ग्रन्थ-सम्बन्धीनि च तथ्यानि सङ्कलय्य भ्रमनिरासपूर्वकं सत्यस्य प्रकाशनायायं शोधप्रबन्धो लिखितः । वेदान्तगतसिद्धान्तानां च परिचयमात्रं दत्तम् । अन्यथा एकस्मिन् विषये एकैको ग्रन्थः सम्भाव्यते ।

•

ॐ

श्रीसद्गुरवे नमः

# हिन्दीकविकबीरसिद्धान्तस्याद्वैतवेदान्तेन सह साम्यम्

## प्रथमोऽध्यायः

### मंगलाचरणम्

अहिंसाशौचाद्यैः शमदमदयादाननिवहै-
विमृष्टस्वान्ता ये विगतमदमोहाः सुमनसः ।
असारं पश्यन्तो जगदिदमपारं त्वनुपलं
हितं तेषामुक्तं गुरुवरकबीरेण महता ॥ १ ॥

स्वाम्नायशिखरैस्तुल्या वाणी यस्य विराजते ।
तं सर्वसुहृदं हृद्यं कबीरं गुरुमाश्रये ॥ २ ॥

यत्पादकमलं पोतं विधायैवात्र सज्जनाः ।
व्रजन्ति भवपारं तं कबीरं गुरुमाश्रये ॥ ३ ॥

पूर्वेषां यो गुरुरिति वचो यत् परं शास्ति सत्यम्
आचार्याच्छे वपुषि विलसत्यागमोऽप्याह तथ्यम् ।
देवानां यः परमरमणः सत्तमोऽद्वैतपान्थो
वन्देऽहं तं निखिलनिगमैर्ज्ञेयमेकं कबीरम् ॥ ४ ॥

स्पर्धादिहीनं गतगर्वखर्वं सदैव मान्यं बुधसज्जनानाम् ।
दीने दयादानयुतं शरण्यं भजे गुरुं तं परमं कबीरम् ॥ ५ ॥

विरक्तं सुसन्तं महाबोधवन्तं जनध्वान्तहन्तारमेकं निरीहम् ।
निराबाधमाद्यं कृपालुं कबीरं कवीन्द्रं मुनीन्द्रं यतीन्द्रं नमामि[1] ॥६॥

कबीरं करुणागारं सद्गुरुं सर्वसाक्षिणम् ।
अद्वैततत्त्ववक्तारं वन्दे वेदान्तपारगम् ॥ ७ ॥





१. साखी ग्रं० द्वि० भाग से उद्धृत है । ( परिशिष्ट द० ४ ) ।

# हिन्दोकविकबीरसिद्धान्तस्याद्वैतवेदान्तेन सह साम्यम्

## (१) श्रीसद्गुरुकबीरपरिचयः

श्रीसद्गुरुकबीरस्य प्राकट्यकालस्त्रयोदशशतविक्रमसंवत्सरात् षट्पञ्चाशदुत्तरचतुर्दशशतसंवत्सरमध्ये दोलायमानोऽस्ति। तत्र पञ्चपञ्चाशदधिकचतुर्दशशततमे श्रीसद्गुरुकबीरस्यावतारो जात इति श्रीकबीरचरितबोधादिभ्योऽवसीयते। तथोक्तम्—

चौदह सौ पचपन साल गए, चन्द्रवार एक ठाठ ठए।
जेठसुदी बरसाइत को पूरणमासी को प्रकट भए॥
घन गरजे दामिनी दमके, बून्दें बरषें झर लाग गए।
लहरतलाब में कमल खिले, तहं कबीर भानु प्रकट भए॥[1]

अस्यानुवादः—

विक्रमसम्वत्सरे १४५५ तमे वर्षे ज्येष्ठपूर्णिमायां श्रीसद्गुरुकबीरो 'लहर' नाम्नि सरोवरे पङ्कजोपरि ज्योतीरूपेण प्रादुर्बभूव। तस्मिन्समये घनगर्जनं, विद्युद्विद्योतनं जलकणनिर्झरणञ्च भवन्ति स्म।

इतिहासविशेषज्ञा अपि ब्रुवते—

(१) डा० श्यामसुंदरदासो[2] लिखति, प्रोक्तं पद्यद्वयमनुसृत्य बहवो विद्वांसो

(१) श्रीकबीर चरित बोध पृ० ६, श्रीकबीर कसौटी पृ० ७।

(२) यह पद्य कबीरदास के प्रधान शिष्य और उत्तराधिकारी धर्मदास का कहा हुआ बताया जाता है। इसके अनुसार कबीरदास का जन्म लोगों ने संवत् १४५५ ज्येष्ठ शुक्ल पूर्णिमा चन्द्रवार को माना है, परन्तु गणना करने से संवत् १४५५ में ज्येष्ठ शुक्ल पूर्णिमा चन्द्रवार को नहीं पड़ती। पद्य को ध्यान से पढ़ने पर संवत् १४५६ निकलता है, क्योंकि उसमें स्पष्ट शब्दों में

विक्रमसंवत्सरे पञ्चपञ्चाशदधिकचतुर्दशशततमे (१४५५) ज्येष्ठशुक्लपूर्णिमायां चन्द्रवासरे श्रीकबीरस्य प्राकट्यं मन्यन्ते, परन्तु ज्योतिषगणनया (१४५५) पूर्वोक्तवर्षक्रमे वर्षे ज्येष्ठशुक्लपूर्णिमायां चन्द्रवासरो नोपलभ्यते। पद्यस्य प्रागुक्तस्यानुसन्धानेन विचारणया च संवत् (१४५६) षट्पञ्चाशदधिकचतुर्दशशततमे वर्षे तस्य प्राकट्यकालः प्रतीयते। यतः तस्मिन् पद्ये स्पष्टमुट्टङ्कितम्—

'चौदहसौ पचपन साल गए' इति।

अर्थात् तस्मिन् काले (१४५५) पञ्चपञ्चाशदधिकचतुर्दशसंख्याकः संवत्सरो व्यतीतोऽभूदिति।

(२) डा० रामकुमारवर्माऽभिमतगणनया[1] उक्तसंवत्सरस्य (१४५६) ज्येष्ठपूर्णिमायां चन्द्रवासरो नायाति, किन्तु मङ्गलवासरः। किञ्च 'बरसाइत' नाम्ना प्रसिद्धं वटसावित्रीव्रतं ज्येष्ठमासस्य अमावास्यायां भवति न तु पूर्णिमायां इत्यपरो दोषः।

(३) श्रीस्वामियुगलानन्दविहारिणा[2] कबीरपन्थपथिकेनापि श्रीसद्गुरुकबीरस्य प्राकट्यं विवेचितम्। 'बरसाइत' इति पदं वटसावित्रीव्रतमाचष्टे तदमावस्यायामेव व्रतग्रन्थेषु स्थिरीकृतमास्ते।

---

लिखा है 'चौदह सौ पचपन साल गए' अर्थात् उस समयतक संवत् १४५५ बीत गया था....।' सं० १४५६ में ज्येष्ठ शुक्ल पूर्णिमा चन्द्रवार को ही पड़ती है। अतएव यही संवत् कबीर के जन्म का ठीक संवत् जान पड़ता है। (कबीर ग्रन्थावली, भूमिका, पृ० १३-१४)।

(१) 'किन्तु गणना करने पर ज्ञात होता है कि चन्द्रवार को ज्येष्ठपूर्णिमा नहीं पड़ती। चन्द्रवार के बदले मंगलवार दिन आता है। इस प्रकार बाबू श्यामसुंदरदास का कथन प्रामाणिक नहीं माना जा सकता। कबीर के सम्बन्ध में उपयुक्त दोहे में 'बरसायत' पर भी ध्यान नहीं दिया गया है।'
(कबीर का रहस्यवाद पृ० १७०)। 'ऐसी परिस्थिति में हम कबीर की जन्मतिथि ज्येष्ठ अमावस्या सं० १४५५ को ही मानते हैं'—पृ० १७६।

(२) बोधसागर पृ०, 'बरसाइत महात्म्य' हस्तलिखित ग्रन्थ में पृष्ठ संख्या उल्लिखित नहीं है। यह ग्रन्थ पूना विद्यापीठालय के पुस्तकालय में है।

(४) श्रीमान् कबीरपथपथिकः साधुसुकृतदासोऽप्युपर्युक्तपद्यस्यार्थं स्वरचिते 'सत्कबीरमहापुराण'[1] नाम्नि ग्रन्थे निर्णीतवान् । यथा–

जेठ केरी अमावस पूर्णा, उपा सजी शृंगार सम्पूर्णा ।
संवत तेरहसौ छप्पना, रत्नण समय निकट परिपन्ना ।।

अर्थात् पञ्चपञ्चाशदधिकचतुर्दशशताब्द्याः पञ्चपञ्चाशद्वर्षेषु व्यतीतेषु १३५६ वर्षे श्रीसद्गुरुकबीरः प्रादुर्बभूव, इत्यहं स्वयं तेन सह सङ्गत्या इदं विमृष्टवान् ।

(५) डा० हण्टरमहोदयः स्वकीये ग्रन्थे[2] श्रीसद्गुरुकबीरस्य धर्मप्रचारकालः १३८० ईसवीयवर्षादारभ्य १४२० ईसवीयवर्षपर्यन्तरे मन्यते ।

(६) श्रीमहात्मा चेतनदासस्तु[3] श्रीरामानन्दस्वामिनः शिष्यः 'प्रसङ्गपारिजात' नाम्नि ग्रन्थे श्रीकबीरस्य जन्मकालं संवत् (१३५६) षट्पञ्चाशदधिकचतुर्दशशताब्द्यां मन्यते ।

(७) अन्येऽपि लेखकाः सम्प्रतिपन्नाः विप्रतिपन्नाश्च अधोलिखितक्रमेण श्रीकबीरस्य जन्मकालनिर्धारणे भगीरथप्रयत्नं कृतवन्तः । तद्यथा–

| लेखकानां नामानि | श्रीकबीरस्य जन्मसम्वत् |
|---|---|
| (१) डा० विल्सन[4] महोदयः | १४५५ वि० संवत् |
| (२) डा० मेकालिफ[5] ,, | ,, ,, |
| (३) डा० भण्डारकरः[6] ,, | ,, ,, |
| (४) डा० फुरकुहरः[7] ,, | ,, ,, |

(१) श्रीसद्गुरुकबीरमहापुराण (हस्तलिखित) पृ० २०५ खण्ड २ अध्याय ४७ ।
(२) इण्डियन एम्पायर अ० ८ पृ० २५८-२६८ प्र० सन् १९७३ ई० ।
(३) 'प्रसंगपारिजात' (हस्तलिखित) अष्टपदी ४५ ।
(४) रिलीजस सेक्ट्स आफ हिन्दूइज्म पृ. २९-३० ।
(५) दी सिख रीलिजन पृ. १२६–१३० । भाग ६
(६) वैष्णव इज्म शैव इज्म माइनर आफ रिलिजियस सिस्टम पृ० ६१ ।
(७) आउट लाइन आफ रिलिजस लिटरेचर आफ इण्डिया पृ ३३४ ।

(५) डा० की साहब[1] १४५५वि०सं०
(६) श्री क्षितिमोहनसेन महोदयः[2] " "
(७) डा० पीताम्बरदत्त बड़थ्वाल[3] महोदयः " "
(८) डा० गुलाबरायः[4] एम. ए. " "
(९) डा० मोहनसिंह[5] महोदयः " "

(१०) श्री मिश्रबन्धू[6] " "
(११) आचार्यरामचन्द्रशुक्लमहोदयः[7] ... ... " "
(१२) श्रीचन्द्रबलीपाण्डेयः[8] " " ... ... " "
(१३) डा०त्रिगुणायतः[9] " " ... ... " "
(१४) श्रीमनोहरलालजुत्सी[10] " " ... ... " "
(१५) प्रो०नरोत्तमदासः[11] " " ... ... " "
(१६) श्रीयज्ञदत्तशर्मा[12] " " ... .... " "
(१७) डा०रामकुमारवर्मा[13] " " ... ... " "

---

(१) मिडिवल मिस्टिज़्म पृ० ८८ ।
(२) कबीर एण्ड हिज फालोअर्स पृ० २७ ।
(३) निर्गुण स्कूल आफ हिन्दी पोयट्री पृ० २५२-२५३, हिन्दी काव्य में निर्गुण सम्प्रदाय पृ० ५५ ।
(४) हिन्दी काव्य विमर्श पृ०. ३१ ।
(५) कबीरः हिज बायोग्राफी, पृ० ५ ।
(६) मिश्रबन्धु विनोद, पृ० २४८ ।
(७) हिन्दी साहित्य का इतिहास-पृ० ७५ ।
(८) विचार विमर्श-पृ० ५ ।
(९) कबीर की विचारधारा-पृ०२७ तथा ४७
(१०) कबीरसाहब पृ०११ (उर्दू में) ।
(११) कबीरदास-प्रस्तावना पृ०३-४ ।
(१२) कबीर साहित्य और सिद्धान्त-पृ० ५ ।
(१३) सन्त कबीर पृ० ५९-६० ।

| | | | | |
|---|---|---|---|---|
| (१८) डा०सरनामसिंहः[1] | ,, ,, | ... | ... | १४५५वि०सं० |
| (१९) श्रीपरशुरामचतुर्वेदी[2] | ,, ,, | ... | ... | ,, ,, |
| (२०) श्रीकेदारनाथद्विवेदी[3] | ,, ,, | ... | .... | ,, ,, |
| (२१) श्रीपारसनाथतिवारी[4] | ,, | ... | ... | ,, ,, |
| (२२) डा०बदरीनारायणश्रीवास्तवः[5] | ,, | ... | ... | १३५५ ,, |
| (२३) डा०प्रह्लादमौर्यः[6] | ,, ,, | ... | ... | १४२५ ,, |
| (२४) स्वामी ब्रह्मलीनमुनिम[7]होदयः | | ... | ... | १४५५ ,, |
| (२५) डा०राजनारायणमौर्यः[8] | ,, | ... | ... | १४०५ ,, |
| (२६) डा०गोवत्सः[9] | ,, | .... | ... | १३०० ,, |
| (२७) डा०दाण्डेयकरः[10] | ,, | ... | ... | १३०० ,, |
| (२८) श्री आ०सन्त गरीबदासमहोदयः[11] | | ... | ... | १४५५ ,, |
| (२९) श्रीसन्तदरियासाहबबिहारी[12] | ,, | ... | ... | १३०० ,, |
| (३०) श्रीरामप्रसादत्रिपाठी[13] | ,, | ... | ... | ,, ,, |

(१) कबीर, व्यक्तित्व, कृतित्व एवं सिद्धान्त–पृ० ५ ।
(२) उत्तरभारत की सन्त परम्परा–पृ० १३७ तथा २२३ ।
(३) कबीर और कबीरपंथ – पृ० ६४ ।
(४) कबीरग्रन्थावली, भूमिका पृ० ४३–४७ ।
(५) रामानन्द सम्प्रदाय और हिन्दी साहित्य पर उसका प्रभाव–पृ० ७३ ।
(६) समकालीन भारतीय समाज और कबीर का समाजदर्शन, प्रस्तावना पृ०१–४ ।
(७) श्रीसद्गुरुकबीरचरितम् – ३।१–२, पृ० २९ ।
(८) पुणेंविद्यापीठ पत्रिका पृ० १११ हिन्दुस्तानी पत्रिका जनवरी १९७१ ई० का शीर्षक–"कबीर का काल निर्णय" ।
(९) श्रीकबीर वैष्णव पृ० ५ तथा २१ ।
(१०) ज्ञानेश्वरीगीता, प्रस्तावना पृ० ११ (मराठीभाषा) ।
(११) श्रीग्रन्थसाहब-पारखअंग साखी सम्पूर्ण पृ० २१४ ।
(१२) दरिया साहब की वाणी भूमिका, पृ० ११–१३ ।
(१३) हिन्दुस्तानी पत्रिका पृ० ३१४ भाग २४ ।

(३१) डा० ग्रियर्सन[1] महोदयः ... ... १३५६
(३२) श्रीबाबुरावकूमेळकर[2]: ... ... १३२७
(३३) जनाबाई महोदया[3] ... ... १३००

अत्र मामकीनो विमर्शः—

उपर्युक्तग्रन्थानां लेखकानाञ्च सम्मतिमनुसृत्यैव निर्णयो भवति, यद् बहुमतानुसारं १४५५ विक्रमवर्ष एव श्रीसद्गुरुकबीरस्य प्राकट्यमभूदिति। तत्र यदि सूक्ष्मेक्षिकया विचारणा स्यात्, तदा तस्मिन् वर्षे (१४५५) तज्जन्मविषये सर्वेषां विचारकाणामेकमात्रमस्याधारः पूर्वोक्तसाखीरूपं पद्यमेवास्ति। किन्तु पद्यस्यास्य गवेषणया प्रतिभाति यत्तत्पद्यं केनचित् श्रीकबीरपथपथिकेन श्रद्धालुना श्रद्धोपहाररूपेण निर्मितम्। यतः —

इदं पद्यं श्रीधर्मदासकबीरयोः समानकालीनतां बोधयितुं निरमायि कैश्चिदन्धानुकारिभिः सप्तदशशताब्द्यामिति तर्कयामि। अस्मिंश्च पद्ये ज्योतिःस्वरूपः श्रीकबीर आकाशान्निपत्य कमलोपरि अवततार इति वर्णितं वर्तते। परन्तु तथ्यमिदमाधुनिकाः समालोचकाः न स्वीकुर्वन्ति।

श्रीनामदेवस्य जनाबाई नामिका शिष्याऽभूत्, तद्द्वारा निर्मितं प्रत्यक्षदृष्टदृश्यसम्बन्धीदं भजनात्मकं वाक्यमस्ति[4], तत्र श्री सद्गुरुकबीरनामदेवौ तस्मिन् समये साकमेव भगवत्कीर्तनं कृतवन्तौ। अनेनेदं सिद्ध्यति यत् श्रीसद्गुरुकबीरो नामदेवसमकालिकोऽभूत् इति।

---

(१) जर्नल आफ दी रायल एशियाटिक सोसाइटी, पृ० ३२३।
(२) ज्ञानेश्वरी गीता, भूमिका, पृ० २३।
(३) श्रीनामदेवजी की वाणी संग्रह—हस्तलिखित अभंग २३३ हस्तलिखित पृ० ३४ प्रकाशित अभंग २६६।

(४) एकवटाळी झाली चन्द्रभागे वाळवटी।
माझा ज्ञानराज गोपराशी लध्या॥
नामदेव कीर्तन करी पुढें नाचे पाण्डुरंग।
जनी ह्मणे बोल ज्ञानदेवा अभंग॥ २॥

भक्त-त्रिलोचनवचनेनापि[1] श्रीकबीरनामदेवयोः समकालिकता विभाव्यते। ज्ञानेश्वरीगीताया भूमिकायां श्रीदाण्डेयकरमहोदयोऽपि[2] ज्ञानेश्वरस्य पिता विट्ठलपन्तः श्रीस्वामिरामानन्दशिष्य इति सूचयन् लिखति यद् १३१५ विक्रमवर्षे श्रीकबीरस्य प्रसिद्धिः काश्यामासीदिति। श्रीस्वामिरामानन्दस्य१३५६ वि० सं० जन्मसमयः कल्पितः। तं सर्वे न स्वीकुर्वन्ति। न तस्य जन्मकालसम्बन्धे १३५६ वि० वर्षे किमपि पुष्टप्रमाणमस्ति।

अतः सत्यमेव डा० वेस्टकाटमहोदयस्यान्वेषणानुसारं[3] ते एकादशकबीराः सिद्ध्यन्ति।

येषु शेखतकीनाम्नो महात्मनो यवनस्य शिष्यः कश्चिद् एकः कबीर आसीद् यः सिकन्दरलोदीनाम्नो राज्ञः (बादशाह) समये काश्यामासीदिति[4]। स एव

---

अभंग बोलता रंगकीर्तनी भरला।
प्रेमाचे नि छंदे विठलनाच् लगला॥ ३॥
नाचता नाचता देवा चा गलला पित्ताम्बर।
सावध होइ देवा ऐसा बोले कबीर॥ ४॥
साधु या सन्तानी देव धरिला मनगटी।
काय झालेंम्हणुनी दचकले जग जेठी॥ ५॥
ऐसा कीर्तन महिमा सर्वभाजी वरिष्ठ।
जड़मूल भाविका सोपी केली पाय वाट॥ ६॥
नाम याची जनी बोले संतां च्या पायी।
किर्तनी प्रेमरस अखण्ड देईगे विठाइ॥ इति॥ सकलसन्तगाथा, अभंग २३३ (पंढरपुर में हस्तलिखित नामदेव वंशज के यहां है)

(१) गुरुग्रन्थसाहब श्लोक २१२–२१३ पृ० ७४० ( हिन्दी प्रति )
(२) ज्ञानेश्वरी टीका गीता, प्रस्तावना पृ० ११।
" " पृ० २ ले० माधव झगाड़े।
" " पृ० ७ भूमिका ले० बाबुराव कुमेठकर।
(३) (४) कबीर एण्ड दी कबीरपंथ—पृ० २५–२६–२७
खुलासा तुत्तवारिख पृ० ४३ ( शायर उल अखताव ले० शेख अल्लाह दिया )।

प्रधानः कबीर आसीदिति सर्वेऽपि विद्वांसः स्वीकुर्वन्ति। तस्य जन्म सं० १४५५ वि० वर्षे सम्भवति, न तु श्रीस्वामिरामानन्दस्य शिष्यस्य कबीरस्य।

अत्रेदं सम्भाव्यते--श्रीस्वामिरामानन्दशिष्यः श्रीकबीरः त्रयोदशशताब्द्यवसानकाले जात इति। यतोऽन्ये कबीराः सगुणं निर्गुणं वा भगवद्रामस्वरूपं नैव मन्वते। किन्तुश्रीस्वामिरामानन्दशिष्यः श्रीसद्गुरुकबीर एव बीजकादौ ग्रन्थेऽनुपदं रामं स्मरति। एभिः प्रमाणैरिदं निष्कृष्यते यद् भूयांसो विवेचकाः श्रीसद्गुरुकबीरं नामदेवस्य ज्ञानेश्वरस्य च समकालिकं नैवाकलयन्ति।

श्रीलक्ष्मणरामचन्द्रपङ्गारकरमहोदयेनापि स्वरचिते ज्ञानेश्वरचरित्रनामके ग्रन्थे तयोः समकालिकतैवाङ्गीकृता[१]। नामदेवस्य रचनायामपि श्रीकबीरस्योल्लेखो दृश्यते। तद्यथा--(संग्रहग्रन्थे) "नामदेवमहाराजां चे अभंग--

आतां एका कवित कबीरा, राम सेवेसी तत्परा[२]" इति।

निखिले वारकरीसम्प्रदाये श्रीकबीरनामदेवयोः समकालिकता स्वीक्रियते। विप्रतिपन्नाः केचन श्रीकबीरस्य प्राकट्यविषये: यथा पूर्वोक्तं पद्यं पठन्ति तथैवान्ये श्रद्धालवः श्रीकबीरस्य वैक्रमाब्दस्य ११०५ तमे वर्षे तथा १२२० तमे च वर्षे प्राकट्यं मन्यन्ते। परन्त्विमे पद्ये न प्रतिभातः। यथा

संवत् ग्यारै सै पांच मो, ज्ञानी कियो विचार।
काशी मांहि प्रगट भे, शब्द किया टकसार[३]॥
संवत् ग्यारह सौ बीस प्रमाणा, जेठमास बरसाईत जाना।
बालक को तन तब धरि लीन्हा, गण गन्धर्व देखि मोहि चीन्हा[४]॥
पाठभेद-संवत् बारह सौ पाँच में, ज्ञानी कियो विचार।
काशो में परगट भयौ, शब्द कह्यो टकसार॥

(१) ज्ञानेश्वर चरित्र - पृ० ३३-३८। (भक्तिविजय ले० महिपाल से उद्धृत)
(२) सकल सन्त गाथा-अभंग सं० २३३३ (हस्तलिखित)।
(३) ज्ञानसंकर (हस्तलेख) उत्तरी भारत की संत परम्परा-परिशिष्ट, पृ०८४६
(४) [illegible] विहारी [illegible]।

## (२) श्रीसद्गुरुकबीरस्य जन्मभूमिः

श्रीसद्गुरुकबीरस्याविर्भावः वस्तीमण्डलान्तर्गते मगहरनाम्नि ग्रामे बभूव इति डा० मेकालिक[1], डा० पीताम्बरदत्तबड़थवाल[2], डा० गोविन्दत्रिगुणायत-प्रभृतयो[3] मन्यन्ते ।

१–श्रीकबीरस्य जन्म मगहरनाम्नि ग्रामे बभूव–इत्यस्याधारः गुरुग्रन्थ-साहब' ग्रन्थस्येदं पद्यमस्ति –

तोरे भरोसे मगहर बसियो, मेरे तन की तपत बुझाई[4] ।
पहिले दरशनु मगहर पाइओ, पुनि कासी बसे आई ।।

२-श्रीकबीरस्य जन्म अवधप्रदेशस्थरतनपुरनाम्नि स्थाने बभूवेति 'खुलासा तुत्तवारिख' नाम्नि ग्रन्थे लिखितं वर्तते । स एव श्रीकबीरः काश्यां कियन्तं समयमुवास, सिकन्दरेण सह तस्यैव सम्मेलनं जातं न तु श्रीस्वामिरामानन्द-शिष्यस्य श्रीकबीरस्य ।

३–यत्तु श्रीसद्गुरुकबीरस्य जन्मभूमिर्मिथिलेति कस्यचिन्मतम्, तदकिञ्चित् करम्, श्रीकेदारनाथद्विवेद"प रशुरामचतुर्वेदादिभिरेव[6] निरस्तत्वात् । भापा-मात्रेण जन्मस्थाननिर्णयस्य दुष्करत्वात् । एतेन केवलशब्दसाम्यप्रयुक्तया भ्रान्त्या श्रीचन्द्रबलीपाण्डेयस्य[7] 'बेलहरा पोखर' स्थाने 'लहरतलाव' नामकस्थानमुप-कल्प्य यच्छ्रीकबीरजन्मभूमित्वेन स्वीकरणं तदप्यपास्तम् ।

४–श्रीसद्गुरुकबीरस्य प्राकट्यस्थानं काशीनगरी—इति बहवो विद्वांसो मन्यते । तद्यथा भविष्यपुराणे—

---

(१) सिक्खरिलीजन—भा० ६ पृ० १३० ।
(२) हिन्दीकाव्य में निर्गुण सम्प्रदाय—पृ४५ ।
(३, कबीर की विचारधारा—पृ ०२९
(४) गुरुग्रन्थसाहब रागरामकली—पद ३ ।
(५) 'खुलासा तुत्तवारिख'—पृ० ४३ ।
(६) कबीर और कबीरपंथ–पृ० ६७ ।
(७) उत्तरभारत की सन्तपरम्परा—पृ०१४०-१४१ ।
(८) योगप्रवाह—पृ० ५ ।

धान्यपालस्य वै गेहे मूलगण्डान्तजः सुतः ।
पितृमातृपरित्यक्तः काश्यां विन्ध्यवने तदा ॥
अलीको नाम वै म्लेच्छस्तत्र स्थाने समागतः ।
अनपत्यो वस्त्रकारी च सुतं प्राप्य गृहं ययौ ॥
कबीर इति विख्यातः स पुत्रो मधुराननः ।
स सप्ताब्दवपुर्भूत्वा गोदुग्धपान तत्परः ॥
रामानन्दं गुरुं मत्वा रामध्यानपरोऽभवत् ।
स्वहस्तेनैव संस्कृत्य भोजनं हरयेऽर्पयत् ।
तत्प्रियार्थं हरिस्साक्षात् सर्वकामप्रदोऽभवत्[1] ॥३६॥

श्रीअनन्तदासः[2], श्री चेतनदासः[3], आचार्यसन्तश्रीगरीबदासः[4], श्री रविदासः[5], श्रीरींवानरेशविश्वनाथसिंहः[6], अबूलफजलः[7], श्रीराघोदासः[8] श्रीयुगलानन्दविहारी[9], श्रीडा० वेस्टकाटमहोदयः[10], डा०श्री रे० एफ ई० की

---

(१) भविष्यपुराण प्रतिसर्गपर्व, कलियुगीयेतिहासवर्णनम् २।१७।३५-३९। पृ० ३५६ ।

(२) 'श्रीकबीरजी की परिचई' ह० पृ० ६७८ (नागरीप्रचारिणी सभा, काशी) ।

(३) 'प्रसङ्गपारिजात' अष्टपदी ४६ ह० ( अयोध्या से ) ।

(४) 'ग्रन्थसाहब' गरीबदास की पारखअङ्ग-साखी ।

(५) गु० ग्र० साहब में रविदास की वाणी, रागमलार पद २ पृ० ६९८ ।

(६) बीजक पाखण्ड खण्डनी, टीका, भूमिका पृ० १३-१७ ।

(७) 'आईने ए अकबरी' वाल्यूम ३ पृ० १२९ ।

(८) 'भक्तमाल' ( राघोदासटीका ) पृ० ५ ।

(९) 'सत्यकबीर की साखी' भूमिका पृ० ४-५ ।

(१०) [illegible]

साहब[1], श्रीरामचन्द्रशुक्लः[2], श्रीस्वामिभागवताचार्यः,[3] डा० श्रीहजारीप्रसादद्विवेदी[4], डा० श्रीगोवरसः[5], डा० श्रीश्यामसुन्दरदासः[6], डा० श्रीगुलाबरायः[7], सन्तश्रीधर्मदासः[8], श्रीस्वामिब्रह्मलीनमुनिः[9], डा० रामप्रसाद त्रिपाठी[10] प्रभृतयः सद्गुरुकबीरस्य जन्मस्थानं काश्यामेव स्वीकुर्वन्ति।

मया त्विदमनुमीयते यत्ते विद्वांसः प्रागुक्तान्[11] 'गुरुग्रन्थसाहब' ग्रन्थस्य पूर्वोक्तपद्यशब्दान् आधारीकृत्य यदि श्रीसद्गुरुकबीरजन्मस्थानम् 'मगहर' इति मन्वते तदा मूलग्रन्थबीजकशब्दान् एतान् अधोलिखितान् आधारीकृत्य तानि तानि स्थानानि श्रीकबीरजन्मस्थानत्वेन कथन्न तैः स्वीक्रियन्ते। तद्यथा—

१–'कबीर तेरो घर कन्दला[12] में'

२–'सकल कबीरा बोले वाणी, पानी में घर छाया[13]'

३–'अब हम भइलों बाहर जल मीना'[14]

४–कबीर का घर शिखर पर[15]'

---

(१) 'कबीर एण्ड हिज फालोअर्स' पृ० २९।

(२) 'हिन्दी साहित्य का इतिहास' पृ० ७५–७६।

(३) 'श्रीस्वामी रामानन्ददिग्विजय' अ० ५ श्लो० ५–११।

(४) 'कबीर' पृ० २–३।

(५) 'श्रीकबीर वैष्णव' पृ० १३।

(६) 'कबीर ग्रन्थावली' भूमिका पृ० १६।

(७) 'हिन्दी साहित्य का सुबोध इतिहास' पृ० ३१।

(८) 'शब्दावली बड़ी' पृ० ३।

(९) 'श्रीसद्गुरुकबीरचरितम्' अ० ३ श्लो० ३–४।

(१०) हिन्दुस्तानी पत्रिका, भाग १४ पृ० २१४–२१५।

(११) 'पहिले दरसनु मगहर पायो फुनि कासी बसे आई' गुरुग्रन्थ साहब राग रामकली पद ३।

(१२) (१३) श्रीकबीर बीजक शब्द ३७।

(१४) " " शब्द ४६।

(१५) " " साखी ३०।

५–'ऊंची घाटी राम की, तिहि चढ़ि रहा कबीर'[1]

तत्र तु 'दर्शन'-शब्दमात्रम्, अत्र तु स्पष्टरूपेण गृहवाचि-'घर' शब्द इति। अर्थात् शब्दसाम्येन न अर्थसाम्यं भवितुं शक्यते।

तथा च प्रागुक्त 'गुरुग्रन्थ' पद्यस्यायमाशयः सम्भाव्यते–श्रीसद्गुरोः कबीरस्य कश्चन शिष्यः सद्गुरुं कदाचिद् 'मगहर' स्थानं गतं दृष्टवान् तमेव स्मरति। तस्मादनेन पद्येन श्रीकबीरस्य जन्मस्थानं 'मगहर' इति न सिद्ध्यति। 'दर्शन' इति तत्रोक्तं न तु जन्म इति। आचार्यपरशुरामचतुर्वेदिनोऽपि एवमेव स्वीकृतवन्तः[2]।

एवमेव च शब्दसाम्येन 'बेल्हर पोखर' इति समाश्रित्य श्रीकबीरजन्मस्थानं 'बेल्हरा' इति अन्यैर्विद्वद्भिर्यदुक्तं तन्नोचितम्, विचाररहितत्वात्।

यद्यपि प्रागुक्तरीत्या बहूनां लेखकानां मतेषु श्रीकबीरस्य बहूनि जन्मस्थानानि प्रतीयन्ते। एवं सति श्रीसद्गुरुकबीरस्य जन्मस्थानविषये महती विप्रतिपत्तिः, महांश्च विवादः साम्प्रतं प्रचलितो दृश्यते। मम तु मतमेवं प्रतिभाति, न ह्यमूला प्रसिद्धिरिति न्यायमाश्रित्य सर्वेषां विदुषां नये कबीरस्य जन्मस्थानविषये एवं समन्वयः कर्तव्य इति। तथाहि—

डा० वेस्टकाटमहोदयेन महता श्रमेण प्रमाणानि संगृह्य 'कबीर एण्ड दी कबीरपन्थ' नाम्नि ग्रन्थे एकादशकबीराः वर्णिताः —

(१) 'मौलवीगुलामसरवरमहोदयेन स्वीये ग्रन्थे[3] विमृष्टं यत् आसीत् स 'सूफीकबीर चिश्ती' नामकः सिद्धो नागौरनगरनिवासी मोहम्मदानां दुर्व्यवहारेण खिन्नो भूत्वा गुर्जरप्रदेशं गतस्तथा १८५४ ई० वर्षे दिवङ्गतः।

(२) 'शेखकबीरस्तन्तुवायः[4] ( जुलाहा ) शेखतकीमहोदयस्य शिष्य उत्तरा-

---

(१) कबीर बीजक साखी ५७।

(२) उत्तरी भारत की सन्त परम्परा–पृ० १४०।

(३) 'खजीन उल अस्फिया' पृ० ३८६।

'कबीर एण्ड दी कबीरपंथ' ले० डा० वेस्टकाट पृ० २५।

(४) वही।

'खजीन उल अस्फिया' पृ० ४४६–४४७।

धिकारी चासीत् । स तदानीं सम्मानितो नेता आसीत् । तद्विषये इदं श्रूयते यद् असौ हिन्दीमयानि साखीपद्यानि अरचयत् । एतेन कार्येण तस्य महती योग्यता परिलक्ष्यते ।

असौ सूफीधार्मिकसिद्धान्तान् स्वीचकार, तत्सिद्धान्तानुसारेण च ईश्वर-भक्ती मनःशान्तिरिति विश्वासमकरोत् यत् 'फिरक' सिद्धान्तस्य पूर्णरूपेण विपरीतमासीत् । अयमेव प्रथमः पुरुष आसीत्, यः ईश्वरं प्रति स्वाशयं हिन्दी-भाषायां व्यक्तीचकार । स तु हिन्दीभाषायामेव बहून् काव्यग्रन्थान् रचयामास । एतस्य धार्मिकीं सहनशीलतां दृष्ट्वा हिन्दवो यवनाश्चैनं स्वनायकं मन्यन्ते स्म । लोके विभूषितवन्तश्चैनं 'पीर कबीर' 'भक्त कबीर' इत्युपाधिभ्याम् । अस्य मृत्युकालः १५९४ वि० संवत्सर इति मन्यते । केनचित् ग्रन्थे तु मृत्युकालः १५९० वि० संवत्सरो लिखितो वर्तते । पद्मकबीरजीवन्या सह सम्मेलनमपि दृश्यते अस्य कबीरस्य[1] ।

(३) 'ख्वाजा औलिया कबीर' इति प्रथितस्तृतीयः कबीरः । अयं बुखा-रानगरस्य यात्रां कृतवांस्तत्रैव च तस्य सन् १२२९ ईस्वीयवर्षे निधनं जातम्[2] ।

(४) 'सैयदकबीर उद्दीन हसन[3]' नामकश्चतुर्थः कबीरः यः कबीरुद्दीन इस्माइल नाम्नो यवनस्य कुले बभूव । अयं वारत्रयं सम्पूर्णविश्वस्य भ्रमणं कृतवान् । स्वायुषः अशीत्यधिकशततमे ( १८० ) वर्षेऽतीतेऽस्य मृत्युर्जातः । स उच्छ ( बलाख, बलूचिस्तान ) नाम्नि स्थाने न्यवसत् । अस्य मृत्युः सन् १४९० ईस्वीयवर्षे बभूव ।

(५) 'शेखमनवरनाम्नो यवनस्य पुत्रः शेखकबीरः[4] बाजोरा नाम्नि नगरे न्यवसत् । स मिथ्याभिमानी तथा अहिफेनकसेवनव्यसनी चासीत् ।

(६) शेख अल्लाहदियामहोदयेन स्वकीये ग्रन्थे उल्लिखितं तस्य संक्षिप्त-विवरणमिदं दृश्यते । तद्यथा—

शेख अब्दुलकबीर[5] नाम्ना षष्ठः कबीरः । यस्य विषय इदमुच्यते यदसौ मातृगर्भ एव ज्ञानवान् सिद्ध आसीत् । अयमद्यापि भविष्यवक्ता भण्यते । स

(१, 'कबीर एण्ड दी कबीरपंथ' पृ० २६ ।
उद्धृत 'शेर उल अकताब' ले० अल्लाह दीया ।
(२-५) 'कबीर एण्ड दी कबीरपंथ' पृ० २६—२७ ।

'शेखकबीर' नाम्ना, बालापीरनाम्ना च प्रसिद्ध आसीत्। स च सूफीमतस्य सिद्ध-सन्त इति प्रसिद्धः, अब्दुलकुद्दासस्य वंशानुगतः पुत्र आसीत्। स बहूनि अद्भु-तानि कार्याणि कृतवान् । यथा–

'स स्वकञ्चुकान्दोलनेन सिंहमुपस्थापयति स्म। तस्य संगीते महती रुचिरासीत्, अतिथिसत्कारे च स प्रसिद्धो बभूव। तस्य चत्वारः पुत्राः बहवश्च शिष्या आसन्। यवनपुरनगरस्य राजा (जौनपुर के बादशाह) सुलतान-सिकन्दरलोदी भूरा नाम्ना, महमूद नाम्ना च स्वसचिवाभ्यां सह अस्य कबीरस्य शक्तिपरीक्षामकरोत्। तैरेव निश्चयः कृतः, यद्य तद् गृहं गत्वा भोजनाय अस्माभिः स्वस्वरुच्यनुसारीणि व्यञ्जनानि याचितव्यानि। यदि सोऽस्मा-भिर्याचितानां व्यञ्जनानां सद्यः पूर्ति करिष्यति तदा वयं तमीश्वरभक्तं मंस्या-मह इति। तेषां तद्गृहप्रवेशसमय एव कबीरः राज्ञे (सिकन्दरलोदी) हरिण-मांसस्य सुपक्वव्यञ्जनम्, भूरानाम्नेऽमात्याय चंकं चषक (प्याला) परिमितं सूपम्, भुक्तये पर्याप्ताः शष्कुलीः, मलिकमहमूदनाम्ने सचिवाय च मिष्ठान्नमुपस्था-पितवान्। तेन कर्मणा ते त्रयोऽप्यतिथयः श्रीसन्तकबीरं स्वापराधं क्षमापित-वन्तः। अस्य कबीरस्य मृत्युः सन् १५३९ ईस्वीये वर्षे बभूव।[1]

प्रथितः शेखउस्मान नामा तस्य पुत्र एवोत्तराधिकारी बभूव।

(७) 'मुल्लाह अब्दुलकादीर' द्वारा निर्मिते ग्रन्थे[2] इदं वर्णितमस्ति। यथा– "आसीत् 'शेखकबीराराख्यः' सप्तमः कबीरो मुलतानगरवास्तव्यः। स उत्तर-दिशि यात्रां कृत्वा 'बलाख' नामकनगरं प्राप्तः, ततः प्रतिनिवृत्य च भारतवर्ष-मागतः अकबर नाम्ना सम्राजा च सह तत्र-तत्र यात्रां कृतवान्। तस्यात्यधिका धर्मनिष्ठा रात्रिजागरणजनितः श्रमश्च तं मदिरामदमत्तमिव चक्रतुः।" मुल्लाह अब्दुलकादिरनामा अस्य ग्रन्थस्य लेखकः स्वयं तत्र गत्वा अनेन सह संगतैर्न

(१) 'कबीर एण्ड दी कबीरपंथ–पृ० २७, ले० डा० वेस्टकाट।

(२) „ „ „ „ । प्राप्ति–

'मुताखिब उल तवारिख'—ले० मुल्लाह अब्दुल कादिर, बांदा। (हस्तलेख)

साक्षात्कृतवान्, इति सूचयति। अस्य कबीरस्य मृत्युः १५८५ ईस्वीयवर्षे बभूव।[1]

(८) 'अखबारुल अखियार' नाम्नि ग्रन्थे यद् विवरणं प्राप्तं तदनुसारेण 'अमीर कबीर' 'मीर सैयदअलीहमदानी' नामा अष्टमः कबीरः। स सन् १३७९ ईस्वीयवर्षे कश्मीरस्य यात्रां कृतवान्, तत्रैव च वर्षपञ्चकानन्तरं पञ्चत्वं प्राप्तः। तस्य निधनानन्तरं शवसंस्कारार्थं जनतायाः सुलतानमुहम्मद नाम्नी राज्ञश्च 'बड़ाखथान शेख अक्वामउद्दीन' नाम्ना यवनेन तद्देशवास्तव्येन सह विवादः संजातः। विवादावसाने च मृतशरीरं शेख अक्रामउद्दीन नाम्नो शिष्येण लब्धम्। परन्तु कश्मीरवास्तव्यैः तस्य मृत्युस्थल[2] एकः समाधिर्निर्मितः।[3]

(९) 'फरीश्ता' नाम्नि ग्रन्थ इदं विमृष्टं यत् 'जलालउद्दीननामकस्य' यवनस्य पिता 'सैयदअहमद कबीर' नामको नवमः कबीरो बभूव। स तु पानीपतनिवासी आसीदिति[4]।

(१०) तत्रैव 'कबीरउद्दीनइस्माईल'[5] नामा दशमः कबीरो वर्णितः। स सैयद जलालउद्दीन नाम्नो यवनस्य पौत्र उत्तराधिकारी च आसीत्। स दूर-दूरतरदेशानां यात्रां कृतवान्। सन् १४२१ ईस्वीय ( सं० १४७८ ) वर्षे तस्य निधनं जातम्।

(११) 'यवनपुरनाम्नि (जौनपुर) नगरे दीवानशेखकबीरनाम्नः कबीरस्य एका लघ्वी 'मसजिद्' वर्तते। एषा मसजिद् हुमायूं नाम्नः शासकस्य शासनकाले निर्मिता। सा च मुल्लाहतरतल्ला नाम्नि स्थाने स्थिता वर्तते।[6]

एवमेते सर्वेऽपि पूर्वोक्ता एकादश कबीरा यवना यवनसम्प्रदायानुसारिणः सिद्धाः। ते सर्वेऽपि ज्ञानिनो लोकपूजिताश्चेत्यत्र न विप्रतिपत्तिः। तेषां पूर्वोक्तानि स्थानानि यथाप्रसिद्धि निर्णेतुं शक्यन्ते। किन्तु ते न हिन्दवः, न वा श्रीस्वामिरामानन्दस्य शिष्याः, न वा रामोपासकाः, न च 'बीजक' ग्रन्थस्य रचयितारस्सन्ति।

---

(१) 'कबीर एण्ड दी कबीरपंथ'—पृ० २८।
(२—६) " " " ।

अन्यत्र च—रतनपुरनाम्नि ग्रामे यस्य समाधिर्वर्णितः[1] स द्वादशः कबीरः यवन एव। सुलतानसिकन्दरलोदी नाम्नो यवनस्य समये वाराणस्यां सोऽयं कबीरो निरन्तरमीश्वरचिन्तने (खुदा की यादगार में) लीन आसीत् तथा ईश्वरसम्बन्धिरहस्यविषये बहूनि पद्यानि हिन्दीभाषायां विरचितवान यानि लोके लोकानां जिह्वाग्रवर्तितानि वर्तन्त इति तत्रैव (खुलासा तुत्तवारिखग्रन्थे) लिखितमस्ति।[2]

श्रीविलसन नामा संस्कृतविद्यामधीती संस्कृतकालेजनाम्नि राजकीय महाविद्यालये काश्यां प्राक् प्राध्यापकोऽपि आसीत्, स श्रीकबीरं (मुसलमानं) यवनं मनुते।[3] किन्तु 'कर्नलमलकोम' कथनानुसारेण सूफीसम्प्रदायानुगतं न मनुते। तदुभौ द्वावपि श्री कबीरं यवनं मन्वाते।

केचित्तु किंवदन्तीमाश्रित्य श्रीसद्गुरुकबीरं काश्यामेव विधवा-ब्राह्मणी[4] गर्भात् संजातं काशीसमीपगे लहरतारानाम्नि तड़ागसमीपे वने परित्यक्तं नीमा-नीरुभ्यां यवनाभ्यां पालितं मन्वते। तन्नोचितं प्रमाणरहितत्वात्। केचित्तु नीमानीरुनाम्नोर्यवनदम्पत्योः औरसं पुत्रं श्रीसद्गुरुं यवनमेव मन्यन्ते।[5]

साम्प्रदायिके ग्रन्थे केचित्तु लहरतारातडागे विकसिते कमलेऽन्तरिक्षाद् ज्योतीरूपेण प्रविश्य शिशुरूपेण संजातमिति मन्यन्ते। ततश्च चन्दनसाहुना प्राप्य पश्चात् नीरुनीमाभ्यां प्राप्तमिति स्वीकुर्वन्ति[6]।

---

(१-२) 'खुलासा तुत्तवारिख'–पृ० ४३ (रजा लाइब्रेरी, रामपुर, उ० प्र०)
(३) 'रिलीजस सिस्टम्स आफ हिन्दूइज्म्' पृ० ३०।
(४) 'हिन्दीसाहित्य का इतिहास'–पृ० ७५।
'कबीरग्रन्थावली भूमिका'—पृ० १६।
'रामरसिकावली भक्तमालटीका'–पृ० ७२३–२४।
'भक्तमालटीका प्रियादास कृत छप्पय छ०'–पृ० २६५।
(५) 'अनुमान है कि ये कविगण कबीरदासकी भांति ही इसी प्रकार किसी जाति के धर्मान्तरित वंश में हुए थे।'—'कबीर' पृ० १३।
'नाथसम्प्रदाय' पृ० २३।
(६) 'अनुराग सागरे'–पृ० ५८–६१। 'श्रीसद्गुरु कबीर महापुराणे'–पृ०२०५

केचित्तु प्रह्लादस्यावतारं ज्योतिर्मठाधीशशंकराचार्येण कस्याश्चिद् प्रतीच्याङ्गाया अप्सरसो गर्भे जातं लहरतारातडागे विकसिते कमले स्थापितं नीमानीरूभ्यां लब्धं पालितं च श्रीसद्गुरुकबीरं [1]मन्यन्ते। केचित्तु लहरतारा सरसि सरोजे गर्भाधानं तदुद्भूत च श्रीकबीरं मन्यन्ते।

यथा—

"दैवो हि कश्चन वियोगकशाविधून"।...इत्यारभ्य "वृद्धिं गतं च शनकैःकमलोदरं तद्रूपातिशय्यमपि तस्य किमप्यपुष्यत् रम्यात्सरोजकुसुमात्तत एव काले, प्रह्लाद आविरभवत्सुभगः कबीर[2]:"॥

श्रीसद्गुरुकबीरपथपथिकः श्रीब्रह्मलीनमुनिस्तु[3] भविष्यपुराणमाधारीकृत्य श्रीसद्गुरुमीश्वरावतारं मनुते। किन्तु मुद्रिते भविष्यपुराणग्रन्थे तु कुत्रापि नैतद् दृश्यते। भविष्यपुराणदर्शनात्तु इदं प्रतीयते, यद् धान्यपालनाम्नः कस्यचित् काशीवास्तव्यस्य वैश्यस्य मूलनक्षत्रे गण्डान्ते जातो मातापितृभ्यां काश्या एव समीपस्थे वने ( विन्ध्यवने ) परित्यक्तः श्रीसद्गुरुकबीरो बभूव। स च तत्र स्वभावतो गतेन केनचिद् अलीकनाम्ना अनपत्येन तन्तुवायेन यवनेन लब्धः। तेन सप्तवर्षाणि यावत् पालितो गोदुग्धमात्रञ्च तदाहार आसीत्। स च तदनन्तरं श्रीस्वामिरामानन्दनाम्नो गुरोः दीक्षां प्राप्य स्वयंपाको पक्वमन्नं प्रत्यहं हरये समर्पयत्, तत्प्रियार्थञ्च हरिस्तस्य सर्वकामप्रदो बभूवेति[4]।

भविष्यपुराणं सम्यग्विविच्य वयं तु ब्रूमः—सद्गुरुः श्रीकबीरो धान्यपालनाम्नः कस्यचित् काशीवास्तव्यस्य कृषकवंश्यस्य गृहे मूलगण्डान्तजः पुत्रो

(२) 'प्रसङ्गपारिजाते अष्टपदी ४५–४६।

(३) श्रीस्वामिरामानन्द दिग्विजयः—५।२०–२४।

(४) श्रीसद्गुरुकबीरचरितम्, भूमिका पृ० १९ यथा—

भारते यवनाक्रान्ते निर्देष्टुं सत्पथं नृणाम्।
हरिः कबीरनाम्ना हि कलावत्रतरिष्यति॥
बन्धाज्जातिभेदादेरुन्मोक्तुं नॄन् कलौ किल।
वक्तुं तत्त्वं कबीरो सन् पद्मे प्रादुर्भविष्यति॥

(५) भविष्यपुराणे ३।१७।३२–३९ पृ० ३५६।

माता-पितृभ्यां काशीसमीपस्थं लहरतारातडागं परित: प्रसूते विन्ध्यसम्बद्धे तदानीन्तने महावने परित्यक्तो नीरूनाम्ना ( अलीक ) तन्तुवायेन अनपत्येन यवनेन लब्ध: पालितश्च, स च दुग्धमात्राहार: सप्तहायन:, रामानन्दगुरुं प्राप्य ततो दीक्षां जग्राह । तस्य च नीमानीरूनामभ्यां यवनदम्पतिभ्यां पालितत्वात् तं सर्वे तदानीम् इदानीमपि च यवनं मन्यते । वस्तुतस्तु प्रागुक्तप्रमाणेन श्रीसद्गुरुकबीरो वैश्यजातीयो ( कृपको ) हिन्दुरिति, न तु यवनस्य औरस: पुत्र: ।

## (३) गुरुदीक्षा

जन्मस्थानविप्रतिपत्तावपि श्रीसद्गुरुकबीर: स्वामिरामानन्दस्य शिष्य इत्यत्र तु बहव: सम्वदन्ते । तद्यथा–श्रीव्यास:[1], श्रीनाभादास:,[2] श्रीगुरुनानकदेव:[3], श्रीचेतनदास:[4], श्रीअनन्तदास:, श्रीप्रियादास:. श्रीमान्रीवांनरेश[7]विश्वनाथसिंह:, श्रीअबूलफजल:[8], श्रीगरीबदास:[9], श्रीरविदास:[10], श्रीतुकाराम:[11], इत्यादय: ।

## (५) श्रीसद्गुरुकबीरस्य [illegible]

मया पूर्वं दर्शितं यत् श्रीसद्गुरुकबीर: काश्या: समीपस्थे लहरतारासमीपगे बने पितृभ्यां परित्यक्तो नीमानीरूभ्यां तन्तुवायाभ्यां लब्ध: पालितश्चेति । स च सप्तहायन: श्रीस्वामिरामानन्दगुरो: सकाशाद् दीक्षां शिक्षाञ्च जग्राह इति । शिक्षां विना कथं बीजकनामा अपूर्वो ग्रन्थो विनिर्मितस्तेनेति । अयं

(१) भविष्य पुराणे द्वि० प्र० सर्गे सप्तदशाध्याये–पृ० ३५६ ।
(२) भक्तमाल छप्पयछन्दसि ३१–३२ । (३) गुरुग्रन्थसाहब राग गौड़ी ३ ।
(४) प्रसंगपारिजात:–अष्टपदी ४६ ।
(५) कबीरजीकी परिचई पृ० ६७८ "बड़े भाग रामानन्द गुरु पाया"
(६) भक्तमाल टीका प्रियादासकृत छप्पय २६५ । छप्पय ३१ पृ० २८२ ।
(७) बीजक रीवाँ नरेश कृत पाखण्डखण्डनी टीका भूमिका पृ० १–२
(८) आईने ए अकबरी जिल्द ३ पृ० ४९ । (९) गुरुग्रन्थ साहब पृ० २१४
(१०) रविदास की वाणी संग्रह छ० ३५, ६४, ६६ । (११) तुकारामवाणी संग्रह ।

'बीजक' ग्रन्थः श्रीकबीरनिर्मितो भवतु, अन्यैः शिष्यैः श्रीभगवान् गोस्वामिप्रभृतिभिः संगृहीतो वा भवतु, एतस्य श्रीकबीरवाणीसंग्रहरूपत्वे तु नास्ति विवादः। श्रीसद्गुरुकबीरेणाद्भुतं ज्ञानमपि स्वगुरोः सकाशात् प्राप्तमिह ध्रुवां भाविनीं वा शिक्षां विद्योतयति। श्रीकबीरः स्वयमपि ज्ञानं गुरुं विना दुर्लभं मन्यते। उपनिषदि आत्मज्ञानविषये 'यस्मिन् विज्ञाते सर्वं विज्ञातं भवति' इति प्रतिपादितम्। तत्तु स्वयं श्रीकबीरेणोक्तम्—

मसि कागज छुओ (छुयो) नहीं, कलम गह्यो (धरों) नहिं हाथ[1]।
चारिहु युग के महातम, मुखहिं जनाई बात॥

अस्यायमाशयः। इदानीं यावन्मया संक्षेपेण सर्वं लिखितमतः परं तु वर्णनीयबहुत्वात् मया लेखनी न स्पर्शनीया भविष्यति, सर्वं सविस्तरं वर्णयिष्यामीति[2]।

अथवा प्राचीनकालेऽपि वेदस्य लेखो न आसीत् अतएव वेदोऽनुश्रवशब्देन उच्यते। "गुरुमुखाद् उच्चारणमनुश्रूयते इति अनुश्रवो वेद इति"व्युत्पत्तेः। तद्वत् श्रीकबीरोऽपि लेखनीं मसीञ्च विना गुरुमुखाद् अधीतवान् इति युक्ततरं प्रतीयते। तद्वत् श्रीकबीर-पथपथिकाः शिष्याः 'बीजकोऽपि' पूर्णरूपेण गुरुमुखादनुश्रुत-एवेति कबीरानुयायिनो मन्यते। इदानीमपि अनेके गुरुपरम्पराप्राप्तं श्रुत्वा बीजकज्ञानं स्मरन्ति।

प्रागुक्तस्य श्रीकबीरपद्यस्यायमप्यपरो भावः प्रतीयते। यदयं स्वाभिमानपरिहाराय एवमुक्तवानिति 'महाकविकालिदासवत्'। यद्वा स्वाध्ययनस्वाल्पकालिकत्वाल्पविषयकत्वकथनद्वारा स्वाभिमानपरिहाराय तेन एवमुक्तमिति। ये तु तस्य शिक्षां सर्वथा न मन्यते ते सर्वेऽप्येवं प्रबोधिनीयाः श्रीसद्गुरुकबीरस्याधुनिकी शिक्षा न आसीदिति।

अन्यथा शिक्षां विना निम्नलिखितस्य संस्कृतस्य पद्यस्यानुवादं भावञ्च कथं कृतवान् इति। तद्यथा–'जले तस्थिवान् स पिपासुः[4]। अनुवादः ?

'पानी में मीन पीयासी[5]'

---

(१) बीजक साखी १८४। (२) तत्रैव शिशु बोधनी टीका।
(३) रघुवंश सर्ग १-२-३। (४) ऋग्वेद।
(५) श० मृ० पृ० १५८ सि० पद ३ 'कबीर' पृ० २४७ भजन ४३।

'धुखिया जल बिच मरत पियासा[१]'

ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्मदक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं न प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्[२] ॥

श्रीसद्गुरुकबीरः—साधो राम बिना कछु नाहीं । टेक ।
रामहिं आगे रामहि पीछे । रामहिं बोले माहीं ।
उत्तर रामहि दक्षिण रामहि, पूरब पश्चिम रामा ।
स्वर्ग पाताल महीतल रामा, राम सकल विश्रामा[३] ॥

'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमात्व विजिज्ञासितव्य इति[४]'

श्रीसद्गुरुकबीरः—'अब हम एक एक करि जाना । टेक ।
दूजा कहै ताहिको दोजख, जिन तत नहिं पहिचाना[५]' ॥

अर्थात् विचारानन्तरं एकमेव परब्रह्म ज्ञातवान्, यतो यो द्वितीयं सत्य वदति तस्य नरकं भवति । (दुःखं प्राप्यते) तत्वज्ञानरहितत्वात् ।

'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति[६] ॥

श्रीसद्गुरुकबीरः—सुरत से देख ले वह देश । टेक
देखत-देखत दीखन लागे, मिटगो सब अन्देश ।
न वहां चन्दा न वहां सूरज, नाहीं पवन परिवेश[७] ॥'

इत्यादि

## (५) श्रीसद्गुरुकबीरस्य पारिवारिकजीवनम्

श्रीसद्गुरुकबीरः श्रीस्वामिरामानन्दस्य शिष्यः विरक्तो बभूव । तस्य पालकौ पितरौ नीमानीरूनामानौ' बभूवतुः, इति मया प्राङ्निर्धारितम् ।

---

(१) शब्दामृतसिन्धु–पृ० १५८, भजन २ अंग १७ ।
(२) मुण्डकोपनिषदि २।२।११ । (३) श०मृ०सिन्धु पृ०१०८ भजन ४ ।
(४) छान्दोग्योपनिषदि ७।२३।१ । (५) श०मृ०सि० प्र० ११भजन १८ ।
(६) कठोपनिषदि [illegible] । (७) श०मृ० [illegible]

स्त्रीपरिग्रहस्तु तेन न कृतः। ये तु स्त्रीपरिग्रहं तस्य मन्वते तैस्तत्र चैतान्यधोलिखितानि प्रमाणानि निर्दिष्टानि। तद्यथा—

'पहलो कुरूपि कुजाति कुलखनी[१]···· ···· इत्यादि
'मेरी बहुरिआ का धनिआ नाऊ। ले राखिओं रमजनिया नाउ[२]।
सुनिअंधली लोई बेपीर। इन्ह मुंडीयन भजि सरन कबीर[३]॥
रे यामें क्या मेरा क्या तेरा[४], ··· ··· ···· ··· ··· इत्यादि।

अत्र लोई कबीरस्य गृहे आसीदित्युक्तम्। तेन 'लोई' श्रीकबीरस्य पत्नी आसीदिति सम्भाव्यते।

मूड़ पलोसि कमरबधि पोथी
'हम कउ चायनु उन कउ रोटी'[५]

(१) सन्त कबीर - पृ० ६१–६२, 'गुरुग्रन्थसाहब' राग आशापद ३२ यथा—
'पहली कुरूपि कुजाति कुलखनी साहुरे पेइऐ बुरी।
अबकी सरूपि सुजाति सुलखनी सहजे उदरि धरी॥
भली सरी मुई पहिली बरी। जुग जुग जीवउ मेरी अबको धरी॥
कहु कबीर जब लहुरी आई, बड़ी का सुहाग टरियो।
लहुरी संगि भई अब मेरे जेठी अउर धरियो॥

(२) मेरी बहुरीया का धनिया नाऊ। ले राखिओ रमजनिया नाऊ
इन्ह मुंडीअन मेरा घर धुधरावा, बिटवहि राम रमउवा लावा
कहत कबीर सुनहु मेरी माई, इन मुंडीअन मेरी जात गंवाई॥
'सन्त कबीर' प्रस्तावना पृष्ठ ६१। गुरुग्रन्थसाहब राग आशापद ३३।

(३) गुरु ग्रन्थ साहब राग गौड़ी आशापद ६।

(४) रे या में क्या मेरा क्या तेरा, लाजन न मरसि कहत घर मेरा।
चारि पहर निस भोंरा, जैसे तरवर पंखि बसेरा।
जैसे बनिये हाट पसारा, सब जग का सो सिरजन हारा।
वे ले जारे वे ले गाड़े, इन दुखियनि दोऊ घर छाड़े।
कहत कबीर सुनहु रे (नर) लोई, हम तुम बिनसि गे रहेगा सोई।
—कबीरग्रन्थावली पृ० ९३ पद १०३

(५) गुरुग्रन्थसाहब गौडी राग ६, सन्त कबीर पृष्ठ ६१–६२।

'तिया सुत मात मग देखे भूखे, आवें कब दयि रहे-
हाटन में, लावै कहा धाम[1] कौं' इत्यादि ।

१-एतानि प्रमाणानि विवेचनीयानि । एतानि वचनानि मानसवृत्तौ कुत्सित स्त्रीरूपत्वमारोप्य प्रवृत्तानि । एतच्च आध्यात्मिकवृत्ति स्त्रीरूपकेण परोक्षरूपतया निरूपितम् । उपनिषत्स्वपि देवासुररूपकेण वृत्तिद्वयं निरूपितम् । एवमग्रेतनेष्वपि पूर्वोक्तपद्येषु ज्ञेयम् ।

२-डा० रामकुमारवर्मोदाहृते पद्ये तु ज्ञानतः स्त्रियाश्चैव नास्ति, तत्र तु मुसलरूपेण मनोवृत्तेः प्रतिपादनं ज्ञायते ।

३-भक्तमालटीकायामपि स्त्रीणां स्वभाव एव वर्णितः, न कबीर-स्त्रियाः कापि चर्चा अस्ति । सत्यपि वा कबीरस्त्रीपरत्वे एतस्य ग्रन्थस्य न प्रामाणिकत्वम्; एतस्य पद्यस्याधारानुल्लेखात् ।

४-श्रीनाभादासेन मूलग्रन्थे 'भक्तमालाख्ये' श्रीकबीरस्त्रीसत्त्वं न वर्णितम् । श्रीकबीरपद्ये स्वयं सद्गुरुणा कबीरेण स्वस्य स्त्रीभावः कल्पितः, स तु न स्त्री-रूपत्वं निर्भाति, किन्तु पुरुषरूप एव । यथा—

'हरि मोर पीव में राम की[2] बहुरिया' इति

अथवा—श्रीकबीरसाहित्ये श्रीकबीरस्य यत् स्त्रीविषयकं वृत्तं तत्सर्वं मानस-कल्पनारूपं रहस्यवादरूपं मानसः संसारो वा यथा मानसी पूजा ।

न हि सप्तहायनानन्तरं श्रीस्वामिरामानन्दशिक्षितस्य निवृत्तिनिष्ठस्य कबीरस्य गार्हस्थ्यस्य स्त्रीपरिग्रहस्य सम्भवो रागाभावात् । श्रीकबीरस्य पद्यमपि तस्य स्त्रीपरिग्रहाभावं स्पष्टं विद्योतयति—

भली भई सतगुरु मिले, नहीं तर होती हाणि ।
दीपक दिष्टि पतंग ज्यूं, पड़ता पूरी जाणि[3] ॥

---

(१) भक्तमालटीका छ० २६८—नोट—यह कार्य प्रियादास के पौत्रशिष्य श्रीनारायण द्वारा सन् १७६९ में पूर्ण किया गया है देखें 'कबीर एण्ड दी कबीरपंथ, पृष्ठ ३१ अतः यह मिथ्या कल्पना है ।

(२) बीजक शब्द ७४, कबीरग्रन्थावली पद ११६ ।

(३) कबीरग्रन्थावली गुरु, अं०, साखी १९ ।

नारी की झांई परत अन्धा होत भुजंग।
कहहिं कबीर ताकि कौन गति, जो नित नारी के संग'॥ इत्यादि बहुविधा च नारी निन्दा तत्रैव वर्णिता तेन। श्रीरामानन्दसिद्धान्ते बहुषु भेदेषु एकोऽयमपि भेदो यत् स्त्रीपुत्रादिपरित्यागोऽस्ति। अतएव तस्य सम्प्रदायस्य नाम विरक्तः ( वैरागी इति ) आसीत्। श्रीरामानन्दस्वामिना सह पर्यटत्सु सर्वेषु शिष्येषु अनन्तानन्दादिषु रैदासपीपाभिन्नेषु एकादशसु नैकोऽपि दारपरिग्रहं कृतवान्। अनेनापि सिद्ध्यति यच्छ्रीकबीरो दारपरिग्रहं न कृतवान्। यः श्रीकबीरः सपत्नीक आसीत् स तु शेखतकी शिष्यः कबीरः षष्ठः पूर्वोक्त एव। रैदासपीपानामानौ द्वौ जनौ सपत्नीकत्वेन तत्र तत्र लिखितौ वर्तेते। किन्तु श्रीकबीरस्योल्लेखो विरक्त एव[2]।

## (६) कबीरः कमालश्च

एवं स्त्रिया अभावे पुत्रोऽपि श्रीसद्गुरुकबीरस्य नासीदिति साधु सिद्ध्यति। यत्तु उक्तम्—श्रीकबीरस्य कमालनामा पुत्रो जात इति। तत्रेदमुच्यते—

'चले कमाल तब शीस नवाई। अहमदाबाद तब पहुंचे जाई।'[3]

तत्र गुर्जरप्रान्ते अहमदाबादे नगरे यस्य समाधिर्जीवनञ्च, स कमालो मालवदेशवास्तव्यः सिद्धः, तत्र निवसति स्म इति तत्र ख्यातिः[4] समाधिस्थलेखादपि प्रतीयते। सः मालवदेशनरेशं (मुहम्मद खीलजी) नमस्कृत्य अहमदाबादमागतः, न तु कबीरं नमस्कृत्य। 'शेख पीर कमाल मालवी' इति संज्ञा ख्याति।

किञ्च स कमालः' शाह आलमपीर' नाम्नो यवनसाधोः समकालिक आसीत्, तेन सह विवादो बभूव इति कथा तत्र प्रसिद्धा। 'शाह आलम' नामा यवनपीरश्च श्रीकबीरात् सम्भवतः शतद्वयवर्षेभ्यः परस्मिन् काले बभूव इति नास्य

(१) साखी ग्रन्थ कामक्रोधादिअंग साखी २।
(२) भक्तमाल छ० छन्द ३२।
(३) बोधसागरे कमालबोधे प्रा० पाठ–पृ० १५१५, न० पाठ ख० १०–पृष्ठ ४।
(४) 'शेखपीर कमाल मालवी' मालवा से गुजरात आए थे और अहमदाबाद में रहते थे। शाह आलम द्वारा यहीं इनकी मृत्यु हुई।' मुस्लिम सेन्ट आफ अहमदाबाद एण्ड वाड पटन' पृ० २६६ (शोधप्रबन्ध)।

कमालस्य श्रीकबीरपुत्रत्वम्, तत्र एषा प्रसिद्धिः[1] । शेखअब्दुलकबीरस्य शेखतकी परम्परागत एव कमालः सिद्ध्यति ।

यस्तु अपरकमालः फैजाबादमण्डले जलालपुरस्य निकटे 'दरगाह' नाम्ना ग्रामे प्रसिद्धे समाधौ स्मर्यते स ब्राह्मणभावाद् यवनसाधुभावं प्राप्तः । अतः 'पण्डित कमालः' इति प्रसिद्धः । तत्र वार्षिकोत्सवोऽपि भवतीति । न चैतस्यापि कबीरपुत्रत्वं सम्भाव्यते । एवं यदि अन्येऽपि कमालाः 'मगहर' जगन्नाथपुर्यादौ काल्पनिकसमाधिस्थिताः तेऽपि न कबीरपुत्राः प्रमाणाभावात्, तत्र न किमपि लिखितम् । काश्यान्तु न कमालस्य किञ्चिदपि स्मारकं वर्तते इति अप्रमादेन अवधेयम् । यत्तु इदं पद्यं दृश्यते—

---

(१) कमाल की कथा—अहमदाबाद के नवाब ने अपनी शान्ति और सल्तनत के लिये सैयद बुरहानुद्दीन से निवेदन किया कि आप पीर कमाल से अनुरोध कर मुहम्मद खिलजी द्वारा चढ़ाई को रोकया दें । सैयद ने अपने पुत्र शाह आलम को कई बार पीर कमाल के पास भेजा । चौथी बार 'शेख पीर कमाल ने शाह आलम से कहा, सात वर्ष तक रोजा और प्रार्थना करके गुजरात प्रदेश का राज्य मुहम्मद खिलजी मालवा के नाम खुदा से बदलवाया हूं । जो व्यक्ति मुझ पर अत्याचार किया है, उसके लड़के को गुजरात की बादशाही (शासन) कैसे करन दें । और मुहम्मद खिलजी जो साधु सन्तों का बड़ा भक्त है उसकी इच्छा कैसे पूरी न होने दूं, यह नहीं हो सकता । सैयद बुरहान्नुदीन को मेरा आशीर्वाद पहुँचाना और कहना कि धनुष से छुटा हुआ तीर पीछे खीचना कठिन है । इस पर हजरत शाह आलम ने धीरे से हंस कर कहा कि सन्त पुरुषों में इतनी ईश्वरीय शक्ति होती है कि वे एक बार छुटा हुआ तीर पीछे खींच सकते हैं । इसको सुन कर शेख पीर कमाल को क्रोध आया··· · ···बा में शाह आलम का भी क्रोध आया । उसने अपनी शक्ति द्वारा कमाल को वहीं मूर्छित कर दिया । होश होने पर शेख पीर कमाल ने कहा सैयद के पुत्र ने 'जोर मारी' इस शब्द का बोलकर उसने वहीं प्राण त्याग दिया । मीरा ते सिकन्दरी ले० मियाँ सिकन्दर मुहम्मद पृ० ५५-५६ ।

गुजराती टीका पृ० ५३-५४ ।

'बूड़ा वंश कबीर का उपजा पूत कमाल ।' (पाठभेद--उपजिओ पूत कमाल) हरि का सिमरन छाड़िके लाये माल हजार ।।[1] इति

अस्यायमभिसन्धि:—'संख्या वंश्येन'[2] इति पाणिनिसूत्रात् प्रतीयते वंशो द्विधा-'विद्यया जन्मना' चेति । ततश्च श्रीसद्गुरुकबीरस्य दारपरिग्रहाभावात् कमालनामा शिष्य: संभाव्यते, न तु तस्य पुत्र इति प्रतीयते । पुत्रत्वं तु दीक्षा-रूपविद्यावंशद्वारा । तस्मै च यद् ज्ञानं शेखकबीरेण दत्तम्, तस्य दुरुपयोग: तेन कृत: ! स तु विषयसुखसिद्धये द्रव्यलोभेन वा अमूल्यज्ञानं विक्रीतवान्[3], इति कैश्चित् सम्प्रदायविद्भिरुच्यते ।

कश्चित् तु आंग्लभाषाभाषीलेखक:[4] मन्यते—कमाल: श्रीकबीरस्य पालित: पुत्र आसीत्, इति न, तत्प्रमाणाभावात् । अपरं च पुत्र: जन्म गृह्णाति तेन 'जन्मे पूत कमाल' इति वक्तव्यमासीत् 'उपजे' पूत कमाल इति कथनेनापि शिष्यस्यैवोत्पत्ति: प्रतीयते । स तु शेख अब्दुलकबीरस्य शिष्य: आसीत् । श्रीस्वामिरामानन्दशिष्यश्रीकबीरस्य शिष्यपुत्रो वा स न सिद्ध्यति ।

कमाली मुलताननगरस्थस्य कस्यचिद् यवनसिद्धशेखकबीरस्य[5] पुत्री 'कमाली' तत्रैव च तेन कस्मैचिद् यवनाय दत्ता" इति । कबीरनामसाम्येनाधुना श्रीस्वामिरामानन्दशिष्यस्य श्रीकबीरस्य पुत्री कल्पितेति प्रतीयते । पुष्टप्रमाण-भूतं लेखं कोऽपि न प्रदर्शयति । यथा शेखपीरकमालस्य प्रमाणं प्राप्यते इति दिक् ।

## (७) श्री सद्गुरुकबीरस्य भ्रमणम्

श्रीकबीर: सम्पूर्णभारते स्वामिना श्रीरामानन्देन सह एकाकी च भ्रमणं कृतवान् । इदं प्रसंगपारिजाते[6] लिखितमस्ति । भक्तमालग्रन्थेऽपि[7] अस्य संकेतोऽस्ति । अनेकै: लेखकैरिदं स्वीकृतम् ।

---

(१) गुरुग्रंथसाहब—तरणतारण सं० पृ० ११५ । सन्त कबीर पृ० ११५ ।
(२) अष्टाध्यायी २।१।१९ । (३) कबीर एण्ड दी कबीर पंथ पृ० ३२ ।
(४) तत्रैव पृ० २७ उद्धृत—'मुताखिब उल तवारिख' से ।
(५) उत्तर की सन्तपरम्परा पृ० २६६, सद्गुरुकबीरचरितम् पृ०३८७, हिन्दी साहित्य का इतिहास पृ ० ९० ले० डा० चन्द्रकान्तबली ।
(६) प्रसङ्गपारिजात अष्टपदी ८५-८७ ।
(७) श्रीरामानन्ददिग्विजय अ० ५ भक्तमाल छ० ३२ ।

किञ्च श्रीकबीरस्य रचनापद्यं प्रत्येकं प्रान्तानां भाषासूपलभ्यते। महाराष्ट्रभाषायाश्च प्राचीनग्रन्थेषु वारकरीसम्प्रदाये प्रसिद्धेषु श्रीकबीरस्य वाणी गीयते। श्रीनामदेवकबीरो: कीर्तनं नामदेवशिष्याया: जनाबाई[1] नामिकाया; पद्येषु समुपलभ्यते।

जगन्नाथपुर्यामुत्कलभाषाया: प्राचीनग्रन्थेषु तालपत्रेषु श्रीकबीरस्य पद्यानि समुपलभ्यन्ते। तथा तत्र कबीरस्य नामत: कश्चित: समाधिरपि वर्तते। चरणपादुकादि उपलभ्यते।

सम्पूर्णगुर्जरप्रान्ते मध्यप्रदेशे च श्रीकबीरस्य भ्रमणं प्राचीनग्रन्थेषु तस्य वाण्यपि च लभ्यते। रीवांनरेश: श्रीविश्वनाथसिंह: स्ववंशजानां प्रवृत्तिं श्रीकबीरस्य प्रसादात् द्विचत्वारिंशत् परम्परापर्यन्तं (४२) मनुते[2]। किञ्च स श्रीकबीरं स्वामिरामानन्दस्य शिष्यं मनुते। कन्याकुमारीसमीपे तोताद्रिमठे श्रीकबीरस्य चमत्कृता कथा श्रीरामानन्ददिग्विजये लिखिता[3] वर्तते।

श्रीगुरुग्रन्थसाहबनाम्नि ग्रन्थे पञ्जाबदेशीयै: समादृते श्रीकबीरवाणी बहुधा उपलभ्यते। राजस्थाने दादूसाहबमलूकदासाभ्यां श्रीकबीरस्य गुरुत्वस्वीकार एव तस्य तत्र भ्रमणं साधयति।

मध्यप्रदेशे, बिहारप्रान्ते, उत्तरप्रदेशे, गुर्जरप्रान्ते च इदानीमपि तस्य भ्रमणं तत्र तत्र तदनुयायिभि: प्राचीनतम मठस्थापनेन स्वीक्रियतेऽनुमोयते च। हरियाणाप्रान्तस्य श्रीगरीबदासोऽपि श्रीसद्गुरुकबीरं गुरुत्वेन अङ्गीकरोति।

यदा प्राचीनकाले आन्ध्रप्रदेशस्य वीरशैवजंगमसम्प्रदाय उत्तरभारते न प्राप्त आसीत्, तदा कबीरस्य तन्मतखण्डनमेव तस्यान्ध्रप्रदेशेऽन्यत्र च दक्षिणप्रान्ते भ्रमणमनुमापयति। दिल्लीनगरस्याधीशानां नामवृत्तयोश्चचैव श्रीकबीरस्य दिल्लीभ्रमणं द्योतयति। एभि: सर्वैस्तर्कै: श्रीकबीरस्य सम्पूर्णभारतभ्रमणं प्रख्यायते। स यावज्जीवनं पाखण्डमतानां खण्डनार्थं स्वसिद्धान्तानाञ्च प्रचारार्थं भ्रमणं कृतवान्।

श्रीकबीर: तत्तत्प्रदेशेषु भ्रमणं कृतवान्, अत: तत्तत्प्रादेशिकभाषाग्रन्थेषु श्रीकबीरपद्यानि समुपलभ्यन्ते। तत्तत्प्रान्तीया: साधव: स्वान् श्रीसद्गुरुकबी-

(१) श्रीनामदेव वाणी संग्रह हस्तलिखित पद ३३६ (उनकीजन्मभूमि) पर है।
(२) बीजक भूमिका जीवनवृत्त पाखण्डखण्डनी टीका पृ० ३-५।
(३) श्रीरामानन्ददिग्विजय अ० ५-८।

रस्यानुयायिनः मन्वते। एतैः प्रमाणैरिदं सिद्धं भवति यत् श्रीसद्गुरुकबीरस्य भ्रमणं प्रत्येकप्रान्तेषु आसीदित्यत्र न विप्रतिपत्तिः। बीजकग्रन्थस्य पद्यप्रमाणेन श्रीसद्गुरुकबीरस्य देशविदेशयोर्यात्रायाः संकेतो भवति। यथा—

"देश विदेशे ह्वौं फिरा, गली गली को खोरि[१]।
ऐसा जियरा ना मिले, लेवै फटक पछोर॥"

## (८) श्रीसद्गुरुकबीरस्योदेशः

(१) दुर्यशोजनकं कर्म न कर्त्तव्यम्, सद्गुरोर्ध्यानं च कर्त्तव्यम्। अभिमानो हेयः, अनार्यरीतिस्त्याज्या, दयादानं चाचरणीयम्। विश्वस्य नश्वरत्वं चिन्तनीयम्, सुकीर्तिकरं कर्म कर्त्तव्यम्, गुरुभिः सद्भिश्च श्रेष्ठैरनुगतो मार्गः अनुसरणीय[२] इति।

(२) योगमार्गोपदेशः—मनसोऽपि विश्वासो न कर्त्तव्यः, मनोनिग्रहार्थं गुरौ प्रीतिः कार्या। भवसागरतरणाय गुरुचरणौ शरणीकर्त्तव्यौ। जगति कुशलता प्राप्तये सत्यं भगवन्नाम आराधनीयम्[३]। सर्वेषां कामानां परित्यागे जन्ममरण-परम्परोपरमस्य साधनम्, नारीसङ्गपरित्यागश्च विशेषतः तत्साधनम्।[४]

शोभनं कर्म, शोभन आचारः, भक्तिः, शीलं, क्षमा, संयम एतानि गत्या-गतिनिवृत्तिसाधनानि। स्वात्मचिन्तनम्, जगन्मिथ्यात्वचिन्तनम्, सद्गुरुनामजप

(१) बीजक साखी परिशिष्ट (६३)
(२) शब्दामृतसिन्धु उपदेश प्र० भजन १ पृ० ३८। यथा—
मत बाँधो गठरिया अपयश की।
जब यमराज लेने को आवें, मगरूरी निकले नस नस की।
जो सतगुरु का ध्यान लगावैं, मिटै चौरासी मानुष की।
ह्वै निर्भय परम-पद पावै, फाँसी कटि जाय तिसकी।
कहैं कबीर सुनो भाई साधो, चूवत बून्द अमीरस की॥
३. करो न कोई यह मन की परतीति। टेक। श० मृ० सि० पृ० ३९, भ० ४। तथैव नाम भ० प्र० ४ पृ० ७७।
४. श० मृ० सि० मन और माया प्र० पृ० १६२ भ० ७।

एतानि मुक्तिसाधनानि[1]। सर्वेषु जीवेषु एकमेवाद्वितीयं ब्रह्म वर्तते। मुक्तिमार्गे जातिविशेषस्य नोपयोगः[2]।

शिवशक्त्योरैक्यं भावनीयम्, द्वैतभावना च निवर्तनीया पाखण्डमार्गस्त्याज्यः। सर्वत्र ब्रह्मदृष्टिः कर्त्तव्या, कर्मैव संसाररूपस्य बन्धनस्य साधनम्। ततः कर्म त्याज्यम्।

श्रवणमननिदिध्यासनैः आत्मज्ञानं सम्पादनीयम्। गुरुस्तुतिः कार्या। सर्वत्र आत्मचिन्तनं कर्त्तव्यम्। इत्यादय उपदेशाः शब्दामृतसिन्धोरुपदेशप्रकरणे दर्शिताः।

## (९) समाधिः

यद्यपि श्रीकबीरस्य चत्वारि समाधिस्थानानि लोके श्रूयन्ते। यथा—

(१) बेलहरा। (२) रतनपुर। (३) जगन्नाथपुरी। (४) मगहर इति।

(१) तत्र फैजाबादमण्डलान्तर्गते बेलहरा नाम्नि ग्रामे समाधेः किमपि स्थानं नोपलभ्यते। न वा आप्तजनश्रुतिर्विद्यते। तस्मात् तत्र समाधिकल्पनं भ्रान्तिविलसितम्। 'इह वटे यक्षस्तिष्ठति' इति वत् निर्मूलम् ऐतिह्यमात्रम्।

(२) रतनपुरग्रामे तु मन्निबन्धे प्राग्दर्शितस्य द्वादशस्य यवनकबीरस्य समाधिस्थानमिति 'खुलासा तुत्तवारिख' पृ० ४३ दर्शनादवगम्यते[3]।

(३) जगन्नाथपुर्यां यः कबीरस्य समाधिः स तु न प्रमुखश्रीकबीरस्य यतो हि श्री कबीरस्य तत्र गमनमात्रं न तु निधनस्थानरूपमिति तत्रत्य कबीरमठाधीशाद् विज्ञातम्। यत्तु 'आइने ए अकबरी[4]' ग्रन्थे तत्र श्रीकबीरस्य समाधिस्थानं लिखितं तदपि अनयैव रीत्या बोध्यम्।

---

१. हंसा कर ले शब्द निबेरा। टेक।
करै देह धरि बहुत चातुरी, मुये कहाँ घर तेरा॥ इत्यादि॥
—श० मृ० सि० उ० प्र० पृ० ४५ भ० १८,।

२. पण्डित सत्त पद जनु हो भाई, जासो काल अवधि मिटि जाई।
शूद्र शरीर ब्रह्म तव भीतर, भिन्न भाव कछु नाहीं।
लक्ष चौरासी जीव योनि में, बरत रहो सब माहीं। इत्यादि।
—श० मृ० सि० उ० प्र० पृ० ४३ भ० १४।

३. खुलसा तुत्तवारिख पृ० ४३।

४. "आईने ए० अकबरी" वाल्युम ३, प० १७१। वा० ३ पृ० १२९-१३०।

(४) श्रीकबीरस्य समाधिस्थानं निधनस्थानरूपं 'मगहर' इत्यत्र तु बहवः सम्वदन्ते। तथा हि-श्रीपरशुराम चतुर्वेदी[1] एवं मन्यते-श्रीकबीरस्यमृत्युस्थानं 'मगहर' इति तस्य रचनाभिः प्रतीयते। श्रीकबीरः स्वयमुक्तवान् यत् समस्त-जीवनं काश्यां व्यतीतं कृत्वा आयुषोऽन्ते-'मरती बार मगहर उठि आइया' तथा 'मरनु भइया मगहर को वासी' इति। तथा अन्यत्रापि-जउ तनु काशी तजहि कबीरा, रमइये कहा निहोरा' इत्युक्तवान्।

किया काशी किया मगहर, ऊखरराम रिदै जऊ होई। 'इत्यादि श्री-कबीरेण वर्णितम्।[2]

श्री धर्मदासस्य शब्दावली[3] नाम्नो ग्रन्थादपि श्रीकबीरस्य समाधिस्थानं मगहर इति प्रतीयते।

'आइने ए अकबरीग्रन्थेऽपि' इदं वर्णितमस्ति, श्रीपरशुरामचतुर्वेदिनो मतमाधारीकृत्य इदं प्रतीयते यत् आयुषोऽन्तिमदिनेषु श्री कबीरः काशीं परित्यज्य मगहरस्थानं गतः, यत्रासौ समाधिं प्राप। केचित्तु मगहरशब्दस्थाने मगह'शब्दं प्रकल्प्य श्रीकबीरस्य मगधदेशे मृत्युं कल्पितवन्तः। किन्तु सत्यस्य मगहरस्य बस्तीमण्डले प्रसिद्धस्य स्थाने 'मगध' देशकल्पना असाध्वी एव प्रभाति।

एवं डा० श्यामसुन्दरदास[4] -कल्पनाऽपि प्रत्याख्येया। एवं केदारनाथ-द्विवेदी[5] अपि मगहरग्राममेव श्रीकबीरस्य समाधिस्थानं मनुते।

एवं कबीराणां बहुत्वेऽपि तदज्ञानादेकत्वं परिकल्प्य रामानन्दशिष्यस्य श्री कबीरस्य स्त्रीपुत्रादिपरिवारकल्पना लोकैः कृता। वस्तुतस्तु रामानन्द-

---

(१) "उत्तरी भारत की सन्त परम्परा" पृ० १४१–१४३ प्रकाशन वि० स० २००७।

(२) गुरुग्रन्थ साहब, राग धनसरी ३

(३) धनि धर्मदास शब्दावली शब्द १० पृ० ४

(क) आईने ए अकबरी, पृ०८२ प्र० नवलकिशोर प्रेस लखनऊ सन् १८६९ ई०

(ख) उ० भा० सन्त परम्परा पृ० १४१

(४) कबीर ग्रन्थावली पद ३९०

(५) कबीर और कबीर पंथ पृ० ८५

शिष्यस्य श्रीकबीरस्य स्त्रीपुत्रादिकः परिवारो नासीद् इति उक्तम् उपपादितञ्च प्राक् ।

एवं कबीरस्य जन्मनिधनकालयोरपि विवादो बहुधा लोके प्रचलितः । वस्तुतस्तु श्रीकबीरस्य जन्मकालश्चतुर्दशशताब्द्यामेव आसीत् ।

एवं निधनकालोऽपि श्रीरामानन्दशिष्यस्य कबीरस्य पञ्चाधिकपञ्चदशशततमो (१५०५) वैक्रमाब्द इति मम मतम् ।

## (१०) श्री सद्गुरुकबीरस्य रचनापरिचयः

श्रीसद्गुरुकबीरस्य मुख्यतमः सर्वासु दिक्षु श्रुतः सर्वैः सम्मतो 'बीजक' नामा ग्रन्थ एव । कामं 'नागरीप्रचारिणीसभा काशी' चत्वारिंशदधिकशतं तस्य ग्रन्थानां निर्णयति, अन्ये च विभिन्नाः संख्याः प्रददति । तथापि बीजकस्य सर्वं प्रमाणत्वं सिद्धमेव । तथैव च शब्दामृतसिन्धुसंग्रहः साखी च द्वौ ग्रन्थौ परमं प्रामाण्यमुपगतौ । अत्रापि सर्वाधिकसारतया एतद्ग्रन्थत्रयमेव[1] प्रामाण्यरूपेण स्वीक्रियते ।

अन्येषां प्रामाण्ये सन्देह इति न चात्र किमपि तेभ्य उद्ध्रियते ।

प्रागुदाहृतानां श्री कबीरकृतानां विषये प्रो० विलसन- डा० रे० वेस्टकाट-डा०रामकुमारवर्मा-डा० एफ० ए० कीयसाहब-डा० पीताम्बरदत्तबड्थ्वाल-श्री रामदासगौडादयः श्रीकबीरस्य रचनानां संख्यां निर्धारयितुं प्रायतन्त । प्रोफेसरविल्सन-नामा श्रीकबीरस्याष्टानां रचनानां नामानि निर्दिष्टवान् । श्री-कबीरजीवनस्य तदुपदेशानां चाध्ययनाय पादरी वेस्टकाटमहोदयो द्व्यधिकाशीतिग्रन्थानां तालिकाः प्रस्तुतवान् । विलसनद्वारा निर्धारितानां श्रीकबीररचनानामष्टानां योजनया श्रीकबीरपुस्तकानां संख्या तेन नवतिः कृता । तत्र डा० केदारनाथद्विवेद एवं मनुते—वेस्टकाटमहोदयेन स्वोल्लिखितानां नवतिग्रन्थानां तालिकायां 'अलिफनामा' 'बीजक' ग्रन्थयोः त्रीणि त्रीणि संस्करणानि संख्यातानि । 'भक्ति को अङ्ग' पीव पहिचानवे को अंग, साधु को अंग, सत्संग का अंगेत्यादिग्रन्थानपि वेस्टकाटमहोदयः स्वतंत्रग्रन्थान् मनुते । वस्तुतस्तु एता रचनाः कस्यचित् पुस्तकस्य प्रकरणरूपा एव मन्तुं शक्याः ।

'गरुड़बोध-गोरखगुष्टि-मुहम्मदबोध-वशिष्ठमुनि गुष्ट-लक्ष्मणबोध-मुलतानबोध-हनुमान्बोधेत्यादिका रचना अपि श्रीकबीरसम्प्रदायानुसारिणां रचना, न तु

श्रीकबीरस्य । श्रीकबीरोपासना, पूनो महात्म्य, चौका की रमैनी, कबीर कसौटी, श्रीकबीरमन्सूर इत्यादयोऽपि श्रीकबीरस्य रचनात्वेन न मन्यन्ते । वेस्टकाटमहोदयेन स्त्रोदाहृतकबीरग्रन्थतालिकायां के ग्रन्थाः श्रीकबीरस्य इति निर्धारयितुं प्रयासो न कृत इति[1] डा० केदारनाथद्विवेदिमतम् ।

उपरिपरिगणितातिरिक्तानाम् अन्यासां रचनानामपि श्रीसद्गुरुकबीरस्य कृतित्वं नास्ति इति तत्रैव तर्कपूर्णदृष्ट्या खण्डनं कृतवान् श्रीकेदारनाथद्विवेदी । 'काशी नागरीप्रचारिणी सभा' द्वारा निर्धारितानां कबीरकृतीनां विषये श्रीकेदारनाथद्विवेदिनो मतम्—

'डा० रामकुमारवर्मा काशी नागरी प्रचारिण्य सभया कारितमन्वेषणमाधारीकृत्य कबीररचनात्वेन वक्तव्यानामेकषष्टिरचनानां चर्चां कृतवान् । उक्तरचनानाम् एकषष्टिसंख्याकानां कबीरकृतित्वे सन्देहं प्रकटीकृत्य केवलं सप्तपञ्चाशद् ग्रन्थानेव स कबीरकृतान् मनुते । 'कबीर जी की साखी भक्ति को अंग, मुहम्मदबोध, कबीर गोरख की गोष्ठी' एतेषां ग्रन्थानां कबीरकृतित्वानङ्गीकारे वैज्ञानिकं कारणमपि स प्रस्तुतवान् । यान् ग्रन्थान् डा० रामकुमारवर्मा कबीरकृतान् मनुते, तेष्वपि कतिपयग्रन्थाः कबीरकृतित्वेन मन्तव्याः—इत्यत्र सन्देहो जायते' इति । यथा—

'उग्र गीता कबीर और धर्मदास की गोष्ठी, बलख की पैज, सन्त कबीर-बन्दीछोर इत्यादयो रचना अपि कबीरकृतित्वेन मन्तुं न शक्यन्ते । प्रथमे ग्रन्थद्वये कबीरेण सह धर्मदासस्य वार्तालापः कारितः, तेन इदं प्रतीयते नैताः कबीरस्य कृतय इति । धर्मदासस्य कबीरसमसामयिकत्वे किमपि पुष्टं प्रमाणमपि नोपलभ्यते । 'बलख की पैज' नाम्नि ग्रन्थेऽपि श्रीकबीरस्य बलखदेशस्य सम्राजा सह परस्परं प्रश्नोत्तरे जाते इति वर्णितम्[2] ।

यावदुक्तस्य सम्राजः कबीरसमसामयिकत्वं न सिद्ध्यति तावदस्य ग्रन्थस्य कबीर-रचनात्वम्, कबीरसमसामयिकरचनात्वं वा मन्तुं सन्देहः स्वभावत एव उत्पद्यते । 'सन्त कबीर बन्दी छोर' ग्रन्थस्य शीर्षकमेव इदं स्पष्टीकरोति यदयं ग्रन्थः कस्यचित् कबीरसम्प्रदायानुगस्य महात्मनो रचना इति । अनया दिशा,

(१) कबीर और कबीरपन्थ, पृ० ८७ । ( २ ) तत्रैव ।

डा० रामकुमारवर्मद्वारा कबीरकृतित्वेन मन्यमानानां पुस्तकानां मध्येऽपि अनेकानि पुस्तकानि सन्दिग्धरूपेण कबीरकृतित्वेन मन्तुं न शक्यन्ते[1] ।

स्वर्गीयरामदासगौडः कबीरद्वारा लिखितानां द्वासप्ततिग्रन्थानां सूचीं संगृहीतवान्, किन्तु तत्रापि 'निर्भयज्ञानं. हिण्डोला, अलिफनामा ( तथा एकस्मिन् स्थाने)' 'अरिफनामा' एतेषां ग्रन्थानां द्विरुल्लेखं कृतवान् । एतेषां सूचीतो निष्कासने रामदासगौडकृततालिकायां कबीरकृतित्वेन अभिमतानां ग्रन्थानाम् अष्टाधिकषष्टिः संख्या अवशिष्यते ।

डा० वर्मस्वर्गीयगौडयोः सूच्योः द्वापञ्चाशद्ग्रन्थाः परस्परं सम्वदन्ते । डा० वर्मा 'सन्तकबीर' नाम्नि ग्रन्थे कबीरकृतित्वेनाभिमतानां ग्रन्थानां तालिकायां पञ्चाधिकाशीतिग्रन्थान् उल्लिखितवान् । यदि तु स्वतन्त्रग्रन्थानां गणना क्रियेत तदा ते ग्रन्थाश्चतुरधिकसप्ततितोऽधिकाः न भविष्यन्ति[2] इति ।

डा० एफ० ए० की महोदयः कबीरकृतिविषये विचारं कृतवान् । असौ 'कबीर एण्ड हिज फालोअर्स' ग्रन्थस्य चतुर्थेऽध्याये केवलं कबीरस्य तेषामेव पुस्तकानां गणनां कृतवान् यानि तन्मतानुसारेण कबीरकृतानि कथयितुं शक्यन्ते । डा० बड्थ्वालमहोदयोऽपि आचार्यक्षितिमोहनसेनद्वारा शान्तिनिकेतने प्रकाशिते कबीरनाम्नि ग्रन्थे कबीरपदानां साखीपद्यानां केषाञ्चित्, आदिग्रन्थस्य बीजकस्य कबीरग्रन्थावल्याश्च उल्लेखं कृतवान् । किन्तु तस्यायं प्रयासः तेषां ग्रन्थानामालोचनात्मके वर्णन एव अवसितः । डा० हजारीप्रसादद्विवेदो 'कबीर' नाम्नो ग्रन्थस्य प्रस्तावनायां कबीरकृतित्वेन अवधीयमानानां पुस्तकानां विषय इदमुक्तवान्--यदहं महत्त्वपूर्णानां सिद्धान्तानां निर्णये यथासम्भवं मूलग्रन्थानामुपयोगं कर्त्तुं चेष्टां कृतवान् । किन्तु द्विवेदीमहोदय इदं स्पष्टं नोक्तवान् यत् मूलग्रन्थोपयोगे तस्य कोऽभिप्रायः आसीत्[3]' इति केदारनाथद्विवेदमतम् ।

'काशीनागरीप्रचारिणी सभा' द्वारा प्रकाशिते श्रीकबीरकृतविषयके 'रिपोर्ट' नाम्नि ग्रन्थे येषां ग्रन्थानां चर्चा कृता ते सर्वं एव ग्रन्थाः विद्वद्भिः सप्तसु भागेषु विभक्ताः । यथा---

(१) योगाभ्याससम्बन्धिनो ग्रन्थाः ।

(२) ज्ञानोपदेशाध्यात्मिकज्ञानसम्बन्धिनो ग्रन्थाः ।

---

(१-३) कबीर और कबीरपन्थ--पृ० ८८ ।

(३) साधुसन्तमहिमसम्बन्धिनो ग्रन्थाः ।

(४) विनय (स्तुति) प्रधाना ग्रन्थाः ।

(५) साम्प्रदायिक (सम्प्रदायविस्तारसम्बन्धि) ग्रन्थाः ।

(६) सम्वादस्य गोष्ठ्याश्च पद्धतिपरा ग्रन्थाः ।

(७) नाममाहात्म्यपरा ग्रन्थाः ।

इदं प्रसिद्धमस्ति यत् श्रीकबीरस्यास्था हठयोगाभ्यासं प्रति नासीत्, केवलं तस्य खण्डनाय कश्चित् शब्दो दृश्यते । न वा कस्यचित् सम्प्रदायस्य संघटनं कृतम् ।

सम्वादगोष्ठीग्रन्थे तु श्रीकबीरस्यालौकिकं माहात्म्यं प्रख्याप्यते । अत एवैतादृशा ग्रन्थाः न श्रीकबीरकृताः । अतो विज्ञायते प्रथमपञ्चमषष्ठविभागानां ग्रन्थाः न श्रीकबीरकृताः–इति केदारनाथ[1]द्विवेदो मनुते ।

'पं० परसुरामचतुर्वेदी[2]' उपलब्धानां श्रीकबीररचनानां त्रीणि रूपाणि मनुते । यथा—

(क) 'गुरुग्रन्थसाहब, पञ्चवाणी, सर्वाङ्गीत्यादिषु महाग्रन्थेषु उद्धृताः श्रीकबीररचनाः ।

(ख) विभिन्नसंग्रहरूपाः, अधिकांशतः पदसाखीरूपा रमैनीत्यादिरूपाः ।

(ग) स्वनन्यसंग्रहः,'बीजक' श्रीकबीरकी वाणी, सत्यकबीर' आदिग्रन्थाः ।

'बीजक' ग्रन्थोऽपि न कबीरकृत इति बहुना विस्तरेण श्रीकेदारनाथद्विवेदी प्रसाधितवान्[3] ।

---

(१) कबीर और कबीरपन्थ–पृ० ८९ । (२) उ० भा० पृ० १७७ ।

(३) इसी प्रकार 'बीजक' की लगभग जितनी भी टीकाएं हैं, उनके टीकाकारों ने स्पष्टरूप से 'बीजक' के संग्रहकाल के सम्बन्ध में कुछ भी नहीं लिखा है । रे० वेस्टकाट ने 'बीजक' की रचनाओं का काल सं० १६३७ माना है । किन्तु विद्वान् लेखक ने अपने मत की पुष्टि में कोई प्रमाण प्रस्तुत नहीं किया है । डा० बड्थ्वाल भी संवत् १६६० के पहले 'बीजक' का अस्तित्व नहीं स्वीकार करते । इन दोनों ही विद्वानों के मत का निष्कर्ष यह है कि 'बीजक' की साखी, शब्द, रमैनी आदि का संग्रह कबीर के निधन

वयं तु प्रतीमः श्रीकबीरस्य चतस्रः कृतयः प्रामाणिक्यः—(१) बीजकम्, (२) चौरासी अंग साखी, (३) शब्दामृतसिन्धुः (शब्दसंग्रहः), (४) श्रीकबीरग्रन्थावली इति। तत्र श्रीकबीरस्य श्रीरामानन्दशिष्यत्वेन शिक्षासम्पन्नत्वं मया प्राक् प्रतिपादितम्। एवं च तद्रचना अविकलरूपेण 'बीजकमिति' मन्तव्यम्[1] तथा प्रसिद्धम्। कबीरग्रन्थावली तु यद्यपि अन्यकर्तृभिरपि संयुक्ता वर्तते तथापि प्राचुर्येणात्र कबीररचना एव, इत्यपि विद्वद्भिः साम्प्रदायिकैः[2] स्वीकृतम्। 'चौरासी अंग साखी' नाम्नि ग्रन्थेऽपि श्रीसद्गुरुकबीररचना एव आधारीकृत्य-अन्यैरन्या रचनाः सम्पाद्य सम्मेलिता इति तत्तत्प्रमाणैरवसीयते[3]।

---

के बहुत अनन्तर हुआ होगा। अतः इसमें अन्य कवियों की रचनायें भी संगृहीत कर ली गई होंगी। इस सम्भावना का पुष्ट आधार भी है। (कबीर और कबीरपन्थ, पृ० ९२-९३)।

(१) 'बीजक' भूमिका सम्पादक डा० शुकदेव सिंह पृ० ६०-६४, 'बीजक' भू० पृ० २ लेखक स्वामी ब्रह्मलीनमुनि।

(२) 'सद्गुरु कबीर के नाम से अनेक वाणी वचनों का प्रचार हुआ है, लेकिन मेरा निजी विचार है कि सद्गुरु कबीर की मौलिक वाणियां प्रस्थानत्रयी ही हैं—बीजक, शब्दावली, साखी ग्रन्थ; शेष वाणियां प्रक्षिप्त हैं। श्रद्धालुओं ने उनकी महानता को व्यापक बनाने हेतु ही सम्वादात्मक ग्रन्थ लिखे हैं।' (महन्त सत्यरामदास शास्त्री, गुरु सोऽहं दास जी, ट्रस्टी कबीर-मन्दिर, संग्रामपुरा, सूरत)

(३) सद्गुरु कबीर और उनके साहित्य के बारे में मेरा व्यक्तिगत विचार 'सद्गुरुकबीर के साहित्य के अध्ययन अध्यापन तथा पंथीय और साहित्यिक विद्वानों द्वारा लिखित साहित्य के अवलोकन के बाद मैं इस निष्कर्ष पर पहुँचा हूँ कि सद्गुरु कबीर एक महान सन्त, तत्त्वचिन्तक, महान् ज्ञानी महापुरुष थे। उनके साहित्यके आधार पर यह कहना अनुचित न होगा कि उनके समय में सम्वादात्मक किसी भी प्रकार के साहित्य की रचना नहीं हुई थीं। उनके बाद कुछ श्रद्धालु भक्तों ने सन्त-महन्त तथा आचार्य के रूप में पन्थ का निर्माण किया और समयानुसार सद्गुरुकबीर के नाम पर साहित्य की रचना की। उनमें से बहुत से साहित्य पद्य तथा

शब्दामृतसिन्धुरपि (कबीरशब्दसंग्रहः) तादृश एव[४]। किन्तु तत्राच्छब्दे सिद्धान्तं न हन्ति। बीजके कोऽपि सम्मेलनात्मककार्यं न दृश्यते। तत्र सर्वेषां श्रीकबीरपथपथिकानां 'बीजक' शब्दसाखीनां संकलनमितस्ततो दृश्यते किन्तु शब्दादीनां भिन्न-भिन्नरूपं न दृश्यते।

## (११) सद्गुरोः कबीरस्य मूलग्रन्थाः

श्रीकबीरस्य नाम्ना ये ग्रन्थाः प्रचलिताः सन्ति, तेषु 'बीजकाख्यः' सर्वसम्मतः स्वीक्रियते सम्प्रदाये लेखकैश्च। बीजके एकादशप्रकरणानि स्वस्वशब्दार्थयुक्तानि सन्ति। यथा—

---

समाज के पोषक के रूप में सिद्ध हुए और कुछ साहित्य आडम्बरों के पोषक बने। सद्गुरुकबीर का साहित्य सत्य मार्ग की तरफ इंगित करता है। इस सत्य के अतिरिक्त सिर्फ श्रद्धा एवं भक्ति से ओतप्रोत होकर रचना की गयी है जो उन सन्तों का साहित्य है, सद्गुरुकबीर का नहीं। (महन्त पं० जगदीशदास, अध्यक्ष एवं संचालक, कबीर विद्यापीठ, पूना)।

(४) क्या कबीर धर्मदास के सम्वादात्मक ग्रन्थ कबीरकृत हो सकते हैं ?
कबीर पन्थान्तर्गत धर्मदासीय शाखा के कतिपय अनुयायी प्रायः साधारण ही नहीं, अपितु कतिपय विद्वान् भी यह सिद्ध करने पर तुले पाये जाते हैं कि कबीर धर्मदास के संवाद रूप में प्रचलित जो रचनाएं हैं, कबीर कृत है, अर्थात् सद्गुरुकबीर द्वारा विरचित हैं। यह मान्यता तो तत्सदृश ही उपहासास्पद हो सकती है, जैसे कोई सज्जन रामायण काव्य को मर्यादा पुरुषोत्तम रामचन्द्रकृत और श्रीमद्भगवद्गीता को भगवान् कृत मान कर अपनी बुद्धिमत्ता का परिचय देने की धृष्टता करे। प्रसिद्ध है कि रामायण के कर्ता महर्षि वाल्मीकि जी एवं गो० तुलसीदास आदि तथा गीता के रचयिता वेदव्यास जी ही हैं, न कि राम और कृष्ण।

संवादात्मक ग्रन्थ न तो कबीरकृत हैं और न धर्मदासकृत ही। सद्गुरुकबीर की मौखिक वाणियां तो प्रायः सर्वमान्य इन तीनों संग्रहों,— जिन्हें हम कबीर साहित्यकी प्रस्थानत्रयी कह सकते हैं, में प्रचलित हैं। यथा—१–बीजक, २–साखीग्रन्थ एवं ३–कबीर शब्दावली।' ( म० मु० वराटी )।

(१) रमैनी—रमैनीप्रकरणे जीवस्य मायायां यद्भ्रमणं भवति तस्य तस्य विस्तरेण वर्णनमस्ति। अत एवास्य प्रकरणस्य नाम 'रमैनी' इति श्रीसद्गुरुकबीरेण प्रदत्तम्। अस्मिन् प्रकरणे जीवानां पारमार्थिकस्वरूपस्य प्राधान्यमस्ति। 'अयमात्मा ब्रह्म' 'प्रज्ञानं ब्रह्म', 'अहं ब्रह्मास्मि' इत्यादिश्रुतिभिः यथा आत्मना ब्रह्मणश्चाद्वैतस्य प्रतिपादनं विहितं तथैव रमैनीप्रकरणे जीवब्रह्मणोऽद्वैतस्य प्रतिपादनमस्ति। जीवमुद्दिश्य ब्रह्मत्वस्य प्रतिपादनमस्ति।

(२) शब्दाः—अस्मिन् प्रकरणे 'तत्त्वमसि' इति श्रुतिवत् शब्दप्रमाणेन ब्रह्मणो जीवात्मना अभेदो बोध्यते। यथा—'तत्त्वमसि' इति श्रुतिः प्रमाणम्, तथाऽत्र शब्दः प्रमाणमस्ति। अतएव अस्मिन् प्रकरणे रमैनीवत् प्रत्येक शब्दान्ते साक्षी ( साखी ) न विद्यते। तयोर्भेदः रमैनीप्रकरणे सृष्टेर्विवेचनस्य प्रधानता अस्ति, शब्दप्रकरणे च परमात्मतत्त्वविवेचनस्य प्रधानता अस्ति।

(३) कहरा—शब्द इव कहरापदमपि गेयं भवति। अयं विहारप्रान्ते उत्तरप्रदेशे च कहारजातौ[१] अस्मिन्नेव स्वरे ( स्वजातीयप्रधानगीतत्वेन ) गीयते। अतोऽस्य प्रकरणस्य नाम 'कहरा' इत्युक्तम्।

द्वितीयो हेतुरयमस्ति यत् 'कहर' शब्दस्यार्थः कष्टं भवति। अस्मिन् प्रकरणे कष्टेन[२] ज्ञेया विषयाः सन्ति। कठिनस्य सांसारिकस्य दुःखस्य यमयातनादीनाञ्चास्मिन् प्रकरणे वर्णनमस्ति। अतोऽपि अस्य प्रकरणस्य नाम 'कहरा' इति।

अस्मिन् प्रकरणे योगस्यात्मबोधस्य च प्रधानता दृश्यते। राजयोगे यः सहजावस्थादिरूपः समाधिस्तस्य वर्णनमस्ति, तथा शरीरस्य संसारस्य च हेयता प्रतिपादिता, मायिकाः पदार्थाः नाशवन्त इत्यत्र बलवानाग्रहः, एतानि विवेचनानि तु दर्शनस्य प्रधानो विषयः।

(४) विप्रमतीसी प्रकरणम्—अस्य प्रकरणस्य विप्रमतीसी इति नाम्नैव प्रतीयते यद्विप्रसहजमत्या वर्णनमस्ति। तस्मात् 'विप्रमतीसी' इति नाम

१. कं जलं हरतीति कहारः। 'कर्मण्यण्' इति पाणिनीयसूत्रेण अण् प्रत्ययः।

२. अत्यन्त दुःखरूपोऽयं मृतिकालेऽतिरिच्यते।

उच्छ्वसन्तमतो दृष्ट्वा जनास्त्रस्यन्ति तत्क्षणात् ॥ बी० सं०टी० पृ०५७९॥

३. ऊर्ध्वे श्वासा उपजी त्रासा, हकराइन परिवारा हो। बी० कहरा ३।

प्रदत्तम् । अस्मिन् प्रकरणे कबीरमहाभागेन वेदशास्त्रविरहितानां पंडितम्मन्यानामात्मज्ञानरहितानां निकृष्टकर्मप्रवृत्तानां मिथ्याचारपरायणानां ब्राह्मणानां यथार्थरूपेण चिन्तनं कृतम् । यथा शास्त्रपुराणे लिखितम्[१]—पूर्वं ये राक्षसा राजंस्ते कलौ ब्राह्मणाः स्मृताः ।

(५) हिंडोला प्रकरणम्—अस्मिन् प्रकरणे रूपकस्य विन्यासो विद्यते, यथा हिंडोला ( आन्दोलिका ) कदापि स्थिरा न भवति, तथा संसारोऽपि सुस्थिरो न भवति । सर्वे प्राणिनोऽप्यस्थिरा भवन्ति । ब्रह्मादिदेवा अपि एतद्वशगा न विमुक्ताः, मायाया मायिकस्य च पदार्थस्य आन्दोलिका कं न प्रलोभयति ? संसारस्यासारतायाः प्रदर्शनं विशिष्टाद्वैतस्य च प्रत्याख्यानमस्मिन् प्रकरणे विहितमस्ति ।

(६) वसन्तप्रकरणम्—अस्मिन् प्रकरणे प्रदर्शितं यद् यथा वसन्तर्तुः सर्वविधोल्लासमानन्दञ्च जनयति, तथैवात्मज्ञानं निरतिशयानन्दं जनयति । वसन्तनामको रागः प्रसन्नतायां गीयते, कथितमिदं वसन्तप्रकरणमानन्दप्रदर्शत्वेन 'वसन्त' इति नाम लेभे ।

(७) चांचरप्रकरणम्—अस्मिन् प्रकरणे मायाजनस्य संसारस्य तथा सांसारिक्याः क्रीडाया वर्णनमस्ति । अत इदं प्रकरणं चांचर इति व्यपदिश्यते । पूर्वोत्तरविहारप्रान्तेऽयं राग एकस्यां क्रीडायां गीयते । अतोऽप्यस्य नाम 'चांचर' इति कथ्यते ।

(८) ज्ञानचौंतोसाप्रकरणम्—अस्मिन् प्रकरणे चतुस्त्रिंशदक्षराण्याश्रित्य विभिन्नाविभिन्न ज्ञानोपदेशाः अदीयन्त, अतोऽस्य प्रकरणस्य नाम 'ज्ञानचौंतीसा' इति प्रदत्तम् ।

(९) बेलिप्रकरणम्—'बेलि' इति तु 'वल्ली' इत्यस्यापभ्रंशः, 'वल्ली तु व्रततिलता' इति कोषात् बेलि इत्यस्य लता अर्थः । यथा लता तरुगुल्मादि बध्नाति, तथा मायारूपा लता चेतनं बध्नाति । अत इदं प्रकरणं 'बेलि' इति नाम्ना प्रख्यातम् ।

---

१. देवीभागवतम् ६।११,

द्विजत्वं विद्धचनुष्ठानाद् विप्रत्वं वेदपाठतः ।
ब्राह्मण्यं ब्रह्मणो ज्ञानादिति वेदान्तडिंडिमः ॥३॥ वृ० वा० २१५ ।
"ब्राह्मण ह्वै के ब्रह्म न जानै" बी. विप्र० १ ?

(१०) विरहुलीप्रकरणम्—विरहजन्यस्य शूलस्य प्रतिपादनात्-अस्य प्रकरणस्य नाम 'विरहुली' इति दत्तम्। आत्मतत्त्वज्ञानेन ( विवेकिनः ) यदात्मविरहदुःखं तद् विषतुल्यं तस्य निवारणाय (अस्मिन् प्रकरणे) उपदेशोऽस्ति। यथा सर्पविषो मन्त्रेण अपनोद्यते, तथाऽस्मिन् प्रकरणे मन्त्ररूपेण विरहविषस्यापनोदनस्योपदेशो विद्यते।

(११) साखीप्रकरणम्—'साखी' इति पदं 'साक्षी' इति पदस्यापभ्रंशः। अत्र साक्षिरूपेणात्मनो वर्णनमस्ति। अतः 'साक्षी' ( साखी ) इति कथ्यते। अत्र शब्दः प्रमाणरूपेणोपन्यस्तः। अत्र साधनसहितस्य ज्ञानस्य वर्णनमस्ति।

साखीप्रकरणस्यारम्भश्चितिस्वरूपेणाभवत्। पञ्चकोशापेक्षया षष्ठीयं चितिः सर्वेषां कोशानां साक्षिणी विद्यते। इयं चितिः जीव एव। अयमेव जीवः रमैनी प्रकरणस्यारम्भे 'अन्तरज्योतिः' शब्देन, शब्दप्रकरणस्यारम्भे रामशब्देन वसन्तस्यादौ शिवशब्देन, चौंतीसाप्रकरणस्यादौ ओंकारेण कं खं ब्रह्मादिशब्देन च कथितः। अयमेव जीव. विरहुलीप्रकरणे आद्यन्तविकारसम्बन्धादिरहितः कथ्यते।

अयं साक्षी ( साखी ) प्रकरणे परमप्रमेयरूपः गुरुवेदवाक्यज्ञेयो ध्येयो निरपेक्षसर्वप्रकाशः स्वयंप्रकाशश्चास्ति। तस्यैव अस्मिन् एकादशप्रकरणे विशेषेण प्रतिपादनमस्ति। इदं प्रकरणं सर्वेषां प्रकरणानां साररूपं विद्यते। यथा—शरीरे साररूपः साक्षी तथा अस्मिन् 'बीजक' ग्रन्थे इदं 'साखी' ( साक्षी ) इति प्रकरणं सारभूतं विद्यते। अतोऽस्य प्रकरणस्य समाप्तिः—

'बिगरी जन्म अनेक की, सुधरी अब ही आय।
जब गुरु आप कृपा करी, शब्द दियो परखाय॥'[1]

इति 'साखी' पदेषु अदद्यायां मायायां प्रच्छन्नस्य स्वयंप्रकाशस्य साक्षिणः प्रतिपादनं कृतम्।

## (१२) श्रीसद्गुरुकबीरेण निर्मिता ग्रन्थाः तदुत्प्रेक्षिता ग्रन्थाश्च

प्रायो लेखकैर्लिखितं यत् सद्गुरुः कबीरः एकमपि ग्रन्थं न निर्मितवान्, यतः स निरक्षर आसीत्। लेखकानामिदं कथनं भ्रमपूर्णं प्रतीयते। किं गूर-

१. बीजक परिशिष्ट साखी ६९।

सागरः सूरदासस्य कृतिर्नास्ति किं श्रीमद्भगवद्गीतायां कृष्णस्य स्मृतित्वं नास्ति ? कबीरस्य ग्रन्थेऽपि इयं दृष्टिरपेक्षिता, सूरदासः चक्षुर्विहीन आसीत् स स्वहस्तेन किमपि लेखितुमसमर्थः आसीत् । सूरदासकृतानां गीतानां लिपिकर्त्ता अन्य कश्चिद् आसीत्, तथापि सूरसागरे यथा सूरदासस्य कृतित्वं तथा बीजकादावपि सद्गुरुकबीरमहाभागस्य कृतित्वं मन्तव्यम् ।

बीजकग्रन्थः प्रकरणबद्धोऽस्ति, इयं च प्रकरणबद्धता सद्गुरोः कबीरस्य कर्तृत्वं सूचयति (अनुभावयति)। पूर्वोक्तशिक्षाप्रकरणे श्रीसद्गुरुकबीरस्य शिक्षा योग्यता च द्रष्टव्या । आधुनिकशाखासु बीजकस्य पाठभेदा दृश्यन्ते, इमे पाठभेदाश्च न अक्षरव्यत्यासमूलकाः न वा वाक्यव्यत्यासमूलकाः । अपितु केवलं रमैन्यादिपदानां क्रमवैपरीत्येन दृश्यन्ते, इदं क्रमवैपरीत्यमेव आधुनिकाः पाठभेदशब्देन व्यपदिशन्ति । इममेव पाठभेदमाश्रित्य ते कथयन्ति यदयं पाठभेद एवानुमापयति यत् सद्गुरुकबीरो यत्र तत्र यस्य कस्यचित् पदस्य क्रममनपेक्ष्य उद्गानं कृतवान् । अतः क्रमवैपरीत्यमूलकः पाठभेदो दृश्यते । अतो बीजकस्य तत्कर्तृत्वं न सिद्ध्यति इति केषाञ्चिन्मतम् । किन्त्विदं मतं न विचारसहम्, यतो बीजकस्य प्रकरणबद्धत्वात् तत्र क्रमोऽपेक्षितः, स क्रमो यो व्यत्यस्तः तत्र मठाधीशनिश्चयेन निदानेन भूयते । न तु कबीरस्य व्यत्यस्तगानेन निदानेन भूयते । अतो निश्चीयते यत् श्रीकबीरो बीजकस्य रचनां स्वयं कृतवान् । अयं ग्रन्थो न तु संग्रहः, न वा केनचित् श्रीकबीरशिष्येण प्रशिष्येण वा प्रलिखितः इति तु सत्यमस्ति यत् श्रीकबीरसाहित्ये समुपलब्धाः सर्वेऽपि ग्रन्थाः सद्गुरोः कबीरस्य न सन्ति । श्रीकबीरस्य नामाश्रित्य अन्यैरप्रेक्षिता अपि रचना विद्यन्ते । अस्य स्पष्टीकरणमग्रे करिष्ये ।

बीजकग्रन्थस्य प्रामाणिकता[१], प्राचीनता, प्रसिद्धिव्यापकता, मान्यता च सर्वेषां मते सर्वोपरि ज्ञायते । एतस्मिन् विषये किमधिकं वक्तव्यं बीजकस्योपरि

(१) बीजक के अतिरिक्त कबीर के नाम पर जो रचनाएं मिलती है प्रामाणिकता की दृष्टि से उनकी परीक्षा करके देख लिया गया है, कि प्रायः प्रामाणिक रचनाएं कबीरपंथ के प्रत्यक्ष प्रवाह में नहीं मिलती । अन्यतम कबीर साहित्य के रूप में बीजक का महत्व बराबर रहा है । (कबीर बीजक, भूमिका पृ० ५६-६०) ले० डा० शुकदेवसिंह ।

चत्वारिंशल्लेखकाः प्रकाशकाश्चासन् । अनेकैर्विद्वद्भिर्व्याख्याः कृताः । सर्वेऽपि लेखकाः सम्प्रदायविदश्च बीजकं सद्गुरुकबीरस्य प्रामाणिकग्रन्थं स्वीकुर्वन्ति[1]. अतः श्रीसद्गुरुकबीरकृत एवैष ग्रन्थः । श्रीकबीरस्य नाम्ना कबीरपथपथिकेन केनचित् कृतो वा एष ग्रन्थः इति केचन कथयन्ति । किन्तु न तेषां मतं विचारसहम् । यतः सर्वेषां विदुषां मतेऽथवा सर्वकबीरपथसम्प्रदाये बीजकं वेदवत् प्रमाणमस्ति। यथा—श्रीमत्स्वामिब्रह्मलीनमुनिना स्वरचिते बीजकविमला-टीकायामुट्टङ्कितम्—यथा वेदं प्रमाणरूपेण अस्वीकुर्वन्तो नास्तिका इति ज्ञायन्ते, तथैव बीजकं प्रमाणरूपेण अस्वीकुर्वन्तः नास्तिकाः ( श्रीकबीरपथ-पथिकाः ) इति[2] ।

एवमेव तस्यां शाखायां पूर्वाचार्यः श्रीमद्विचारदासोऽपि बीजकमेव श्रीकबीरकृतं स्वीकरोति[3] । तस्यां शाखायां केचन दुराग्रहग्रहिलाः स्वार्थपरायणा अल्पज्ञा निरक्षरा आसन् यैर्बीजकस्य सारो न ज्ञातः, अतस्ते बीजकं प्रमाणत्वेन न स्वीकुर्वन्ति । बीजकं तैः संग्रहमात्रमुक्तं तन्नोचितम्; तस्य मतस्य खण्डनं श्रीकबीरकृतग्रन्थानां विवेचनसमये करिष्यामः ।

## (१३) श्रीसद्गुरुकबीरस्य कृतयः

श्रीसद्गुरुकबीरस्य रचनासु वैज्ञानिकरीत्या सर्वप्रथमाङ्ग्लभाषाभाषि-जनस्य दृष्टिरपतत् । तत्र यत् प्रमाणमुपलभ्यते तत्तु विवेचनीयम् । श्रीकबीरकृत-रचनारूपेण डा० विलसनमहोदयेन अष्टौ ग्रन्थाः प्रस्तूयन्ते । यथा—आनन्द-सागर, कबीर पांजी, कहरा, चांचर, झूलना, बलख की रमैनी, शब्दावली,

(१) सन्तकबीर – पृ० १४–१६ ।

(२) जैसे वेद ईश्वर उच्चरित होने से सर्वथा प्रबल प्रमाण हैं, वैसे ही बीजक ईश्वर के अवतार सद्गुरुकबीर स्वामी उच्चरित होने से सर्वथा प्रबल प्रमाण है। जैसे वेद को प्रमाण न माननेवाले नास्तिक कहे जाते हैं, वैसे ही बीजक को प्रमाण न मानने वाले कबीरपंथी नास्तिक कहे जाते हैं। (श्रीकबीरज्ञानबीजकग्रन्थ, भूमिका) पृ० ५ ।

(३) बीजक प्रबोधनीटीका, भूमिका पृ० २१-२२ ।

हिंडोला। सम्भवतस्तेन तस्मिन् समयेऽष्टौ रचनाः प्राप्ता अवलोकिता वा। सर्वे एतैः कबीरपथपथिकैः रचिता ग्रन्थाः सन्ति। एतद्विषये कबीरग्रन्थावली-भूमिकायां सम्पादक डा० पारसनाथतिवारीग्रन्थो द्रष्टव्यः। तदनन्तरं डा० वेस्टकाटमहोदयेन द्वयशीतिग्रन्थाः श्रीकबीररचनात्वेन प्रदर्शिताः,ततो रामदास-गौडेन हिन्दुत्वनामके स्वग्रन्थे एकसप्ततिः श्रीकबीररचिता ग्रन्थाः कथिताः।

तदन्तरं डा० रामकुमारवर्मणा 'हिन्दी साहित्य का आलोचनात्मक अध्ययन' नामके ग्रन्थे विशेषान्वेषणेन एकषष्ठिर्ग्रन्थाः लिखिताः। तेनैव स्वद्वितीयग्रन्थे पञ्चाशीतिर्ग्रन्था उक्ताः। ततो 'नागरीप्रचारिणीसभा काशी' ग्रन्थालयस्य वार्षिकान्वेषणमाधारीकृत्य त्रिशदधिकशतं ग्रन्थाः उट्टङ्किताः। तत्र तु संकेत-रूपेण लिखितं वर्तते—एतेषां मध्ये कियन्ति पुस्तकानि श्रीकबीरेण, कियन्ति तत् पथिकजनेन च कृतानि सन्ति[1]; एतस्य विवेचनं कठिनमस्ति।

तथ्यतः सर्वप्रथममेव श्रीकबीरस्य तद्रचितग्रन्थानाञ्च परिचयोऽस्माभि-र्दत्तः। स तु 'भक्तमालनामके' ग्रन्थेऽपि प्रदर्शितः। यथा श्रीकबीररचिताः 'रमैनी, शब्द, साखी' इति त्रिरूपात्मका ग्रन्थाः कथिताः। मह्यमपि तदेव रोचते यत् श्रीकबीरकृतास्त्रयो ग्रन्था मुख्यरूपेण सन्ति—बीजक, साखी, शब्दः (भजनसंग्रहः) इति। अन्ये ये सम्वादात्मकग्रन्थाः दृश्यन्ते प्राप्यन्ते वा, ते तु सर्वे कबीरपथपथिकैः कृता ग्रन्थाः सन्ति। एतस्य विवेचनं यथा-यथा ज्ञातं तथा-तथा तेन रूपेण अन्वेषणकर्तृभिः कृतम्। तदन्तरं सर्वे ग्रन्थाः श्रीकबीर-कृतयोऽभवन्। अहमपि तानि तानि सर्वाणि पुस्तकानि, यानि सौकर्येण प्राप्तानि अवलोकितवान्। भाषाशैलीविषयप्रतिपादनादिदृष्ट्या तानि पुस्तकानि न श्रीसद्गुरुकबीरकृतानि ज्ञायन्ते। सर्वेऽन्वेषकाः सम्यगनुभूय उक्तवन्तो यत् श्रीकबीरः त्यागभावनया, स्पष्टवादितया, सत्यवादितया पाखण्डरहिततया, पाखण्डखण्डनेन यथार्थरूपेण निर्गुणनिराकारपरतया च ग्रन्थान् रचितवान्।

तदनन्तरमन्यैरपि जनैः स्वस्वमत्यनुसारम् अनेकैः गुरुदम्भयुक्ताद्य ग्रन्था रचिताः। कानिचित्पदानि तु कबीरपथस्य श्रीकबीरस्य वा महिम्नो वृद्धयर्थं रचितानि। यथा मुहम्मदबोधः, लक्ष्मणबोधः, दत्तात्रेयगोष्ठी, कबीरमन्सूरः, बलख की रमैनी ब्रह्मनिरूपणादिग्रन्थाः। एषां ग्रन्थानां कर्तारो वर्तमानान्वे-

(१) कबीर साहित्य का अध्ययन पृ० ६५।

चक्रेण यत्कर्तृत्वान्निदर्शिताः तदुद्दृङ्कितं मया यस्य तु कर्तृत्वमिदानीमपि न विज्ञायते तत्कबीररचितमुक्तम्, तन्नोचितम् ।

१) ज्ञानसागरे जगदुत्पत्तिकथायाः विवेचनमभवत्, अत्र विचाराः पौराणिका इति प्रतीयन्ते ।

(२) अनुरागसागरे कबीरस्य विभिन्नेषु योगेषु उपदेश्यत्वेन निमित्तभूतेषु गृहीतस्य अवतारस्य वर्णनमस्ति ।

(३) खुदवाणी—अस्य हस्तलिखितं पुस्तकं प्राप्यते । अस्मिन् पुस्तके ज्ञानिमहोदस्य सत्यपुरुषस्य च संवादो वर्णितोऽस्ति । सत्यपुरुषो निरञ्जनो जीवानां मोचनाय ज्ञानिनमादिशत् ।

(४) कबीरमंसूरे—कबीरपथस्य विभिन्नानां ग्रन्थानामुदाहरणनिर्देशपुरस्सरं स्वमतस्य पुष्टिः कृता । श्रीमता श्रीपरमानन्ददासेन सर्वप्रथममिदं पुस्तकमुर्दूभाषायां कृतम् ।

(५) जन्मोतिमंगले—चूड़ामणिमहोदस्य जन्मोत्तरचौकाविधेरुल्लेखो विहितः । अतः चूड़ामणिमहोदस्याविर्भावानन्तरं 'जन्मोति मङ्गलस्य' रचना अभवदिति प्रतीयते ।

(६) सुखनिधाने—धर्मदासस्य जीवनचरितस्य वर्णनमस्ति, अतः प्रतीयते इयं कृतिः धर्मदासस्य शिष्याणामस्ति ।

(७) श्रीसद्गुरुकबीरमहामहिमा—नामके ग्रन्थे तु लेखकस्य नामापि दत्तम् । 'कबीरमन्दिर हरदी' ( म० प्र० ) मठाधीशो मुकुन्ददासोऽस्य रचयिता आसीत् ।[१]

(८) दीपकसागर—नामको ग्रन्थो दामाखेड़ा कबीरमठादुपलब्धः । तस्य लिपिकालः १८६९ वि० सं० लिखितः । अयमेव अस्य रचनाकालोऽपि प्रतीयते अस्मिन् ग्रन्थे आदित आरभ्य पाकनामकगुरुपर्यन्तस्य वन्दना कृता । अयं ग्रन्थः पञ्चविंशतिखण्डेषु विभक्तः । अस्मिन् ग्रन्थे चतुरशीतिलक्षयोनीनां चर्चा विहिता । चतुरशीतिनारकीयकुण्डानां भयङ्करतापि चित्रिता ।

(९ लक्षणबोध—नामके ग्रन्थे जगन्नाथस्य स्थापनाया उल्लेखः साम्प्रदायिककथया विहितः ।

(१) कबीर और कबीर पंथ—पृ० ४२

(१०) गरुड़बोधनामके ग्रन्थे—गरुडेन कबीरस्य शिष्यत्वं स्वीकृतमिति प्रदर्शितम्। सगुणस्य ब्रह्मणः उपहासं कृत्वा निर्गुणस्य ब्रह्मणो महत्त्वं घोषितम्।

(११) निरञ्जनबोधनामके ग्रंथे—कबीरेण निरञ्जनस्य पराजयः प्रदर्शितः।

(१२) सुलतानबोध-नामके ग्रंथे लिखितमस्ति यद् बलखबोखारादेशस्य सम्राट् अब्राहीम[1] यवनः कबीरस्य संसर्गेण संसारिकभोगं विमुच्य मुक्तो जातः। देवदूत-खिज्रमहोदयेन दीक्षितः जात इब्राहिम इत्येव सत्यम्।

(१३) आगमबोध -नामके ग्रन्थे तु तुलसी कृत रामचरितमानसस्य अनेकाः पंक्तय उपलभ्यन्ते। अतः अस्य रचना रामचरितमानसानन्तरमभूदिति प्रतीयते।

एवञ्च तान्युद्धरणान्यालोच्येदम्प्रतीयते यन्नैता रचनाः कबीरकृता इति।

## (१४) श्रीकबीरग्रन्थेषु समुपलब्धप्रसिद्धदार्शनिकमतवादाः

(१) श्रीसद्गुरुकबीरसमये दक्षिणापथात् समागतं जंगममतम्, जटाधारिणां श्रीरामानन्दसम्प्रदायानुसारिणां मतम्, अङ्गेषु विभूतिधारिणां विविधानां शैवानां मतम्, तपस्तपस्यतां तापसानां मनो नियच्छतां ज्ञानमार्गानुसारिणां ज्ञानिनां मतम्. ( सांख्यमतम् ) शैवशाक्तानां विविधमतम्, कुलदेव्या उपासकानां मतम्, क्षीरेणैव मुक्तिमार्गमनुसरतां मतम्[2]। एतानि मतानि श्रीकबीरग्रन्थावल्यां दर्शितानि। श्रीकबीरमते तु एतैर्न कल्याणं किन्तु रामनामजपेनैव केवलेन कल्याणं भवति।

---

(१) सूफी सन्त चरित पृ० ३५।

(२) हरि को नाउं तत त्रिलोक सार, लै लीन ( लोलीन ) भये जे उतरे पार॥

इक जंगम इक जटाधार, इक अंगि विभूति करैं अपार।

इक मुनियर इक मनहूं लीन, एसैं होत होत जग जात खीन।

इक आराधै सकति सिव, इक पड़दा दे दे बधै जीव।

इक कुलदेव्यां की जपहि जाप, त्रिभुवनपति भूले त्रिविध ताप।

अन्नहि छांड़ि इक पीवहि दूध, हरि न मिलै बिन हिरदै सुध।

कहैं कबीर ऐसे विचारि, राम बिना को उतरे पार॥

—कबीर ग्रन्थावली पद ३८० पृ० १६२।

(२) केचन अध्ययनेनैव कल्याणं वदन्ति, केचन वैराग्येण गृहं परित्यज्य, केचन अपरिग्रहेण, केचन योगेन रामनामरहितेन, केचिद्दैन्यप्रदर्शनेन (विनय-प्रदर्शनेन). केचन दानेन, केचनवाममार्गिणः सुरापानेन, केचन तन्त्रमन्त्रौषधैः, केचन अपाननिरोधेन, केचन तीर्थव्रताभ्यां, केचन कायाजयेन, केचन गांजाद्रव्य-दाहसमुद्भूतधूम्रपानेन ध्यानं सम्पाद्य रामनामप्रीतिरहितेन स्वकल्याणं वदन्ति। श्रीसद्गुरुकबीरमते तु एतैर्न कल्याणं भवति, किन्तु रामकृपया कल्याणं भवति। सर्वेषु मतेषु दूषणानि प्रदर्श्य रामनामजपरूपः कल्याणमार्गो दर्शितः श्रीकबीरेण[१]।

चतुर्दशविद्यासु स्थितानां मतवादानां कल्याणमार्गविरोधित्वं श्रीकबीरेण दर्शितम्। यथा –

सबहि मद माते कोइ न जाग। संग हि चोर घर मूसन लाग ॥
पण्डित माते पढ़ी पुरान। योगी माते योग ध्यान ॥
तपसी माते तप के भेव। संन्यासी माते करि हमेव ॥
मौलना माते पढ़ि मोसाफ। काजी माते देइ निसाफ ॥
संसारी माते मायक धार। राजा माते करि हंकार ॥
माते शुकदेव उद्धव अक्रूर। हनुमत माते धरि लङ्गूर ॥
शिव माते हरि चरण सेव। कलि माते नामा जयदेव ॥
सत्य सत्य कहे स्मृति वेद। जस रावण मारे घर के भेद ॥ –
चञ्चल मन के अधम काम। कहहिं कबीर भजु राम नाम[२]॥इति

एवमेवान्यानि पद्यानि दृश्यन्ते। यथा—

शिवस्य, मुनीनां, मच्छन्दरनाथस्य, गोरखनाथस्य, दत्तात्रेयस्य, व्यासस्य, च मायापारवश्यं दर्शितम्[३]। हठादिविविधयोगस्य योगिवेषस्य च निन्दा कृता श्रीकबीरेण। तेन शास्त्रानुसारी ध्यानयोग एव योगिवेषकल्पनां परिहाय

(१) तत्रैव क० ग्र० ३८०।
(२) बीजक वसन्त ४। (३) बीजक रमैनी ५२–५४।

विज्ञेयः इति मतं श्री कबीरस्य[1] प्रतीयते। ज्ञानिनाम्, पण्डितानाम्, दासान्त-पदाभिधेयानाम् साधूनाञ्च सूक्ष्मवासनापारवश्यं प्रदर्श्य तेषां निन्दा कृता श्रीकबीरेण, अतो वासनानाश एव कल्याणस्य मार्ग इति श्रीकबीर-मतम्[2]। परब्रह्मसाक्षात्कारविषये शिवशक्तिविरंचीनामपि मोहः प्रदर्शितः श्री कबीरेण, तेन भगवच्छरणागतिसंजातया भगवत्कृपया एव जीवस्य मोहनाश इति स्वमतं प्रदर्शितं श्रीकबीरेण[3]। पशुवधेन देवानां बलिकरणं निन्दितं श्री कबीरेण[4], तस्मादहिंसारूपः कल्याणमार्गो दर्शितस्तेन। ब्रह्मणोऽन्वेषणमार्गे रतानां साधकानां प्रयासवैविध्यं दर्शितं श्रीकबीरेण, तेन ब्रह्मणो वाङ्मनसोर-गोचरत्वं प्रदर्शितम्[5]।

ये षड्दर्शनमतवादिनस्ते सर्वेऽपि भ्रान्ताः, पाखण्डवेषधारिणश्च; द्वैता-द्वैतकल्पनानां भ्रान्तिरूपत्वात्। चत्वारो बौद्धाः (सौत्रान्तिकाः, वैभाषिकाः, विज्ञानवादिनः, माध्यमिकाः) जैनाश्च, धर्मस्य मर्म न विदुः। पत्रपुष्पादिष्वपि हरितेषु जीवसत्त्वेन तत् त्रोटनेऽपि हिंसासत्त्वात्[6]। यथा—

ये भूले षट्दर्शन भाई पाखण्ड वेष रहा लटकाई॥

इत्यादि—कर्मकाण्ड-विषयकं मन्त्रब्राह्मणरूपं वेदं पठन्तः कर्मकाण्डमनुसरन्तो वैदिकाः पण्डिता अपि वेदं प्रशंसन्तः भ्रान्ता एव आत्मविषयकसंशयरूपग्रन्थीनां सत्त्वात्। अत आत्मविषयकसंशयनिवृत्तये पण्डितैरुपनिषद् अध्येतव्या इति श्रीकबीरस्य[7]मतम्। गीतायामपि उक्तम्—

'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः'[8]॥

अवतारविषयका मतवादा अपि श्रीकबीरेण प्रत्याख्याताः, अवताराणाम-प्यविद्योपहितसगुणब्रह्मरूपत्वादिति श्रीकबीरस्य मतम्। तस्मान्निर्गुणमेव ब्रह्म सर्वथा सर्वदा सत्यमिति।[9]

---

(१) बीजक रमैनी ६१, ७१, १९, शब्द ६३, ८३। (२) तत्रैव रमैनी ८०।
(३) तत्रैव ८२। (४) तत्रैव ८३।
(५) तत्रैव २५। (६) तत्रैव ३०।
(७) पढ़ै वेद औ करे बड़ाई, संशय गांठि अजहुं नहीं आई—बीजक रमैनी ३२।
(८) गीता अ० ५।१८ (९) बीजक शब्द ३।

रामोपासका रामानन्दसम्प्रदायानुसारिणः अन्येऽपि वैष्णवाः, खुदानाम्ना प्रसिद्धस्य ईश्वरस्योपासकाः। यवनाः, शक्तेरुपासकाः शाक्ताः, शिवस्योपासका शैवाः, 'वेदपुराणकुराण कितैवा' पाठिनः हिन्दवः, तुरुस्काः, योगिनः जैनाश्च षड्दर्शनाध्येतारश्च सर्वेऽपि भ्रातरः सर्वेऽपि तस्याद्वितीयस्य ब्राह्मणः स्वमतानुसारं नाम कल्पयन्ति। वस्तुतस्तु तत्तन्नामभिः एकं ब्रह्मैव निर्गुणं लक्षणया आवेद्यत इति श्रीकबीरस्य मतम्।[1]

'पण्डित मिथ्या करहु विचारा। न वहाँ सृष्टि न सिरजनहारा॥[2]

इत्यादिभि पद्यैः विशिष्टाऽद्वैतवादस्य प्रत्याख्यानं तेन कृतम्। तस्य स्वद्वैतमतमेव सम्मतम्। अविद्यया बहुविधस्य चित्रस्य जगतः सृष्टिः कृता, इति स्वमतं श्रीकबीरेण दर्शितम्।[3]

'अविद्यया द्वैतदर्शनम्, विद्यया चाद्वैतदर्शनम्' इति द्वयमपि विद्याऽविद्याऽवस्थाभेदेन सर्वं युज्यत इति स्वमतं श्रीकबीरेण दर्शितम्। तद्यथा–

'पण्डित देखहु मन महं जानी, कहु दहुँ छूति कहाँ ते उपजी'[4] इत्यादि

पण्डित शोधि कहहु समुझाई। जाते आवागमन नशाई[5]॥ इत्यादि

अन्यत्र च—'सन्ता देखत जग बौराना॥ टेक॥

साँच कहौं तो मारण धावैं, झूठहिं जग पतियाना॥
नेमी देखा धर्मी देखा, प्रातः करहिं असनाना।
आतम मारि पषाणहिं पूजैं, इन महं कछू न ज्ञाना[6]॥

इत्यादिभिः पद्यैः कर्मिणां ज्ञानराहित्येन खण्डनं कृतवान् श्रीकबीरः। तत्रैव

आसन मारि डिम्भ धरि बैठे, इन महं ऊहै ज्ञाना[7]॥

इत्यादिभिः पद्यैः सर्वेषां लौकिकानां पाखण्डमतानां खण्डनं कृतवान् स एव।

'अवधू कुदरत की गति न्यारी'[8]

'अवधू सो योगी गुरु मेरा'[9]

---

(१) बीजक शब्द ११। (२) बीजक शब्द १२।
(३) बीजक हिंडोला २। (४) बीजक शब्द १३।
(५) बीजक शब्द १४। (७) बीजक शब्द २२।
(६) बीजक शब्द २२। (९) तत्रैव १८।
(८) तत्रैव १५।

'बुझि लीजै ब्रह्मज्ञानी'[1]

इत्यादिपद्यैः नाथसम्प्रदायस्य खण्डनं कृतम्, शास्त्रीयं तु न्यस्तदण्डानामवधूतानां दत्तादीनां मतं स्वमतत्वेन स्वीकृतम्।

मुसलिमधर्मस्य तथा सूफीसम्प्रदायमतस्य च खण्डनं कृतं श्रीकबीरेण[2]। तत्र दरवेश-काजी-मुल्ला-पीरादीनां यवनानां मतानां प्रत्याख्यानं दृश्यते।

'सनकादि, नारद, शुकदेव-याज्ञवल्क्य-जनक-दत्तात्रेय-वशिष्ठ-राम-कृष्ण-ऊद्धव-गोरख-व्यास-हनुमत्-नर-नारायण-शम्भु (शिव)-अम्बरीष-बलिराज-जड़भरत-शेषनाग-ध्रुव-प्रह्लाद-विभीषण-पार्वती-मुनि-गौरप्रभृतीनां वैष्णवसम्प्रदायस्य च मतानि उपादेयत्वेन दर्शितानि श्रीकबीरेण[3]।

शैवसम्प्रदायशाक्तसम्प्रदाययोर्हेयत्वम्, स्मार्तधर्मस्य संसारदशायामुपादेयत्वेऽपि विचादशायां हेयत्वम्, नाथपंथजैनधर्म-मुसलिमधर्माणां हेयत्वम्, वैदिकसम्प्रदायस्यापि कर्मकाण्डपरस्य हेयत्वम्, षड्दर्शनवादविवादानां हेयत्वम्, योगिजंगमशैवड़ासंन्यासिनां पतितानां शेखमतानाम्, सूफीमतानाम्, वाममार्गिणां मतानाञ्च हेयत्वं श्रीकबीरेण दर्शितम्। यथा--

'ऐसो योगिया बेदकरमी, जाके गमन अकाश न धरनी[4]।'

इत्यादिपद्यैः श्रीभर्तृहरिमतानुयायियोगिमतखण्डनम् श्रीकबीरेण कृतम्। न तु पातञ्जलयोगस्य। तेन प्रतीयते नायं प्रागुक्तयोगिमतानुयायीति, न नाथमतप्रभावितः श्रीकबीरसिद्धान्त इति।

## (१३) श्रीकबीरग्रन्थेषु साधकसम्प्रदायः

श्रीसद्गुरुकबीरस्य ग्रन्थेषु द्विविधः साधकसम्प्रदायः समुपलभ्यते, एकः परमप्राचीनः पुराणकालिकः। अपरश्च पुराणकालात् परकालिकः, श्रीकबीरात् पूर्वकालिकः श्रीसद्गुरुकबीरसमकालिको वा। तत्र इमे प्रायेण पुराणकालिकाः प्रदर्श्यन्ते--

'महादेव मुनि अन्त न पाया। उमासहित उन जन्म गमाया[5]॥

(१) बीजक शब्द १८। (२) बीजक रमैनी ३९-४०, ४८।
(३) बीजक शब्द ४, २५-२६। (४) बीजक शब्द ३१।
(५) बीजक रमैनी ५३।

(१) श्रीशम्भुसम्प्रदायः—

शम्भुसम्प्रदायः पुराणेषु यत्र तत्र शम्भोरुपदेशरूपेण[1] श्रूयते। शैवः पाशुपत इत्यादीनि दर्शनानि च सम्प्रदायस्य गीयन्ते पुराणेषु—उमामहेश्वरसम्वादाश्च सर्वेऽपि पौराणिकाः शम्भुसम्प्रदायान्तर्गता एव। शम्भुसम्प्रदाये भस्मोद्धूलनं रुद्राक्षधारणं च क्रियते। योगमार्गश्च बहुविधास्तत्र-तत्र श्रूयन्ते। तद्यथा—

'जिहि कारण शिव अजहुँ वियोगी। अंग विभूति लाय भौ योगी[2]'॥

'योगी माँते योगध्यान[3]' 'शिव माँते हरि चरण सेव'।

वाममार्गोऽपि शम्भुसम्प्रदायान्तर्गत एव तद्यथा—

'ऐसा योग न देखा भाई'। 'भूला फिरै लिए गफलाई'॥

साखी—'सुन्दरि नाही शोभई, सनकादिक के साथ।
कबहुक दाग लगावई, कारी हाँड़ी हाथ[4]॥

औपनिषद-स्मार्त-दक्षिणमार्गरूपभेदेऽपि श्रीशंकराचार्यस्य सम्प्रदायः शम्भुसम्प्रदायान्तर्गत एव।

(२) पार्वती—

'उमा सहित उन जन्म गमाया[5]'।
'मोहा बपुरा युक्ति न देखा। शिवशक्ती विरञ्चि नहि पेखा[6]'
'माती शिव की नारी[7]'

पार्वतीसम्प्रदायश्च शक्तिसम्प्रदायरूपे लोके शास्त्रे च विख्यातः, सोऽपि वामदक्षिणभेदेन द्विविधः। सर्वाणि च शाक्ततन्त्राणि शक्तिसम्प्रदायानुगतान्येव। कालिकापुराणे देवो भागवतादौ च दक्षिणः शाक्तसम्प्रदायः। यथा—

'वामं कापालिकं चैव कौलिकं भैरवागमः।'

(३) नरनारायणौ—

धर्मस्य पुत्रौ मुनी बद्रिकाश्रमवासिनौ तयोश्च उपदेशाः चरितानि च यत्र

(१) लिङ्गपुराण पूर्वभाग–७।१।५५
(२) बीजक रमैनी ५२।
(३) बीजक बसन्त ४।
(४) बीजक रमैनी ६६।
(५) बीजक रमैनी ५३।
(६) बीजक-रमैनी ८२
(७) बीजक शब्द ४०।

तत्र पुराणेषु प्रतिपादितानि सन्ति । भगवद्गीताऽपि[1] नारायणरूपस्य कृष्णस्यैव नरावतारमर्जुनं प्रत्युपदेशः । तदुक्तं श्रीकबीरेण—

'कृष्ण समीपी पाण्डवा, गले हिमालय जाय ।
लोहा को पारस मिले, काहे काई खाय[2] ॥'

(४) सनकादि—

सनकादिकाश्चोर्ध्वरेतसो ब्रह्मणो मानसपुत्राः आसन् । तेषामुपदेशाश्चरितानि च पुराणेषु विशेषतो[3] भागवते महाभारते चोपलभ्यन्ते । श्रीसद्गुरुकबीरेणोक्तम् । तद्यथा—

'सनक सनन्दन जयदेव नामा । तन भीतर मन उनहु न जाना[4] ॥'
'तब सनकादिक तत्त्व विचारा । जैसे रङ्क पाव धनपारा[5] ॥'

(५) बलिः—

'वामन रूप छल्यो बलि राजा[6] ।'

बलिश्च भगवद्भक्तः, भगवते सर्वस्वसमर्पणेन भुक्ति मुक्तिञ्च प्राप्य इति सर्वत्र पुराणेषु[7] महाभारते च वर्णितम् । स च निष्कामकर्मणा-चित्तशुद्धिद्वाराज्ञानसम्पत्त्या मुक्तो जातः ।

(६) शेषनागः—

'सो तो शेषहु जाय लुकाई । काहु को परतीति न आई[8] ।'
'शेष सहस मुख पार न पावैं[9] । सो अब खसम सही समुझावैं ॥'

भगवतोंऽशभूतः शेषनागो लोकानुग्रहाय पातञ्जलयोगदर्शनमुवाच । वाङ्मलप्रक्षालनाय च शब्दशास्त्रे महाभाष्यं जगाद । व्याधिनां निग्रहाय च चरकनामकमायुर्वेदग्रन्थं निर्मितवान्, इति त्रिविधोऽस्य सम्प्रदायः ।

---

(१) श्रीमद्भगवद्गीतायाम् १०।३७ ।
(२) बीजक साखी २३९ ।
(३) श्रीमद्भागवत २।५३–५४ ।
(४) बीजक शब्द ८५ ।
(५) बीजक रमैनी १३ ।
(६) बीजक रमैनी १४ ।
(७) भागवत ८।१५।२३ ।
(८) बीजक रमैनी १३ ।
(९) बीजक रमैनी ५२ ।

(७) नारदः—

'ऐसा योग न देखा भाई ... ... ...
नारद कब बन्दूक चलाया[1] ।'

नारदश्च ब्रह्मपुत्रःकुमारो ब्रह्मचारी भगवद्भक्तो भक्तिमार्गस्य प्रवर्तको बभूव। सर्वदा भगवत्संगीत निमग्नस्य वीणावादनेतत्परस्य तस्य सम्प्रदाये साधनायाञ्चास्य समये समये कृता उपदेशाः, सर्वेषु पुराणेषु[2] महाभारते चोपलभ्यन्ते। श्रीसद्गुरुकबीरेणाऽपि भक्तिरूपोपदेशमार्गस्यानुकरणं कृतम्। स्वयमेव उक्तञ्च।

'भगति नारदी मगन शरीरा[3] ।'

(८) वशिष्ठः—

'वशिष्ठ श्रेष्ठविद्या अधिकारी, रामै सौ शिषशाखा[4] ।'

ब्रह्मपुत्रः ऋषिश्च निष्कामकर्ममार्गस्य[5] पौराहित्यमार्गस्य च प्रवर्तकोऽयं बभूव। अयञ्च रामस्य भक्तो गुरुश्चासीत्।

(९) दत्तात्रेयः—

'दत्तात्रेय मर्म नहिं जाना, मिथ्या साधि भुलाना[6] ॥'

दत्तात्रेयश्चात्रिपुत्रो भगवतो विष्णोरवतारः। अयञ्च सांख्ययोगमार्गयोः प्रवर्तक आसीत्। एतस्य चरितानि उपदेशाश्च यत्र तत्र पुराणेषु[7] श्रूयन्ते।

(१०) अम्बरीषः—

'अम्बरीष प्रह्लाद सुदामा, भक्ति सहित मन उनहुँ न जाना[8] ।'

---

(१) बीजक रमैनी ६९।

(२) श्रीमद्भागवत माहात्म्ये–३।१, २।१८–१९। यथा—

नारद उवाच–

'ज्ञानयज्ञं करिष्यामि शुकशास्त्र कथोज्ज्वलम्।
भक्तिज्ञानविरागानां स्थापनार्थं प्रयत्नतः ॥'

(३) कबीरग्रन्थावली चेतावनी अं॰ साखी २७ पद २७८।

(४) बीजक शब्द ८४। (५) योगवा॰ प्र॰ स॰ २।२।१३–१५।

(६) बीजक शब्द ८४। (७) श्रीमद्भागवते ११–७।२५–७५।

(८) बीजक शब्द ८५।

'अम्बरीषनामा राजर्षिः भगवद्भक्तो बभूव। स खलु एकदा एकादशीव्रतं कृत्वा परेद्युर्द्वादश्यां पारणां कामयमानो परंसहस्त्रशिष्यमण्डलपरिवृतेन दुर्वाससा भिक्षा याचिता। स च स्नानार्थं गतस्य सशिष्यस्य दुर्वाससः प्रत्यागमनविलम्बे व्रतलोपभिया जलेन पारणाञ्चक्रे। ततश्च स्नानात् प्रतिनिवृत्तः सक्रोधः तं शप्तुमुद्यतः। तस्य च राजर्षेः रक्षार्थं सुदर्शनचक्रं दुर्निवारकं भगवता नियुक्तम्। ततश्च दन्दहत् सुदर्शनचक्रतेजः दुर्वाससं पलायमानमनुससार। ततो भीतो दुर्वासा भगवद्वासुदेवशरणं गतः। तेनापि प्रत्याख्यात आदिष्टश्च तमेव राजर्षिमम्बरीषं शरणं गतः। स च राजर्षिस्तावत् कालमुपोषित एव दुर्वाससं विज्वरं कृत्वा सम्मान्य च भोजयामास, पश्चाच्च बुभुजे। एषा कथा[1] भागवतादौ सुप्रसिद्धा। अम्बरीषचरितञ्च जगत्प्रसिद्धं लोकैरनुकृतमिति। स एव तस्य सम्प्रदायः। सत्यवापुष्टिरूपेण श्रीसद्गुरुकबीरेणापि स्वग्रन्थे उक्तम्–

'एकादशी व्रत के मर्म न जाने। भूत व्रत हठि हृदय धरें॥
तजि कपूर गाँठी विष बाँधें। ज्ञान गमाये मुगध फिरें[2]॥'

पद्येऽस्मिन् ब्राह्मणानांनिन्दा नास्ति, अपितु ब्राह्मणानां निषिद्धकर्मनिवृत्त्यर्थंतात्कालिकदशा प्रदर्शिता श्रीकबीरेण। उक्तञ्च ब्रह्मवैवर्त्तपुराणे––

श्री नारदब्रह्मणोः सम्वादे—

'यथा बडिसमासक्ष्व मत्स्यापातसुखप्रदम्।
तथा विषयिणां तात ? विषयो मृत्यु कारणम्॥
यो दर्शयत्यसन्मार्गं शिष्यैर्विश्वासितो गुरुः।
कुम्भीपाके स्थितिस्तस्य यावच्चन्द्रदिवाकरौ[3]॥'

(११) राजर्षिजनकः—

'याग्यवल्क्य औ जनक सम्वादा।
दत्तात्रेय वही रस स्वादा[4]॥'

---

(१) श्रीमद्भागवते स्क० ९।४।७१–७४। (२) बीजक शब्द ५२।
(३) बीजक शिशुबोधनी टीकायां पृ० ३८४ से।
(४) बीजक रमैनी ८

राजर्षिजनकः खलुविदेहाधिपोऽपि निमिवंशे बभूव। स च राजर्षिर्याज्ञवल्क्यशिष्योऽध्यात्मविदुपनिषत्सु प्रसिद्धः। तत्कुले च परम्परया सर्वेऽपि आत्मविदो राजानो जनकनाम्नाः विदेहनाम्नाश्च प्रसिद्धाः। बृहदारण्यकोपनिषदि जनकयाज्ञवल्क्ययोः संवादः प्रसिद्धः[१]। तेन च निष्कामकर्मयोगो यो भगवद्गीतायां भगवता उपदिष्टः स एव याज्ञवल्क्योपदेशादनुसृतः। तस्यैव एव सम्प्रदायः। "एवं परम्पराप्राप्तमिमं राजर्षयोविदुः[२]" इति गीतायां भगवता श्रीकृष्णेनोक्तमर्जुनं प्रति।

(१२) याज्ञवल्क्यः—

याज्ञवल्क्यश्च पूर्वं कृष्णयजुर्वेदमधीतवान्। स च गुरुदत्तां विद्यां केनचित्कारणेन गुरौरुष्टे त्यक्तवान्। पश्चाच्च शुक्लयजुर्वेदस्य वाजसनेयिशाखां सूर्यादधीतवान्[३]। तत्र च बृहदारण्यके याज्ञवल्क्यस्य जनकं[४] प्रतिस्वपत्नीं[५] प्रति चाध्यात्मोपदेशः सुबहुधः श्रुतः। याज्ञवल्क्यसम्प्रदायश्च जनकद्वारा प्रदत्तः प्रसृतश्च।

(१३) ध्रुवः—

'ध्रुवप्रह्लादविभीषण माते[६]।'

राजर्षेरुत्तानपादस्य पुत्रः ध्रुवः पड्हायन एव पित्रा विमात्रा चावमानितो नारदोपदेशात् मथुरां प्राप्य यमुनारोधसि समाधिना परमं पुरुषं द्वादशाक्षरेण मन्त्रेणाराधयामास। तुष्टश्च भगवान् तस्मै मनोवांछितवरं ददौ इत्येषा भागवतीकथा[७]। सा च कथाऽन्यत्रापि पुराणादौ[८] प्रसिद्धा। ध्रुवस्य च सम्प्रदायः सर्वेषु वैष्णवसम्प्रदायेष्वनुस्यूत इति प्रसिद्धत्वान्न तिरोहितम्।

(१४) प्रह्लादः—

प्रह्लादश्च हिरण्यकशिपोस्तनयः कयाधुनाम्न्यां[९] मातरि संजातः। स चासुर-

(१) बृहदारण्यकोपनिषदि – ४।१।२। (२) गीतायां ३।३२ तथा ४।२।
(३) विष्णुपुराणे अ० ३ और अ० ५
(४) बृहदारण्यकोपनिषदि अ० ३ ब्राह्मण ४ से ब्राह्मण ८ तक।
(५) मैत्रेयी ब्राह्मण—अ०२ ब्राह्मण ४ श्लोक ४ से १४।
(६) बीजक शब्द ४०। (७) श्रीमद्भागवते ४।८।१२।
(८) विष्णुपुराण अंश १ अ० ११। (९) श्रीमद्भागवते ७।४।३८।

जातोयोऽपि पितामहत्वरान्नारदोपदेशाच्च महावैष्णवो बभूव। पित्रा च विषाग्न्यादिभिः संत्रासितोऽपि भगवत्प्रसादन्नममार। स च समुद्रे प्रक्षिप्तः पर्वतमुपरिप्रक्षिप्तोऽप्यखिलधराधरभगवदभेदेनात्मानं चिन्तयन् न ममार[1]। पर्वताश्च स्वाङ्गेभ्यो व्युदस्तवान्। एष चाद्वैतवादी[2] इत्यस्माद् वृत्तात्प्रतीयते। भगवद्भक्तिरपि ज्ञानाङ्गत्वेनानेन समादृता। अस्यापि सम्प्रदाय च सर्वेषु वैष्णवसम्प्रदायेष्वनुस्यूतो दृश्यते। अस्य कथा सर्वेषु पुराणेषु महाभारते च प्रसिद्धा। एवमेव श्रीकबीरसाहित्येऽपि भगवद्भक्ति ज्ञानाङ्गत्वेनोपलभ्यते[3]।

(१५) विभीषणः—

रावणभ्राता विश्वश्रवसः पुत्रो राक्षसजातीयो विभीषणः श्रीरामभक्तो बभूव। अस्य च चरितं महाभारते पुराणेषु वाल्मीकिरामायणे[4] च प्रसिद्धम्। अस्य च दास्यभावो भक्तिमार्ग एव सम्प्रदाये समादृतः। एषोऽपि सर्वेषु वैष्णवसम्प्रदायेषु भगवद्भक्त इति कृत्वा हनुमानिव समाराध्यते प्रतिकृतं निर्माय।

(१६) हनुमान्—

'हनुमत माते धरि लंगूर।[5]'

हनुमान् वानरः केशरिणो हरेर्भार्यायामञ्जनायां जातः। स च श्रीरामस्य मूर्तस्य प्रतिकृतिरूपस्य वा सेवामेव परमं धर्मं मन्यते। अस्य चरितं वाल्मीकिरामायणे[6] श्रीमद्भागवते[7] च वैशद्येन प्रपञ्चितम्। अयञ्च भाविनि कल्पे ब्रह्मा

---

(१) श्रीमद्भागवते ७।५।१०।

(२) एकस्त्वमेव जगदेतदमुष्ययत् त्वमाद्यन्तयोः पृथगवस्यसि मध्यतश्च।
सृष्ट्वा गुणव्यक्तिकरं निजमाययेदं, नानेव तैरवसितस्तदनुप्रविष्टः॥
श्रीमद्भागवते ७।९।३०।

(३) "जहं जहं देखो तहं तहं सोई। मानिक बेध्यो हीरा।"—बीजक शब्द ८।

(४) वा० रा० युद्ध का० १९ सर्ग २७-३० श्लोक। (५) बीजक वसन्त ४।

(६) वाल्मीकिरामायणे सुन्दरकाण्डे ५१-५३ सर्ग।

(५) श्रीमद्भागवते ९।१०।१६।

भविष्यतीति प्रसिद्धिरस्ति। अस्य च भक्तिमार्गः सेवामार्गश्च सम्प्रदायत्वेन व्यवस्थितः।

(१७) जडभरतः—

'अम्बरीष बलि याज्ञ जनक जड़। शेष सहप मुखपाना[१]।'

श्रीभरतश्च[२] राजर्षिरन्ते वयसि पुत्रेषु राजधुरान्निक्षिप्य वने वसन् हरिमाराधयन्, हरिणी न्यस्तं हरिणशिशुं मरणकालेऽनुशोचन् मृतो हरिणजन्मलेभे। तत्रापि च जातिस्मरः शुष्कपर्णाशनादिभिः कालं यापयन् मृतो भगवत्कृपया ब्राह्मण-जन्म लेभे। तत्र च जड्वच्चेष्टमानः पितरि मृते भ्रातृभिः परित्यक्तः समुपजात-विज्ञानः गृहान्निर्गतः तिलपिण्ड्यादिभिर्जीवनयात्रां कृतवान्।

(१८) अजामिलः—

अजामिलः कश्चिद् दासीपतिः, पतितो ब्राह्मण आसीत्। तस्य च दास्यां जातो नारायणनामा पुत्रो बभूव। स च म्रियमाणः यमदूतान् दृष्ट्वा भयेन नारायणेति प्रियं पुत्रमाजुहाव। ततश्च द्वौ विष्णुदूतौ विष्णुवेशधरौ समागतौ, तौ च तं पाशबद्धं ब्राह्मणं यमभटान् त्रासयित्वा अजामिलं मोचयामासतुः। स च विष्णुदूतमुखात् विष्णोर्माहात्म्यं श्रुत्वा अनुभूय च विष्णुभक्तो बभूव। इति भागवतीकथाऽत्रानुसंधेया[३]।

(१९) शबरी—

"सेवरी जाति कौन कुल कहिये, जूठ वेर ले आई।
प्रीति जानि ताके फल खाये, तीन लोक बड़ाई॥"

शबरी काचिज्जातितोऽनिर्ज्ञातनाम्नी रामभक्ता श्रमणाधर्मनिपुणा बभूव। या खलु भगवते रामाय मधुराणि बदरीफलानि वन्यानि प्रदाय सद्गतिमवाप। एषा च त्रेतायुगे आसीदिति वाल्मीकिरामायणे[४] प्रसिद्धम्। एषा भक्ति सम्प्र-दायानुवर्तिनी ज्ञानमार्गेऽनधिकारिणी आसीत्।

---

(१) बीजक शब्द ४०।

(२) नारदीयमहापुराणे अ० ४८-४९। श्रीम० भा० स्क० ९ अ० ४-५, 'मृगो बभूव स मुनिस्तादृशीं भावनां गतः।'

(३) श्रीमद्भागवते—६।३।२४। यथा—'विक्रुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण इयायमुक्तिम्॥'

(४) वाल्मीकिरामायणे अरण्यकाण्डे ७४ सर्गे ३१-३३। शब्दामृतसिन्धु पृ० २०४।

(२०) श्रीव्यासोद्वैपायनः--

पराशरस्य पुत्रः, अष्टादशानां पुराणानांतावतामेवोपपुराणानां वेदान्तसूत्रस्य प्रणेता वेदस्य चतुर्धा विभाजको बभूव। सत्यवत्याञ्ज क्षत्रियकन्यायां निषाद पालितायां व्यासो बभूव पराशरात्। अयञ्चाद्वैतवेदान्तसम्प्रदायस्य प्रवर्तक इति श्रीशांकरभाष्यदर्शनाद् ज्ञायते, एष च स्मार्तसम्प्रदायस्य प्रवर्तकः, सर्वदेवोपासनासमर्थकत्वादिति न तिरोहितं पुराण-महाभारतादि द्रष्टॄणाम्। अस्य च ब्रह्मसूत्रमालम्ब्य[1] यद्यपि बहवो मतवादाः प्रवृत्तास्तथापि अस्याद्वैतवाद एव तात्पर्यमिति श्रीमत्शंकरभगवत्पादभाष्यदर्शनादवधार्यते।

(२१) श्रीशुकदेवः--

व्यासपुत्रो योगी महाभागवतः राज्ञे परीक्षिताय प्रायोपविष्टाय सप्ताहेन भागवतं श्रावयामास। तत्र च भक्तिमार्गोऽविद्वदधिकारिणां कृते, सांख्यमार्गो योगमार्गश्च विद्वदधिकारिणां कृते दर्शितः। बहवश्च साधकसंप्रदायाः उदाहरणैः प्रदर्शिताः। बहूनि सुकराणि दुष्कराणि च साधनानि[2] दर्शितानि। भागवतस्य चोपक्रमोपसंहारदर्शनेनाद्वैतमते पर्यवसानमवधार्यते[3]। शुकदेवस्य गीतञ्च महाभारते शान्तिपर्वणि[4] दर्शितं जनकस्य निवेशनाग्महारण्यं प्रतिष्ठमानस्य। एष चाद्वैतसंप्रदायप्रवर्तकः। अस्य शिष्यः श्रीगौडपादः[5] तस्य शिष्यः गोविन्दपादः तस्य च शिष्यः श्रीशंकरभागवत्पाद इति। प्रोक्ता सर्वे सम्प्रदायाः प्रायेण प्राचीना सन्ति।

## अर्वाचीनाः साधकसम्प्रदायाः

'गोरखदत्तत्रशिष्ठव्यासकपि, नारदशुकमुनि जोरी।'

(१) गोरक्षनाथः—

श्रीकबीरेण साधकवर्गे परिगणितः गोरक्षनाथस्य जीवनकालः विक्रमस्य एकादश्यां शताब्द्यां निश्चेतुं शक्यते इति श्रीपरशुराम- चतुर्वेदी[1]। श्रीगोरक्षनाथस्य जन्मपञ्चाळप्रान्ते जातमिति प्रमीयते। अस्य कार्यक्षेत्रम्-नेपालः,

(१) ब्रह्मसूत्रे १।१।४। (२) श्रीमद्भागवते २।१।१६-२१।
(३) श्रीमद्भागवते १२।५।४-१०। (फ) ज्ञानस्वरोदये च। पृ० १६।
(४) महाभारत शा० पर्व०। (५) श्रीशंकरात्प्रागद्वैतवादः पृ० ३०५।
(६) उ० भा० पृ० ५७।

उत्तरभारतम्, असमदेशः, महाराष्ट्रम्, सिन्धुदेशश्च । श्रीगोरक्षनाथस्य सिद्धान्तोऽद्वैतसिद्धान्त एवाऽऽसीत् । राजयोगहठयोगावपि अयमात्मज्ञानसाधनत्वेन मन्यते । मनोनिग्रहरूपं मनोमारणमप्ययं ज्ञानाङ्गत्वेन मन्यते । आत्मचिन्तनरूपं सांख्यज्ञानमप्यस्य ज्ञानाङ्गत्वेनाभिमतमित्यपि विज्ञायते । रसायनप्रयागः कायशोधनमप्यस्य ब्रह्मपदोपलब्धये साधनत्वेनाभिमतमिति श्रीपरशुरामचतुर्वेदी[1] मन्यते । उक्तं श्रीकवीरेण—

'गोरखपवन राखि नहि जाना, योगयुक्ति अनुमाना ।'

(२) श्रीजयदेवः

गीतगोविन्दस्यरचयिता विक्रमस्यैकादश्यां त्रयोदश्यां वा शताब्द्यां बभूव । अस्य जन्मस्थानं किन्दुविल्व नाम ग्रामोऽजयानदीतटेवङ्गदेशेवीरभूमिमण्डलान्तर्गते विद्यते । अयं च भक्तिमार्गेनिष्ठावान् आसीदिति श्रीपरशुरामचतुर्वेदी मन्यते । अयं निम्बार्कसम्प्रदायस्य पथिक इत्यपि तत्रैवोक्तम्[2] ।

(३) नामदेवः

महाराष्ट्रदेशे ज्ञानदेवस्य समकालिक आसीत् । अयं च निर्गुण भक्तिमार्गस्य प्रवर्तकः । तुकारामद्वारा चास्य सम्प्रदायः प्रवृत्तः[3] ।

(४) ज्ञानेश्वरः

वारकरी सम्प्रदाये विट्ठलोपासको वैष्णवो बभूव । गीतायाश्च ज्ञानेश्वरीटीकाऽनेन निर्मिता । अयं चाद्वैत भावनयाऽद्वैतभक्तिमान् आसीत्[4] ।

## (१४) श्रीसद्गुरुकवीरस्य मतविवेचनम्

तत्र केचन बड़थ्वाल प्रभृतयः[5] श्रीकवीरमतं बौद्धमतप्रभावितं मन्यते ।

(१) उ० भा० पृ० ६१–६२ बीजक शब्द ८४　　(२) तत्रैव पृ० ९२, ९६ ।
(३) तत्रैव पृ० १०५ ।　(४) तत्रैव पृ० ८५ तथा 'सन्तज्ञानेश्वर' पृ० २५
(५) क–हिन्दी काव्य में निर्गुण सम्प्रदाय' प्रस्तावना पृ० 'ज' ।
ख–काशीनागरीप्रचारणी सभा, शोध पत्रिका पृष्ठ १३८, वर्ष ७७ अंक १–४ ।
ग–'कबीर की विचारधारा'–पृ० ११५, ११९, १२१–१२५ ।
घ–'योग प्रवाह' भूमिका पृ० २–५ ।
ङ–'कल्याण योगाङ्क' पृ० ३०२, ४७१ ।

तन्नयुक्तमिति नागेन्द्रनाथोपाध्यायो मन्यते । एवं हि तदीयो ग्रन्थः[1] । 'एवं विधेषु बौद्धपरम्पराप्राप्तेषु सहजशून्यादिशब्देषु न केवलं बौद्धानामेवैकाधिकारोऽस्ति । यतस्ते शब्दा अन्यप्राचीनपरम्परास्वपि प्रयुक्ता आसन् । यथा—डा० हजारीप्रसादद्विवेदी, डा० कल्याणीमल्लिक, डा० धर्मवीरभारतीप्रभृतयो विचारका बौद्धदर्शने प्रयुक्तानां सहजशून्यादि शब्दानामर्थं तेषां शब्दानां स्वतन्त्रमार्थिकविकासञ्च विश्लेषयन्तो विवेचयन्तश्च निष्कर्षरूपेणदमुक्तवन्तः, यदीमे शब्दा बौद्धसाहित्यात्पूर्वमपि अबौद्धपरम्परासु विविधरूपैः प्रयुक्ता आसन् । श्रीकबीरादयः सन्तोऽप्यनेकस्थलेषु बौद्धमतेतरार्थेषु तेषां शब्दानां बहुशः प्रयोगं कृतवन्तः । यथा बौद्धसिद्धा अन्तःसाधनावादिन अपभ्रंश-रचनानां रचयितारस्तथा श्रीकबीरादिसन्तोऽपि अन्तः साधना वादिन अपभ्रंशभूतहिन्दी रचनानां रचयितारः । बाह्याचारकर्मकाण्डविरोधिनश्चेति साम्यम्[2] ।'

किन्तु एवं साम्ये सत्यपि बौद्धसिद्धानां रचनासु यद् योगस्य स्वरूपमुपलभ्यते तत् श्रीकबीरादीनां सतां योगस्वरूपाद् भिन्नम्, ध्यातव्यभेदात् । ध्यातव्यभेदश्च स्वस्वशास्त्रानुसारिमतभेदात् । बौद्धसिद्धानां रचनासु श्रीकबीरादीनां सतां रचनासु च ध्यातव्यनाम्नां तदर्थानाञ्च वैलक्षण्यमुपलभ्यते । इदमाधारीकृत्य एष निष्कर्षो भवति, यत् श्रीकबीरादीनां सतां परम्परा बौद्धमतप्रभाविता इतीद सर्वथाऽसङ्गततामेति[3] ।

ये विवेचिकाः कदाचिद् विभिन्नसम्प्रदायानां समतामूलकानि तत्त्वानि विचार्य श्रीकबीरसाहित्यं विवेचयन्ति, तेऽपि प्रायस्तं सारग्राही इति, समन्वय-वादी इत्यादिकञ्च वदन्ति । ये तु सीमितया प्रतिबद्धया च दृष्ट्या विचार्य श्रीकबीरमतं स्थापयन्ति, तेऽपि श्रीकबीरो बौद्ध इति, सूफी इति वदन्तः, श्रीकबीरं प्रतिन्यायं न कुर्वन्ति[4] ।

---

(१) 'शोध पत्रिका' ना० प्र० सभा वर्ष ७७, अंक १–४, पृ० १३९ ।
(२) काशी नागरीप्रचारिणीसभा, शोधपत्रिका, पृ० १३९, १९७७ ई० ।
(३) काशी नागरीप्रचारिणी सभा, शोध पत्रिका, पृ० १३९, वर्ष ७७ ।
(४) तत्रैव पृ० १४०, ।

केचन शोधप्रबन्धकाः प्रायः इदं साधयितुं प्रयतन्ते यद् न केवलं श्रीकबीरः प्रत्युत सर्वेऽपि तत्पूर्ववर्तिनः परवर्तिनश्च सन्तोऽपि बौद्धेभ्यो बहून् सिद्धान्तान् गृहीतवन्तः। भक्तितत्त्वं शरणागतिसिद्धान्तश्च सर्वेषु सतां सम्प्रदायेषु मूलतो बौद्धसिद्धान्तेभ्य एवाऽऽगतमिति ते मन्यन्ते[१]।

किन्तु भारतीयसाहित्यस्यैतिहासिकविवेचनया इदन्न सिद्धयति। बौद्धानां परंपरा पूर्वं नाथसंप्रदायेषु समागत्य तद्द्वारा पश्चाच्छ्रीकबीर सम्प्रदाये समागता इति केषांश्चिदुक्तिरिदानीं क्षीणदुर्बला च संजाता। यत एतद् विरोधिन्यो बह्व्यो नवीनतमाः शोधोपलब्धय इदानीं वर्तन्ते[२]।

किञ्च श्रीसद्गुरुकबीरो बौद्धसिद्धान्तानां नाथसिद्धान्तानाञ्चसमूलमुन्मूलनं कृतवानिति[३], स एव कथं बौद्धमतानुयायी, नाथमतानुयायी वा वक्तुं शक्यते। अतोऽयं निष्कर्षः, श्रीकबीरः औपनिषद इति। उपनिषत्सु च सगुणं निर्गुणञ्च 'ब्रह्म' वर्ण्यते। श्रीकबीरेणापि बीजकादौ ग्रन्थे द्विविध 'ब्रह्म' दर्शितमिति[४]। बौद्धानां निरञ्जनः, शून्यः, अन्तर्यामी, सिद्धपदः, निर्वाणादयः शब्दाः श्रीकबीरेणापि स्वीकृता इति यदुच्यते तदपि न युक्तम्, यतो बुद्धात्पूर्ववर्तिनीषूपनिषत्सु पुराणगीतादिषु एते शब्दा बहुधा उपलभ्यते, अत औपनिषदमेव श्रीकबीरस्य मतम्, न तु बौद्धमत प्रभावितमित्येव युक्तम्। भक्तिरपि नारदीय भक्तिरेव स्वीकृता श्रीकबीरेण, न तु बौद्धानां भक्तिः। उक्तञ्च—

'भगति नारदी मगन शरीरा।
इहि विधि भव तरि कहै कबीरा[५]।'

भजनीये भगवति हरि-राम-कृष्णादिशब्दानां बहुधा प्रयोगदर्शनात्।[६] एवं श्रीकबीरस्य परमोपास्यं नाम 'सत्यनामेति' बौद्धानां तु पालिभाषायां 'सच्चा-नाम' इति दृश्यते। तेन विज्ञायते श्रीकबीरमतं बौद्धमतप्रभावितमिति केचन निगदन्ति। तदेतदपेशलम्। तथाहि—

(१-२) का० ना० प्र० शोधपत्रिका पृ० १४१, १४२।
(३) बीजक रमैनी ५३, ५४, ६९, ७१, ८३ तथा रमैनी ३०।
(४) कबीरग्रन्थावली परिचय अं० साखी ३२।
(५) क० ग्र० पद २७८
(६) श० मृ० सि० पृ० २०१ भ० ११, १५, १७।

'ब्रह्मणः सत्यमिति उपनिषत्सु' श्रूयते, सच्च त्यच्चाभवत्' इति तदनुसारि श्री कबीरमतमुपनिषन्मतानुसार्येव न बौद्धमतानुसारीति युक्तम्[१]।

श्रीकबीरमतं बौद्धमतप्रभावितमिति वदन्तः शोधप्रबन्धका अपि श्रीकबीर उपनिषन्मतानुयायीति स्वयमपि घोषयन्ते[२]। मनसो विकारराहित्यचिकीर्षायां प्राणायामप्रक्रियां बौद्धा आस्थिषत तामेव श्रीकबीरोऽपि तदर्थमास्थित इति श्रीकबीरो बौद्धमतमनुसार इति केचन मन्यन्ते[३]। एतदपि न युक्तम्।

यतो बौद्धमताद् योगदर्शनाच्च प्रागपि श्वेताश्वतरोपनिषदादौ त्रिरुन्नतं स्थाप्य समं शरीरमित्यादिरूपेण योगप्रक्रिया समुपलभ्यते। अत एव श्रीकबीर-मतमप्यौपनिषदत्वात्तत एव, योगप्रक्रिया जग्राह इति कुतो नोच्यते[४]। किञ्च बौद्धमते योगप्रक्रियायां प्रयुक्तानां-'ललना-रसना-अवधूती-आलि-कालि-शब्दानां प्रयोगं स्वकीय योगप्रक्रियावर्णनं श्रीकबीरो न कृतवान्[५]। अपरञ्च बौद्धाभिमतः कृच्छ्राचारप्रधानप्राणायामः श्रीकबीरेण न स्वीक्रियते[६]।

श्रीत्रिगुणायतेनोक्तम्—"श्रीकबीरो बौद्धानां महायानमार्गमनुसार इति" केचन मन्यन्ते। बौद्धानां बुद्धचरितादयः श्रीकबीरस्य विचारधारायां प्राणरूपेण विद्यन्त[७] इति। यथा—

'पीछे लागा जाय था लोकवेद के साथ।
आगे थें सद्गुरु मिला, दीपक दीया हाथ[८] ॥'

तत्रैवोक्तम्—पण्डित मुल्ला जो लिख दिया छाडि चले हम कछु ना लिया। इति।

बौद्धधर्मस्य चतुर्णां मूलतत्त्वानां दुःखसमुदयनिरोधमार्गरूपाणां यथेष्टं प्रभावो, दृश्यते श्रीकबीरोक्तिषु[९]। द्वितीयेन आर्यसत्यसमुदयेन संबद्धानामुक्ती-नान्तु बाहुल्यं दृश्यते श्रीकबीरग्रन्थेषु[१०]। बौद्धानां शून्यवादमनुससार कबीर इत्यपि केचन मन्यन्ते तद्यथा—

---

(१) काशी नागरीप्रचारिणी सभा, शोधपत्रिका अंक ७७, पृ० १४१।
(२–३) तत्रैव पृ० १४३।
(४) काशी नागरीप्रचारिणी सभा, 'शोधपत्रिका' वर्ष ७७ पृ० १४३।
(५–६) तत्रैव पृ० १४३। (७) कबीर की विचारधारा—पृ० ११९।
(८) क० ग्र० साखी पृ० २। (९) कबीर की विचारधारा—पृ० १२०।
(१०) तत्रैव पृ० १२१, १६४।

'जेहि वन सिंह न संचरे, पक्षी उड़ि नहिं जाय।
सो वन कविरन हिंड़िया, शून्य समाधि लगाय॥'

बौद्धा उच्छेदवादे शाश्वतवादे चास्थां नास्थिपत। यथा--

'अस्तीति शाश्वत ग्राहो, नास्तीति उच्छेददर्शनम्।
तस्मात् अस्तित्वनास्तित्वे, नाश्रयन्ते विचक्षणाः॥' इति

'अत एव ते अनयोर्वादयोर्मध्यमार्गं प्रशस्तं मन्यन्ते। बौद्धानामेनं मध्यमार्गं श्रीकबीरः स्वीयया रीत्याऽनुससार। किञ्च 'भक्ति को अङ्ग' नाम्नी साखीमध्यमार्गप्रणालीमेवाश्रयते। यत्र श्रीकबीरो मध्यमार्गपद्धत्यैव ईश्वरं निरूपितवान्। यथा-

'जहाँ वोल तहँ आखर आवा, जहँ अवोल तहँ मन न रहावा।
वोल अवोल मध्य है सोई, जो है सो कछु लखै न कोई॥'

वस्तुतः--यद्यपि श्रीकबीरो बौद्धानां बहूनितत्त्वानि आत्मसात् कृतवान्, किन्तु स एव तेषां प्राणभूतमनात्मवादमनीश्वरवादञ्च महता प्रयत्नेन पर्यदूषयत्। यतः श्रीकबीरोऽत्यन्त आस्तिक आसीत्।

तथ्यतः—श्रीकबीरसिद्धान्तविषयेऽन्यलेखकानां मते श्रीकबीरः सारग्राही महात्मा आसीत्। सर्वप्रमुखसंप्रदायधर्माणां सारभूततत्त्वानां ज्ञानसंपादनं तदीयजीवनस्य लक्ष्यमासीत्। अत इदं संभाव्यते यदसौ कस्यापि बौद्धपण्डितस्य सानिध्यमेत्य तस्माद् बौद्धानां मूलसिद्धान्तानधीतवानिति। किन्तु विषये अस्मिन् केचिद् वदन्ति यत् श्रीकबीरसमये बौद्धधर्मस्यात्यन्तो ह्रास आसीत्, तस्मिन् समयेऽन्वेषणेऽपि बौद्धपण्डितो भारतवर्षे दुर्लभ आसीत्। अतः श्रीकबीरस्योपरि बौद्धधर्मस्य साक्षात्प्रभावो वक्तुं न शक्यते। इति श्रीत्रिगुणायतो मन्यते[1]।'

'शून्यमण्डल में शोधिलै, परम जोति परगास।
तहवाँ रूप न रेख है बिन फूलनि फूल्यो रे आकाश॥[2]'

इति श्रीकबीरवाणीदर्शनेन ( शून्यशब्दात् ) यद्यपि श्रीकबीरस्योपरिशून्य-

(१) कबीर की विचारधारा—पृ० १२४–१२५।
(२) क० ग्र०—पद १२१।

वादस्य प्रभाव आसीदिति प्रतीयते तथापि 'परम जोति परगास' इत्यंनदर्शनेन श्रीकबीरस्योपरिशून्यवादस्य प्रभावो नासीदिति निश्चीयते। यथा—
'अद्वैतरूपमखिलं हि कथं वदामि, नित्यं ह्यनित्यमखिलं हि कथं वदामि।
सत्यं ह्यसत्यमखिलं हि कथं वदामि, ज्ञानामृतं समरसं गगनोपमोऽहम्॥'
'न शून्यरूपं न विशून्यरूपं, न शुद्धरूपं न विशुद्धरूपम्।
रूपं विरूपं न भवामि किंचित्, स्वरूपरूपं परमार्थतत्वम्[1] ॥'

समीक्षा—

(१) श्रीसद्गुरुकबीरग्रन्थेषु रामहरिनारायणादयः शब्दा बहुधा उपलभ्यन्ते, तैन विज्ञायते, श्रीकबीरो नारदभक्तिप्रभावित[2] आसीत्। इति।

(२) किञ्च—श्रीकबीरग्रन्थेषु शून्य-सहज-विज्ञान-निर्वाणादिशब्दानामुपलभ्यमानत्वेन बौद्धधर्मधाराप्रभावस्तस्मिन्[3] द्युोतयन्ते।

(३) श्रीकबीरो योगे नाथपथपद्धतिमनुससार इति तद्ग्रन्थावलोकनेन प्रतीयते[4]।

(४) श्रीकबीरस्य मतं सूफीमत प्रभावितमित्यपि[5] तद्ग्रन्थपरामर्शे सति बुद्धिमारोहति। तथाहि कबीरग्रन्थेषु भगवति दाम्पत्यप्रेमवर्णनं बहुधा दृश्यते।

(५) श्रीकबीरः सगुणोपासनाविरोधी इत्यपि श्रीकबीरग्रन्थाम्रेडनेन प्रतीयते इत्येतत्सर्वं श्रीपीताम्बरदत्त बड़थ्वाल[6] महोदयो मन्यते। एवमेव अन्येऽपि लेखका मन्यन्ते। तत्तु विवेकरहितम्।

## (१५) तत्र श्रीसद्गुरुकबीरमतविषये स्वमतम्

श्रीसद्गुरुकबीरः स्वामिरामानन्दशिष्यो वैष्णवसम्प्रदाय प्रभावितोऽपि न द्वैतवादी किन्तु वस्तुतोऽद्वैतवादी इत्येव वयं मन्यामहे। एतदुक्तं स्वयमेव सद्गुरुकबीरेण:—

'द्वैत कहे ताहि को दोजख[7]'।
''कहै कबीर तरक दुई साधै, ताकी मति है मोटी[8] ॥''

(१) अवधूत गीतायां ३।५–४५
(२) हिन्दी काव्य में निर्गुण सम्प्रदाय, प्रस्तावना, पृ० 'ज'। (३–४) तत्रैव।
(५) हिन्दीकाव्य में निर्गुण-सम्प्रदाय, प्रस्तावना, पृ० 'ष' से 'ट' (६) वही 'प'।
(७) क० ग्र० पृ० ८२ पद ५५। (८) क० ग्र० पृ० १०५ पद ६५।

'जल में कुंभ कुंभ में जल है, बाहर भीतर पानी।
फूटा कुम्भ जल जलहि समाना, यह तत्त बूझो ज्ञानी[1] ॥'
'हम सब माँहि सकल हम माँहि, हम थे और दूसरा नाहिं[2] ॥'
'भाई रे दुई जगदीश कहाँ ते आया,
कहु कौनें भरमाया[3] ॥' इत्यादि।

भक्तिभावनायां तथा आध्यात्मिकक्षेत्रे च वर्णाश्रमाणां प्रतिबन्धः श्रीकबीरस्य गुरौ स्वामिरामानन्दे नासीत्। अतोऽयं वर्णाश्रमप्रयुक्तप्रतिबन्धाभावः श्रीसद्गुरुकबीरेण स्वगुरुपरम्परात् एव प्राप्तो न तु बौद्धादिधर्मात्प्राप्त इति वेदितव्यम्।

अन्ये च "मुक्तिमार्गसम्बन्धीयाः पदार्थाः श्रीकबीरग्रन्थेषु" परिलक्ष्यन्ते। श्रीकबीरग्रन्थेषु परमतखण्डनपराणि वाक्यानि परमतसंग्रहपराणि विविधप्रकाराश्च पन्थानः समुपलभ्यन्ते।

श्रीकबीरसमयात्प्राक् श्रीशङ्कराचार्यप्रभावस्य बौद्धविद्वेषिणोऽनुवर्तमानत्वात् तदानीं बौद्धा अन्वेषणेऽपि न लभ्यन्ते स्म। अतो बौद्धधर्मस्य प्रभावः श्रीकबीरस्योपरि आसीन्न वा इति प्रश्नः उत्थित एव न भवति इत्युक्तं त्रिगुणायतेन स्वग्रन्थे[4]। इदमेव श्रीकबीरविषये ममाप्यभिमतमिति।

किञ्च बौद्धमतखण्डनं बौद्धशब्दैरेव कृतं श्रीकबीरेण। तद्यथा—

'शून्य सनेही राम बिन, चले अपन पौ खोय।
मन मथ मरे न जीवई, जीवहिं मरण न होय[5] ॥' इत्यादि

किञ्च शून्यवादिनां बौद्धानां मतं खण्डितं तत्र तत्र श्रीकबीरेण इत्यपि न विस्मर्तव्यम्। तद्यथा—

'सुन्न सहर में पाईया, तह मरजीवामन्न।
कबिरा 'चुनि चुनि ले गया, भीतर राम रतन[6] ॥'

अतोऽपि विज्ञायते श्रीकबीरस्योपरि बौद्धमतप्रभावो नासीदिति।

किञ्च—बौद्धधर्मप्रभावितानां जनानामुद्धाराय श्रीकबीरो बौद्धशब्दैरेव तद्बोधनाय अनूद्यमानैः स्वमतं प्रकाशितवान् इत्यपि वक्तुं शक्यते। तद्यथा—

(१) क० ग्रं० पृ० ८० पद ४४। (२) वहीं ग्रा० पृ० ३३२।
(३) बीजक शब्द २६। (४) कबीर की विचारधारा पृ० १२५।
(५) बीजक रमैनी ८३। (६) साखी ग्रन्थ।

'सहज सहज सब कोई कहै, सहज न चीन्हें कोय।
जिहि सहजै हरि जो मिले, सहज कहीजैं सोय'[1] ॥'
सहजै सहजै सब गए, सुत वित कामनि काम।
एकमेक ह्वै मिलि रह्या, दास कबीरा राम[2] ॥

'शून्यहि बाँछे शून्य ही गयऊ, हाथा छोड़ि बेहाथा भयऊ'[3] ॥ इत्यादि। एवमेव श्रीकबीरप्रयुक्तानां शून्यादिशब्दानामपि उपरि विचारः कृतः।

किञ्च बौद्धपरम्परासु प्रयुक्तानां सहजशून्यादिशब्दानामुपरि केवलं बौद्धानामेव एकाधिकारो नास्ति। ते खलु बौद्धेतरास्वपि प्राचीनपरम्परासु प्रयुक्ताः भवन्ति स्म, शब्दानुशासनस्य सर्वान् प्रति अविशेषात्।

किञ्च शून्यवादिनां शून्यतत्त्वप्रतिपादनेऽनुकरणं स्वग्रन्थे कृतं श्रीकबीरेण। यत्तु बड़थ्वालप्रभृतयः केचन श्रीकबीरसम्प्रदायानुसारिणश्च मन्यन्ते, 'सच्चनाम' इति पालिभाषायां प्रयुक्तस्य बौद्धपरम्परागतस्य शब्दस्यैव प्रभावेण श्रीकबीरेण अन्यैश्च सद्भिः 'सत्यनाम[4]' इति शब्दः स्वसाहित्ये प्रयुक्त इति तन्न सम्यक्। अनुरागसागरकबीरमन्सूरप्रभृतयः' 'सत्यनाम' प्रतिपादकाः ग्रन्थाः श्रीमद्गुरुकबीरकृताः नासन् कालान्तरे सम्प्रदायस्य कृताः स्युरिति।

यतः श्रीकबीरग्रन्थे बीजके, श्रीगुरुग्रन्थान्तर्गतासु श्रीकबीरवाणीषु च 'सत्यनाम' शब्दो न दृश्यते, किन्तु सर्वत्र रामशब्दो यथार्थं लक्ष्यार्थेन प्रयुज्यमानः श्रीकबीरवाणीषु दृश्यते। इदं श्री डा० पारसनाथत्रिपाठी ( तिवारी ) अपि मन्यते[5]। अतः श्रीसद्गुरुकबीरो न बौद्धानुयायी, इति ॥

---

(१) साखी ग्रन्थ पृ० ५६३ सा० १। (२) कबीर ग्र० पृ० ३३ सा० ३।
(३) बीजक रमैनी १९। (४) हिन्दी काव्य में निर्गुण सम्प्रदाय पृ० १९१।
(५) 'आरम्भ में दादूपंथ, निरंजनीपंथ, कबीरपंथ, अथवा नानकपंथ आदि संत सम्प्रदायों में नाम स्मरण के लिए प्रायः रामनाम की सबसे अधिक महत्ता थी। प्रत्येक पंथ का प्रवर्तक महात्मा इसी नाम पर दीवाना था और इसी नाम की महिमा उनकी प्राचीन बानियों में मिलती है। किन्तु जैसे-जैसे समय बीतता गया, प्रायः प्रत्येक सम्प्रदाय में पार्थक्य दृष्टि से उपास्य तत्त्व का एक विशिष्ट और पृथक् नाम भी चुन लिया गया, इस प्रकार कबीरपंथ में 'सत्यनाम' दादूपंथ में 'सत्तराम'।
—क० ग्र० ( पा ), भूमिका पृ० १११।

यत्तु श्रीडा० हजारीप्रसादद्विवेदीप्रभृतयः[1] 'श्रीकबीरमन्सूर' आदि संप्रदाय ग्रन्थानाधारीकृत्य उक्तवन्तः—यत् श्रीकबीरदासः नाथसंप्रदायाद् भ्रष्टानां यवनीभूतानां योगिनां कुलेजातः तस्मिन् कुले स्वल्पवार्तायोगचर्चा आसीद्, अतः कुलप्राप्तस्वल्पयोगसंस्कारवशात् श्रीकबीरो नाथसम्प्रदायाद् योगमभ्यस्तवानिति । तदेतन्न समीचीनम्, पूर्वं पुष्कलप्रमाणैः श्रीसद्गुरुकबीरस्य जन्मनो निर्धारितत्वात् । अतः श्रीरामानन्दस्वामिनः स्वगुरोः सकाशाद् एव योगं प्राप्तवानिति समीचीनं मतं मम प्रतिभातीति । किञ्च डा० हजारीप्रसादप्रभृतयो मन्यते[2] नाथ-सम्प्रदायमनुससार श्रीकबीरः, तथाहि—तद्ग्रन्थेषु नाथसम्प्रदायानुगतापद्धतिर्दृश्यते । तद्यथा—

गोरख राम एको नहिं उहवां ना वहां वेद विचारा ।
हरिहर ब्रह्मा ना शिवशक्ति, ना वहां तिरथ अचारा ॥
'रामनिरंजन न्यारा[3] रे' इत्यादि ।

तदेतन्न समीचीनम् । तथाहि—

सर्वासूर्वनियत्सु सर्वनिषेधपद्धतिरुपलभ्यते, तामेव पद्धतिमनुसृत्य स्वगुरु-श्रीस्वामिरामानन्दं द्वारी कृत्य संप्राप्य चानुससार श्रीकबीर इति कुतो नोच्यते । लेखका अज्ञानवशाद् ज्ञानसागरादिग्रन्थान् श्रीकबीरकृतान् स्वीकुर्वन्ति ततो भ्रान्त्या विभिन्नकल्पनाः कुर्वन्ति । किञ्च, श्रीसद्गुरुकबीरो नाथसम्प्रदायमतखण्डनं कृतवान् । यथा—

'अवधू कुदरत की गति न्यारी'……इत्यादि[4]
अवधू सो योगी गुरु मेरा' … इत्यादि[5]

अतो न नाथसम्प्रदायानुसारी श्रीकबीर इति । श्रीस्वामीरामानन्दोऽपि नाथसम्प्रदायमेवानुससार इति वक्तुं न शक्यते, मानाभावात् । अतो नाथसम्प्रदायपद्धतिः श्रीकबीरपद्धतिश्चेति द्वयमपि उपनिषद् मार्गमेवानुसरतीति वक्तुं युक्तमिति ।

यत्तु डा० हजारीप्रसादत्रिगुणायतप्रभृतयो[6] वदन्ति यत् श्रीकबीरो नाथ-

(१) कबीर—पृ० १३, ३१–३२ । (२) कबीर पृ० १३ ।
(३) कबीर पृ० ३१–३२ । (४, बीजक शब्द १५ ।
(५) बी० श० १७।४८ । (६) कबीर पृ० ३३ ।

पथानुयायीति, तथाहि—श्रीकबीरः स्वरचनासु यद्योगिनां स्वरूपं चर्चितवान्, यथा—किंगरी, मेखला, सींगी, इत्यादितत्सर्वं नाथयोगिनामेवेति। तदिदं सर्वं श्रीकबीरसाहित्यस्य दुरवगाहस्य अगाधस्य मननाभावप्रभवम्। तथाहि—

'सो योगी जाके मन में मुद्रा……… इत्यादि
'कहे कबीर सो लहसै लङ्का'।

इत्यन्तो ग्रन्थस्तेषामेतद् विभ्रमकारणम्। न चायं ग्रन्थस्तेषां मतं पोषयति। तथाहि—अस्मिन्ग्रन्थेऽस्मिनपद्ये हि श्रीकबीरो नाथयोगिनां मतं खण्डयति। नाथयोगिनो हि शरीराद् बहिरेतानि लिङ्गानि मुद्रादीनि धारयन्ति श्रीकबीरस्तु मनसि ऐतेषां लिङ्गानां धारणमुपदिशति।

किञ्च, नाथयोगिनां गुरूणां गुरुर्मत्स्येन्द्रनाथो बहिरेतानि लिङ्गानि बिभ्रत् लङ्कां (सिंहलद्वीपं) प्राप्तः स्त्रीभिर्वशीकृतः, श्रीहनुमांस्तु मनसि एतानि लिङ्गानि बिभ्रल्लङ्कां गतस्ताभिः स्त्रीभिः सह लङ्कां ददाह इति सुन्दरकाण्ड-पाठात्प्रतीयते[२] इतीदं सर्वं पुराणानुसार्युक्तं श्रीकबीरेण—'कहे कबीर सो लहसै लङ्का इत्यनेन सूचयति, इतीदं स्वमतसाधकत्वे नोपन्यस्तं श्रीकबीरवाक्यं तन्मत खण्डनायैव प्रजातमिति वेदितव्यम्। अतएव कबीरस्य द्वैताद्वैतविलक्षण 'राम' शुद्धं ब्रह्म इति ज्ञायते।

---

(१.—"एक मात्र निरञ्जन राम है जो सबसे विलक्षण है, सबके अतीत। कबीरदास के मत से 'नाथ' वह है जो समस्त त्रिभुवन का एकमात्र यती, परब्रह्म है। यह कथन सिद्ध जलन्धर के वाक्य में कहे हुए उस वचन से मिलता है जिसमें 'नाथ' को द्वैताद्वैतविलक्षण समस्त मतियों में श्रेष्ठ, शंकरस्वरूप कहकर स्तुति की गयी है।
कबीर की विचारधारा पृ० १६७।

(१) कबीर पृ० ३३।

(२) क्रन्दन्त्यः सहसापेतुः स्तनंधयधराः स्त्रियः।
काश्चिदग्निपरिताङ्गयो हर्म्येभ्यो मुक्तमूर्धजाः॥
हा तात हा पुत्रक कान्त मित्र हा जीवितेशाङ्ग हतसुपुण्यम्।
रक्षोभिरेवं बहुधा ब्रुवद्भिः शब्दः कृतोऽघोरतरः सुभीमः॥

नाथपथिकानां मुक्तिसम्बन्धिनोभिर्धारणाभिरपि श्रीकबीरः प्रभावित आसीदिति [1]त्रिगुणायतप्रभृतयो वदन्ति । तथाहि–नाथपथिकानां द्वैताद्वैत-विलक्षणं ज्योतिः स्वरूपं 'ब्रह्म' श्रीकबीरस्यापि मान्यम् । श्रीकबीरस्योपरि नाथपथिकानां शब्दवादस्य प्रभावः, नादबिन्दुप्रभृतयश्च शब्दाः श्रीकबीर-साहित्ये उपलभ्यन्ते इति ।

तदेतन्न समीचीनम् । तथाहि—

एवं सर्वमुपनिषत्सु नादबिन्दुप्रभृतिषु अन्यासु चोपनिषत्सूपलभ्यमानं श्रीस्वामिरामानन्दं स्वगुरुं द्वारीकृत्य श्रीकबीरेण लब्धमिति, सम्यग् वक्तुं शक्यते । यतः श्रीकबीरो नाथपथिकानामवधूतानां खण्डनं तत्र-तत्र कृतवानिति श्रीकबीरसाहित्यावलोकनेन प्रतीयते ।

किञ्च त्रिगुणायतप्रभृतयो[2] वदन्ति–नाथपथिकानां साधनापद्धतेरपि प्रभावः श्रीकबीरस्योपर्यासीदिति । तथाहि–नाथपथिकैरिव गुरुमहत्त्वं श्रीकबीरेणापि स्वीकृतम् । तैरिव तेनापि इन्द्रियसंयमः, प्राणसंयमः, मनः संयमः, इत्यादयो मुमुक्षूणामवश्यकर्तव्यत्वेन दर्शिताः स्वीकृताः । नाथपथिकेष्विव कबीर-साहित्येऽपि नाडीसाधनाकुण्डलिनीसाधनयोश्चर्चा श्रीकबीरसाहित्ये समुप-लभ्यते ।

षट्चक्रभेदनमपि तेषामिव श्रीकबीरस्यापि प्रियमासीत् । अजपा, सुरति, शब्दयोग, शून्य, सहज निरञ्जनादि पदार्थानां चर्चाऽपि श्रीकबीरस्य योगसाध-नायां कबीरसाहित्ये च तत्र तत्रोपलभ्यते[3] । इति । तन्न ।

एतदपि सर्वमुपनिषत्सु पूर्ववर्तिनीषु योगसाधनायामवश्यकर्तव्यत्वेनोपलभ्य-मानं नाथपथिकैरिव स्वगुरुं श्रीस्वामिरामानन्दं द्वारीकृत्यसमुपलभ्य श्रीकबीरे-णापि स्वीकृतमिति सम्यग् वक्तुं शक्यत्वात् । श्रीकबीरस्य नाथपथानुगमने श्रीकबीरसाहित्येऽन्यत्र वा प्रमाणं नोपलभ्यते ।

यत्तु नाथपंथीयभाषासाम्येन नाथपथप्रभावितत्वं श्रीकबीरस्य सिद्धान्तं

(१) कबीर की विचारधारा–पृ० १६७-१६८ । (२) तथैव पृ० १६९

(३) कबीर-पृ० ६०–६१ ।

[1]त्रिगुणायतप्रभृतयो मन्यन्ते तदपि न सम्यक्। नाथपंथीयमतखण्डनं, श्रीकबीरः तन्मतं तच्छब्दैरेवानूद्यकृतवानित्यस्यैव युक्तत्वात्।

श्रीकबीरस्योपरिनिरञ्जनमतस्य प्रभाव आसीदिति—त्रिगुणायत हजारीप्रसादद्विवेदादयो[2] मन्यन्ते। तथाहि—

लोकविपरीतमार्गेण स्वमतवर्णनं निरञ्जनपथीयानां सारणिः। साऽनुसृता श्रीकबीरेण, किञ्च, योगसाधनाऽपि तेषामेवानुसृता श्रीकबीरेण, श्रीभगवन्नामस्मरणम्, अजपाजापः इतीदं द्वयमपि तत एव गृहीतं श्रीकबीरेणेति। तदेतन्न समीचीनं भाति। तथाहि—

अलौकिकरूपेण अलौकिकपदार्थवर्णनं श्रुतिष्वपि दृश्यते। यथा—

'अन्धोमणिमविध्यत्तमनङ्गुलिरावयत्।

तमग्रीवः प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयत्॥'[3] इति।

गीतास्वपि दृश्यते—अश्वत्थमेनं सुविरूढमूलम्[4]......' इत्यादि।

उपनिषदि च—'द्वा सुपर्णा सयुजा सखाया[5] ........'इत्यादि।

अजपाजपोऽपि—'अहं ब्रह्माऽस्मि' 'सोऽहं' इति श्रुतिवाक्यात्प्राप्त एव।

यत्तु डा० श्यामसुन्दरदासप्रभृतयो[6] मन्यन्ते श्रीकबीरः सूफीसंप्रदायानुसारी इति। तन्न सम्यक्। यतः सूफीसंप्रदायमनुगता भगवन्तं 'प्रियतमा' रूपेण पश्यन्ति श्रीकबीरस्तु तद्विपरीतं पतिरूपेण पश्यतीति। सा चैषा भगवति प्रियतमत्व दृष्टिः पुराणेषु भागवतादिषु कार्यत्वेन उपलभ्यते। यथा – भागवते गोपीनां कामं निरोद्धुमसक्तानां भगवति प्रियतमत्व बुद्धिरासीदिति। तत्र पुराणानामयं भावः। यद्यपि कामक्रोधरागद्वेषमदमात्सर्यादयो दोष हातव्य एव, मुक्तिमार्गपरिपन्थित्वात् तथापि तेषां हानाशक्तौ भगवति ते प्रयुक्ताः कल्याणाय कल्पन्ते इति। अत एव ये वदन्ति डा० हजारीप्रसादप्रभृतयः – श्रीकबीरः पुराणगुह्यं न वेद इति, तत्तेषां मतमसङ्गतम्। यतो भगवति प्रेमरूपाभक्तिः

(१) कबीर की विचारधारा–पृ० १५७। (२) कबीर–पृ० ५३।
(३) ऋग्वेदसंहिता। (४) गीता–१५।२।
(५) ........ (६) ........ भूमिका पृष्ठ ५१–५२।

पुराणानुसारिणी श्रीकबीरेण श्रीस्वामिरामानन्दगुरोः सकाशाल्लब्धा इति निश्चप्रचं विज्ञायते। दृश्यते हि हरिप्रेमरूपाभक्तिः श्रीसद्गुरुकबीरसाहित्ये। तद्यथा—

हरि मोर पिउ मैं राम की [1]बहुरिया
प्रेम भगति ऐसी कीजिए······तब केता होय [2]अनन्द रे।

अन्यत्र च –

हरि जननी मैं बालक तेरा, काहे न अवगुण बकसहु [3]मेरा। इत्यादि।

श्रीभगवन्नामस्मरण– कलिसंतरणोपनिषदि अन्यत्रापि च नाम ब्रह्मेत्युपासीत इति, पुराणादिषु नारदादि [4]भक्तिसूत्रेषु दृश्यते इति हेतो निरञ्जनमतानुसारी श्रीकबीर इति मानाभावाद् न वक्तुं शक्यते।

जैनधर्मस्याहिंसा धर्मेण श्रीकबीरः प्रभाविक आसीदित्यपि [5]त्रिगुणायतमतं न युक्तम्। अहिंसा धर्मस्य श्रुतिस्मृति पुराणादिषु सुबहुशः श्रुतत्वात्। वैष्णवमतानुसारी चैवधर्मः।

इस्लामधर्मस्य प्रभावः श्रीकबीरस्योपरि– आसीत इति केचित् तथाहि भयवादः, जातिसाम्यवादः, पैगम्बरवादः, नूरवादः, एतेवादाः श्रीकबीरग्रन्थेषु दृश्यते इति। ते च प्रत्याख्यानायानूदिताः श्रीकबीरेण इति साधुप्रतिभाति। किन्तु एतन्न!

सूफी सम्प्रदायानुसारी कबीर इति तु प्रागेवप्रत्याख्यातम्।।

श्रीसद्गुरुकबीरस्य दार्शनिकसिद्धान्तपद्धतौ बहवो मतभेदाः स्वस्वभावनामूलाः विदुषां दृश्यन्ते। तथाहि—

(१) डा० बड़थ्वालमहोदयः श्रीकबीरमद्वैतवादिनं मन्यते।
(२) डा० की साहबमहाशयः तं विशिष्टाद्वैतवादिनं स्वीकरोति।

---

(१) बीजक शब्द ७४क० ग्र०-पद ११७ तथा कबीर की विचारधारा-पृ० ५५९
(२) हिन्दीकाव्य में निर्गुण सम्प्रदाय-प्रस्ता० पृ० 'ट' (३) क० ग्र० पद १११।
(४) सर्वश्रुतिरहस्यं गोप्यं तच्छृणु येन कलिसंसारं तरिष्यति। भगवत आदिपुरुषस्य नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवति। नारदः पुनः प्रपच्छ नम्राम किमिति। स होवाच—'हरे राम' इत्यादि।
(५) कबीर की विचारधारा पृ० १६५ — कलिसंतरणोपनिषत् ) ?

(३) डा० फुरकुहर महोदयस्तु तं भेदाभेद वादिनं वदति ।

(४) डा० भण्डारकरमहोदयस्तु तं द्वैतवादिनं साधयति ।

तं एतेषां मतभेदाः कबीरसाहित्यानवधानेन संजाता इत्यत्र नास्ति संदेहः । श्रीकबीरसाहित्ये सर्वेषामेतेषां मतभेदानां तत्तदवसरे विभिन्नाभिर्भावनाभिर्निबन्धनात् । वस्तुतस्तु श्रीकबीरस्याद्वैतवाद एव तात्पर्यमिति ममतं श्रीकबीरसाहित्यावलोकनेन दृढीभूतम् । तथाहि-कस्यापि तात्पर्यावधारणे एतानि लिङ्गानि शास्त्रे निर्धारितानि—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति ।

तत्र तावद्बीजके एतानि तात्पर्यलिङ्गानि दृश्यन्ते । तथाहि बीजकस्यादौ सुबद्धानि पद्यानि दृश्यन्ते । तद्यथा—

'जीवरूप एक अन्तरवासा, अन्तरज्योति कीन्ह प्रकाशा[१] ॥'
'अन्तर ज्योति शब्द एक (एक) नारी[२]..........'
'वरनहु कौन रूप औ रेखा[३]'
'एके पुरुष एक है नारी, ताकर करहु विचारा[४]'
(४) बीजक शब्द ५ ।
'जहँ जहँ देखों तहँ तहँ सोई माणिक वेध्यो हीरा ।
परम तत्त्व यह गुरुसे पायो कहँ उपदेश कबीरा[४] ॥
साखी—'पैठा है घट भीतरे, बैठा है सह चेत[५]'
'यह मनतो शीतल भया, जब उपजा ब्रह्मज्ञान[६] ।'
'हम-कर्त्ता सब सृष्टिका, हम पर दूसर नाहिं ।
कहहिं कबीर हम नहिं चिन्हें, सकल समाना ताहि[७] ॥

श्रीत्रिगुणायतमहोदयः स्वकीयग्रन्थे श्रीकबीरधर्मविषये बहून् मतभेदान् उपस्थापितवान् । तथाहि—तत्र निम्नलिखितानि मतानि दृश्यन्ते—

---

(१) बीजक रमैनी १ । (२) बीजक रमैनी २ । (३) बीजक रमैनी ६ ।
(४) बीजक शब्द —८ । (५) बीजक साखी—३३७ ।
(६) बीजक साखी—३५२ । (७) बीजक सा० परि०—[illegible]

(१) श्रीकबीरो हिन्दूधर्मानुयायी इत्येकं मतम्[1] ।
(२) श्रीकबीर इस्लामधर्मानुयायी इत्युपरम्[2] ।
(३) केचन तमीशा-धर्मानुयायिनं मन्यन्ते ।[3] इति ।

तत्र मम मतम्—

श्रीकबीराः साधव (फकीराः) मया पूर्वमेवावसाधितम् तत्र हिन्दू श्रीकबीर महोदयः हिन्दूधर्मानुयायिभिः साधुभिः गृहस्थश्च सततं समाहुताः ।

इस्लामधर्मानुयायीं श्रीकबीरस्तु इस्लामधर्मानुयायिभिः सम्मन्यते । ईसाई-धर्मानुयायी तु न कोऽपि कबीरो बभूवेति । कश्चित्बलात् शब्दसाम्यात् श्रीकबीरस्वामीशाईधर्मानुयायिनं मन्यते तन्नोचितम् ।

---

(१) प्रसङ्गपारिजात-अष्टपदी ४६ । भक्तमाल घ० छ० ३२, 'वैष्णविज्म एण्ड शैवइज्म'—पृ० ६६–६७ ।
(२) कबीरवाणी सं०—पृ० ११ । (३) कबीर एण्ड हिज फालोअर्स पृ० २६१ ।

# अथ द्वितीयोऽध्यायः

## (१६) सैद्धान्तिक परम्परा परिचयः

### श्रीस्वामिरामानन्दाचार्यस्य विशिष्टाद्वैतवादित्वमद्वैतवादित्वं वा

श्रीरामानन्द स्वामी राघवानन्दस्वामिनो विशिष्टाद्वैवादिनः शिष्योऽभूत्, राघवानन्दश्च भक्तिमार्गप्रचारकः समग्रे भारते स्वप्रभावं स्थापयित्वा अन्ते काश्यामेव निवसति स्म। एतस्य विषये इयं किंवदन्ती श्रूयते, यदयं योग-विद्याया पारङ्गत आसीत्। स्वशिष्यं रामानन्दमपि पूर्णयोगिनं विधाय दीर्घा-युषं कृतवान्। मिट्ठीलालविरचिते 'गुरुप्रकाशि' नामकग्रन्थे इदं लिखितमस्ति।[1] यथा—

श्री अवधूतवेष को धारे राघवानन्द सोई।
तिनके रामानन्द जग जाने कलि कल्याण भई॥

श्रीराघवानन्दविरचितं 'सिद्धान्तपञ्चमात्रा' नामक ग्रन्थमाधारीकृत्य डा० पीताम्बरदत्तबड्थ्वालमहोदयेन राघवानन्दस्य साधनमार्गे योगः प्रेम चेत्यनयोः समन्वितं रूपमनुमितम्। तस्मिन् ग्रन्थे हठयोगप्रणाली बहुधा अनुसृता। किञ्च तस्मिन् ग्रन्थे वैष्णवसम्प्रदायद्वारा स्वीकृतानां माला-तिलक-सुमिरणीप्रभृतीनां पूर्णः समावेशो दृश्यते। अनेनैव कारणेन रामानन्दप्रवर्तिते 'रामावत्' सम्प्र-दायेऽपि योगभक्त्योः समन्वयो दृश्यते।[2] एतैः प्रमाणैः श्रीस्वामिरामानन्दस्य रामभक्तिप्रधानसम्प्रदायप्रवर्तकत्वं योगशास्त्रानुसारित्वञ्च सिद्ध्यति, न तु विशिष्टाद्वैतवादित्वमिति।

श्रीस्वामिरामानन्दश्च बाल्येऽध्ययनार्थं बन्धुभिः काश्यां प्रेषितः, शंकरा-द्वैतमतेन प्रभावित[3] एव स्वशिक्षां समार्पितवान्। अतोऽन्ते राघवानन्दस्वामिनो

---

(१) उ० भा० पृ० २०६। (२) उ० भा० पृ० २२६। योग प्रवाह पृ० ३—८।
(३) कबीर की विचारधारा पृ० ११३। योग प्रवाह पृ० १—२२।
उ० भा० पृ० २२५।

विशिष्टाद्वैतिनः शिष्यत्वेऽपि प्राक्तनसंस्कारवशात् पुनरपि—अद्वैती एव बभूव। अत एव तस्य शिष्यः श्रीकबीरोऽपि अद्वैतमार्गमेव अनुसृतवान्। अन्ये तु श्रीस्वामि-रामानन्दस्य शिष्याः 'सेन नाई-पीपाजी-रमादास-(रविदास)-धन्ना-पद्मावती-प्रभृतयो भक्तिमार्गमेव मन्दाधिकारिणः तदुपदेशेन अनुसृतवन्तः'[1] इति। सम्प्र-दायसंगृहीत 'शब्दामृतसिन्धु' ग्रन्थेनापि श्रीकबीरस्य रामानन्दशिष्यत्वं तदुपदेशानुसारेण अद्वैतवादित्वञ्च प्रतीयते। तद्यथा—

लखै कोई बिरला पद निर्वाण।
कर्म काट जब भरम नशाना, सतगुरु चरणकमल धर ध्यान।
बिनु रसना के अन्तर ध्याना, ता बिच दरशै पुरुष पुरान।
तीन लोक में काल समाना, चौथे लोक में नाम निशान।
रामानन्द गुरु कीन्ह बखाना, दास कबीर के निर्मल ज्ञान[2]।

कित जाइये घर लाग्यो रंग। चित न चले भयउ पंगु।
एक दिवस मन उठि उमंग। घसि चोवा चन्दन सुगन्ध।
पूजन चलि ब्रह्म की ठाईं। 'ब्रह्म' बतायो गुरु मनहिं मांहि।
जहं जाईये तहं जल पाषाण। तूं पूरि रह्यो है सब समान।
वेद पुरान सब देखे जोई। वहां जाइये जहं तू न होय।
सतगुरु मैं बलिहारी तोर। सकल विकट भ्रम काटे मोर।
रामानन्द स्वामी रमत ब्रह्म। गुरु शब्द काटै कोटि कर्म[3]॥

आपन आश किजै बहु तेरा.........
रामानन्द राम रस माते कहैं कबीर हम कहि कहि थाके।[4]

अन्यत्र च—

प्रचारदक्षो भुवि रामनाम्नो रामो यदाऽऽनन्दयुतदाख्यः।
स्वामी सदा रामरतः समन्तान्नमामि मूर्ध्ना तमनन्तकीर्तिम्॥५॥
तदीय भक्त्या नितरां हि तुष्टः, ईशः स्वयं वै जगदुद्दिधीर्षुः।
तच्छिष्यभावाद्धि जगन्नमस्यो व्यक्तोऽभवच्छ्रीलकबीरसंज्ञः॥६॥

(१) उ० भा० पृ० २२६। (२) शब्दामृतसिन्धु पृ० १०२ श० २६।
(३) श०मृ० सि० पृ० ७६ श० १७। (४) बीजक शब्द ६८।

## (१७) सम्प्रदायसम्मतश्रीकबीरस्य शिष्यपरम्परा

(१) श्रीसद्गुरुकबीरस्य दीक्षितशिष्याणां संख्याविषये मतवैभिन्न्यं वर्तते। तत्र त्रयः शिष्या इति श्रीनाभादासस्य[२] मतम्। ते च तत्त्वाजीवा पद्मनाभस्येति।

(२) चत्वारः शिष्या इति द्वितीयः पक्षः श्रीकबीरसम्प्रदाये जनश्रुत्या प्रचालितः, इमे च–जागु-भागु-सुरतगोपाल-धर्मदासश्चेति। अत्र नास्ति किमपि प्रमाणम्। अस्मिन् विषये वक्ष्यामि[३]।

(३) आधुनिकैः समालोचकैरन्धानुकारिभिः मतभेदेन शिष्याणां षट्, नव च संख्या स्वीक्रियते। तत्र षट्शिष्याः–तत्त्वा–जीवा-जागु-भागु-सुरतगोपाल धर्मदासाख्याः[४]।

(४) नव शिष्याः—कमाल-कामली-पद्मनाभ-रामकृपालो-नीर-क्षीर-ग्यानी-ध्रुवदास-हरदासाख्याः[५]। एतेषां शिष्याणां न कमपि प्रमाणमुपलभ्यते। न कस्यपि सम्प्रदायख्यातिः कमालः कमाली च भिन्न-भिन्न कबीरस्य शिष्य-एतत्पूर्वं विवेचितम्।

श्रीकबीरस्य शिष्येषु प्रागुक्तेषु एकोऽपि वैराग्यबाहुल्यात् न मठं चक्रे। अन्येषां मते तु मठाः इमे साक्षात् शिष्यपरम्परया वा प्रवृत्ताः साम्प्रतं दृश्यन्ते। ते मठा इमे—

---

(१) श्रीगुरुणालिका स्तोत्रम्, पृ० ५ श्लो० ५–६।

(२) भक्तमाल छप्पय छ० ६८। तत्रैव प्रियादास टीका कवित्त ३१२।

(३) जनश्रुतिः। (४) कबीर और कबीरपंथ पृ० ५।

(५) क० प्र० (पा भूमिका पृ० ४६।

ज्यूं नारायणं नव निरमये त्यूं श्रीकबीर किया सिप नव।
प्रथमहिं दास कमाल, द्वितियहै दास कमाली। अ० पृ०
पद्मनाम पुनि तृतीय, चतुरथम् रामकृपालो।
पन्चम षठम् नीर, षीर, सप्तम पुनि ग्यानो।
अष्टम् है ध्रुवदास नवम हरदास प्रमाणी।
नव का नव, नव तिरन कौं जन रायो कियो पयोध भव।
ज्यूं नारायन नव निरमयो त्यूं कबीर किये सिप नव।
—भक्तमाल टीका रोपोदास कृत पृ० ३५३।

(१) फतुहा श्रीकबीर मठः[1],          (२) धनौती श्रीकबीरमठः[2]
(३) काशी श्रीकबीरचौरा मठः[3]  (४) बिदूपुर श्रीकबीरमठः (मुजफ्फरपुर)
(५) शिवपुर श्रीकबीरमठः[5]          (६) धर्मदासीयशाखा[6] श्रीकबीरमठाः,
(७) श्रीकबीरमठः, (हनुमाननिवास) अयोध्या[7],
(८) बडहैया श्रीकबीरमठः[8] ।

एतेषां मध्ये सर्वे न साक्षात् श्रीकबीरस्य शिष्यपरम्परायां दृश्यन्ते । भिन्न भिन्न भिन्नसम्प्रदायादागताः श्रीकबीरं गुरुरूपेण स्वीकुर्वन्ति ।

एतेषामन्यानां मठानामपि प्रसिद्धाः शिष्यपरम्पराः इमाः यासां तालिका अधः प्रदर्श्यन्ते । यथोपलभ्यते प्राचीनार्वाचीनग्रन्थेषु । यथा—

श्रीसद्गुरुकबीरसम्बन्धिनी प्रत्येकस्मिन् श्रीकबीरमठान्तर्गतानि मठाधीशानां यानि नामानि सन्ति समेषामपि तेषामन्ते 'दास' शब्दः सुशोभते । किन्त्वयं शब्दोऽन्यसम्प्रदायेभ्य आगतासु शाखासु नोपलभ्यते ।

प्राचीनग्रन्थे श्रीसद्गुरुकबीरस्य शिष्येषु तत्त्वाजीवा-पद्मनाभादतिरिक्त कोऽपि नाम नोपलभ्यते । तेषां मध्ये श्रीतत्त्वाकृत 'वैराग्यप्रकाशे'[10] पूर्णवैराग्यस्य प्रतिपादकोक्तिः 'ग्रन्थः' लघुरूपेणोलभ्यते । न तु अन्यशिष्याणां ग्रन्थ. कबीर सिद्धान्तवत् प्राप्यते ।

---

(१) उत्तर भारत की सन्त परम्परा पृ०२९६ ।
(२- ) तत्रैव पृ० ३०५ तक
(८) कबीर और कबीर पंथ पृ० ११३
(९. कबीर एण्ड कबीर पन्थ पृ० ११३--११७ ।
१०. तत्त्वा गुरु शरणा गहो तजि के नाता नेह ।
अन्तकाल नहिं आपना झूठा नाता नेह ॥ १ ॥
तेरा हिन जो देह सो नख सिख नाही खण्ड ।
जीव अमर तत्त्वा कहै व्यापक और अखण्ड ॥४१॥
दुःख से ले कर नर तन पायो ।
तत्त्वाहरि गुरु बिना गमायो ॥
दास कबीर गु. पूरा पाये ।
चौरासी यम दण्ड छुड़ाये ॥ वैराग्य प्रकाश पृ० १

श्रीसद्गुरुकबीरसिद्धान्तवच्छ्रीतत्त्वाजिव्यपरम्परायां त्रयोदशशिष्याः विरक्ताः आसन् । अत एव अस्मिन् ग्रन्थे 'श्रीतत्त्वा' गुरुपरम्परां संप्रथमं प्रस्तव । यथा – 'फतुहा' श्रीकबीरमठस्य गुरुप्रणाली[1]—

अत्रवल्लोके ख्यातः श्रीमत्सम्पदाशिरोमणिः सिद्धः ।
तस्य सुशिष्यः श्रीमद्विष्वक्सेनो मुनिः सतांगण्यः ॥ १ ॥
तस्यापि शिष्यो मुनिवर्यनामा शिष्योऽस्य विज्ञः सुपुनीक एषः ।
मुनिस्तथाऽस्यापि बभूव शिष्यो महान् मुनिः श्रीसटकोपसंज्ञः ॥ २ ॥
श्रीयोपदेयो मुनिरस्य शिष्यस्तस्यापि शिष्यो मुनिमङ्गलोऽभूत् ।
श्रीनाथ एषोऽस्य मुनिर्मुनिश्च श्रीपुण्डरीकाक्षय एष तस्य ॥ ३ ॥
रामेश्वरस्तस्यमुनिश्च शिष्यः पराङ्कुशोऽस्यापि मुनिस्तथास्य ।
आचार्यकान्तो यमुनेति नामा रामानुजस्तस्य बभूव शिष्यः ॥ ४ ॥
देवाचार्यस्तस्य हरियानन्द इति च प्रतीतोऽस्य ।
तस्य राघवानन्दो रामानन्दो बभूव तच्छिष्यः ॥ ५ ॥

कबीरोऽभवदस्यापि रामानन्दस्य श्रीमतः ।
शिष्यः कुशाग्रबुद्धिर्यो यथाध्यज्ञानमुक्तवान् ॥ ६ ॥

तत्त्वाजीवा इत्येतस्य लोके ख्यातः शिष्यो जातः ।
एतास्यापि स्वेच्छाचारी तत्त्वा जीवा इत्येषोऽभूत् ॥ ७ ॥

जीवोत्तमोऽभूत्पुरुषोत्तमोऽस्य दासान्तनामऽभवदस्य शिष्यः ।
कान्ता इति ख्यात इतः परेस् दासोपनामान इति प्रसिद्धा ॥ ८ ॥

दासः सुखानन्द इति प्रसिद्धः शिष्योऽभवतस्य महानुभावः ।
सम्बोधदासोऽभवदस्य देवादासोऽस्य शिष्योऽभवदप्रतेजाः ॥ ९ ॥

एतस्य शिष्यः किलविश्वरूपदासोऽभद्विश्वविशालकीर्त्तिः ।
तथास्य शिष्योऽपि यशः स्वरूपदासो भवद्वित्तयशामहात्मा ॥१०॥

चिन्मोयदासोऽस्य बभूव सम्यग् ज्ञानाखयदासोऽपि तथाऽस्य शिष्यः ।
स्वरूपदासोऽस्य यथार्थनाम्नस्तस्या भवन्निर्मलदासनामा ॥११॥

1. कबीर परिचय पृ० १३१–१३४ तक ।

अस्याभवत्केवलदास एव गणेशदासोऽस्य भुवि प्रसिद्धः।
तुल्याऽभवद् यस्य सुवित्तवृत्तोरत्नेषु लोष्टेषु च साधुबुद्धेः ॥१२॥
अथ सुजनसुखार्थं गूढभावं कबीरपरिचयमिति दासश्रीगणेशस्य शिष्यः।
अकृतगुरुदयालुदास एतं प्रबन्धं गुरुकमलपदालिज्ञानसार प्रकाशम् ॥१३॥
इह किल फतुहाया दक्षिणे कुलदेशे सुरसरित इतीयं सत्पुरी भूरिभूतिः।
अधिगुरुकृतधामतत्कृपातोऽपि सोऽयं तिलकमिमकार्षील्लोकभाषा निबद्धम् ॥

किन्त्वयं गुरुपरम्परा श्रीरामानन्दसम्प्रदाये[1] न स्वीकुर्वन्ति तत्र तु गुरुपरम्परा निम्नप्रकारेणोपलभ्यते—

| | | | | | |
|---|---|---|---|---|---|
| (१) | श्री पुरुषोत्तमाचार्य बोधायनः | | (८) | श्री ज० गु० श्रुतानन्दाचार्यः | |
| (२) | श्री ज० गु० गंगाधराचार्य यतीसम्राट् | | (९) | ,, | चिदानन्दाचार्यः |
| (३) | ,, | सदानन्दाचार्यः | (१०) | ,, | पूर्णानन्दाचार्यः |
| (४) | ,, | रामेश्वरानन्दाचार्यः | (११) | ,, | श्रियानन्दाचार्यः |
| (५) | ,, | द्वारानन्दाचार्यः | (१२) | ,, | हर्यानन्दाचार्यः |
| (६) | ,, | देवानन्दाचार्यः | (१३) | ,, | राघवानन्दाचार्यः |
| (७) | ,, | श्यामानन्दाचार्यः | (१४) | ,, | रामानन्दाचार्यः |

प्रस्तानभयानन्दभाष्यकार[1]
श्री म० स्वामी त्रिभुवनदासजी शास्त्री

फतुहा श्रीकबीरमठविषये श्रीकेदारनाथद्विवेदेनोक्ताः -अस्यां शाखायां स्त्रियः पुरुषाश्च द्वावपि दीक्षिता भवितुमर्हन्ति। गृहिणो विरागयुक्ताश्च द्विविधाः सदस्या भवन्ति। गृहिणं सदस्यं 'भगत' इति विरागयुक्तञ्च 'साधुः' इति वक्तुं शक्यते। काऽपि स्त्री विरक्ता भवितुन्नार्हति। किं बहुना स्त्रीणां मठेन्तरङ्गप्रकोष्ठेषु प्रवेशोऽपि निषिद्धः।

विरागयुक्ताः साधवः मृत्युमनन्तरं गंगायां प्रवाहिता भवन्ति न तु अग्नौ तेषां दाहसंस्कारो भवति। अपितु भूमौ तेषां निखातो स्थलसमाधि भवति[2]।

---

(१) श्रीरामानन्द सम्प्रदाय का इतिहास—पूर्वार्धं, पृ० ३५७। (प्रथमसं०)
(२) 'कबीर और कबीरपन्थ' पृ०१८३

## फतुहा—कबीरमठशिष्यपरम्परा[1]

१—जगद्गुरुः श्रीस्वामीरामानन्दमहोदयः २—श्रीसद्गुरु कबीरः
३—श्रीतत्वाजीवामहोदयः ४—श्रीकुन्वादासमहोदयः
५—श्रीसुखानन्ददासः ६—श्रीसम्बोधदासः
७—श्रीदेवादासः ८—श्रीविश्वरूपदासः
९—श्रीविक्रोधदासः १२—श्रीकोमलदासः
१०—श्रीज्ञानमुकुन्ददासः ११—श्रीनिर्मलदासः
१३—श्रीगणेशदासः १४—श्रीगुरुदयालदासः
१५—श्रीघनश्यामदासः १६—श्रीभरतदासः
१७—श्रीमोहनदासः १८—श्रीरघुवरदासः
१९—श्रीदयालदासः २०—श्रीज्ञानीदासः
२१—श्रीकेशवदासः २२—श्रीहरिनन्दनदासः
२३—श्रीगरीबानन्ददासः २४—श्रीविद्यानन्ददासः वर्तमानः

## श्रीभगवानगोस्वामी धनौती श्रीकबीरमठगुरुपरम्परा[2]

१—जगद्गुरुः श्रीस्वामिरामानन्दमहोदयः १२—श्री भीपमगोस्वामी
२—श्री सद्गुरुकबीरसाहबः १३— ,, भूपालमणिगोस्वामी
३— ,, भगवान् गोस्वामी[3] १४— ,, परमेश्वर गोस्वामी
४— ,, घनश्याम गोस्वामी १५— ,, गुणगोलगोस्वामी
५— ,, उदाहरणगोस्वामी १६— ,, शेरमनगोस्वामी
६— ,, दवनगोस्वामी १७— ,, जयमनगोस्वामी
७— ,, गुणाकरगोस्वामी १८— ,, हरिनामगोस्वामी
८— ,, गनेशगोस्वामी १९— ,, स्वरूपगोस्वामी
९— ,, कोकिलगोस्वामी २०— ,, रामरूपगोस्वामी
१०— ,, बनवारीगोस्वामी २१— ,, रघुनन्दनगोस्वामी
११— ,, नयनगोस्वामी २२— ,, रागधारीगोस्वामी

(१) 'बीजक' मूल फ० पाठ ( १९६६ ई० )।
(२) प्राप्तिः—धनौतीपाठ बीजक के गुरुप्रणाली से
(३) जो प्रथम निमानन्द के शिष्य थे

श्रीसुरतगोपालदासः सन् १५५९ ई० वर्षे, अर्थात् वि० सं० १६१६ वर्षे ब्रह्मलीनः सञ्जातः। अयञ्च प्रथमः काश्यां श्रीकबीरमठस्य संस्थापकः सम्प्रदाय-प्रवर्तकश्चासीत्, इति सम्भाव्यन इति चेत् ? यत् तेषां पश्चाद्वर्तिनौ द्वौ मठाधीशौ वाराणस्यां स्वीयं कार्यालयं स्थापयितुं न शक्नुतः। मठाधीशस्य श्रीसुखदासस्य समये 'नीरूटीला' नामकः क्षेत्र गृहीतः। राजबलवन्तसिंहस्य पुत्रस्योत्तरा-धिकारी चेतसिंहश्च श्रीकबीरमठस्य संरक्षकाः आसन्। श्रीचेतसिंह १७७० ई० वर्षे दिवङ्गतः। तस्यैव जीवनकाले काशीस्थ श्रीकबीरचौरामठस्य बाह्यपरिधिः निर्मिता। श्रूयते यत् सप्तमठाधीशानां समाधिः नीरूटीलाक्षेत्रे कृता, परन्तु तेषां मध्ये त्रयाणामेव समाधि अद्यत्वे उल्लेखेषु मिलति—इति डा० वेस्टकाट-महोदयेन स्वग्रन्थे उट्टङ्कितम्[1]। तस्यमतानुसारि श्रीकबीरामठाधीशानां नामावली स्थानानि चाधोलिखितानि उपलभ्यन्ते। यथा—

साक्षात् शिष्यपरम्परा तालिका

## (क) कबीरचौरा मठशिष्य परम्परा

| नाम | समाधिस्थान | कार्यकाल | ई० सन |
|---|---|---|---|
| १-श्री श्यामदासः | मगहर | २८ | १४९१ वि०सं० १५४८ |
| २- " लालदासः | " | २२ | १५१९ |
| ३- " हरिदासः | " | १८ | १५४१ |
| ४- " सुरतगोपालदासः[2] | जगन्नाथपुरी | ३५ | १५५९ वि०सं० १६१६ |
| ५- " ज्ञानदासः | " | २५ | १५९४ |

| नाम | समाधिस्थान | कार्यकाल | ई० सन् |
|---|---|---|---|
| ६-श्री शीतलदासः | गया | २४ | १६११ |
| ७- " सुखदासः | नीरूटीला (काशी) | २० | १६४३ |
| ८- " हुलासदासः | " | २६ | १६६३ |
| ९- " माधोदासः | " | २० | १६८९ |
| १०- " कोकिलदासः | " | २१ | १७०९ |
| ११- " रामदासः | " | २१ | १७३० |
| १२- " महादासः | " | २२ | १७५९ |

(१) कबीर और कबीरपन्थ-पृ० १६७ कबीर एण्ड दी कबीरपंथ, पृ० ११३-११४

(२) तत्र दिनांक जुलाई १९७४ ई० वर्षे गत्वा समाधि दर्शिता तस्यामुपरि किमपि नैव लिखितं वर्तते। कस्यापि तेषां समाधि नैव वर्तते।

| | | | |
|---|---|---|---|
| १३–श्रीहरिदासः | कबीरचौरा मठ (काशी) | २७ | १८०१ |
| १४– ,, पूरणदासः | ,, | १८ | १८४४ |
| १५– ,, निर्मलदासः | ,, | २२ | १८६२ |
| १६– ,, रंधीरदासः (रंगीदास) | ,, | १५ | १८८४ |
| १७– ,, गुरुप्रसाददासः[1] | ,, | ८ | १८९९ |

### आधुनिकग्रन्थे–श्रीकबीरमठस्य काशीकबीरचौरागुरुप्रणाली

(१) सद्गुरुश्रीकबीर साहबः
(२) श्रीसुरतगोपालदासः
(३) ,, ज्ञानदासः
(४) ,, श्यामदासः
(५) ,, लालदासः
(६) ,, हरिदासः
(७) ,, शीतलदासः
(८) ,, सुखदासः
(९) ,, हुलासदासः
(१०) ,, माधवदासः
(११) ,, कोकिलदासः
(१२) श्रीरामदासः
(१३) ,, महादासः
(१४) ,, हरिदासः
(१५) ,, शरणदासः
(१६) ,, पूरणदासः
(१७) ,, निर्मलदासः
(१८) ,, रंगीदासः
(१९) ,, गुरुप्रसाददासः
(२०) ,, प्रेमदासः
(२१) ,, रामविलासदासः[2]

### श्रीकबीरमठविद्दुपुर गुरुप्रणाली

श्रीसद्गुरुकबीर साहबः
,, जागूदासः
,, मथुरादासः
,, गवूँदास

### जागूसाहबस्य शिष्यपरम्परा शिवपुरशाखा

श्री जागूदासः
,, मथुरादासः
,, गवूँदासः
,, बलभदास

(१) कबीर एण्ड दी कबीर पंथ पृ० ११४ नोट–( यह तालिका बनारस में ही वहीं के एक वैरागी साधु द्वारा प्राप्त हुई है )
(२) कबीर और कबीरपंथ––पृ० १६३। "गुरुमाहात्म्य" के आधार पर

| | |
|---|---|
| श्रीवल्लभदासः | श्रीप्रेमदासः |
| " प्रेमदासः | " धरणीदासः |
| " धरनीदासः | " हरिदासः |
| " हरिदासः | " हाथीदासः |
| " हाथीदासः | " प्रीतमदासः |
| " प्रीतमदासः | " प्रेमदासः |
| " प्रेमदासः | " सन्तोषदासः |
| " सन्तोषदासः | " मनसा ासः |
| " मनसादासः | " गरीबदासः |
| " गरीबदासः | " सुखरामदासः |
| " सुखरामदासः | " झूमकदासः |
| " झूमकदासः | " अमृतदासः |
| " अमृतदासः | " रामलखनदासः |
| " रामलखनदासः[1] | " सन्तप्रसाददासः |
| | " परमेश्वरदासः |

## "श्रीहनुमाननिवास"[2] अयोध्या श्रीरामकबीरशिष्य परम्परा—

(१) श्री स्वामी रामानन्दाचार्य :
(२) ,, रामकबीराचार्य :
(३) ,, कपालीरामदास :
(४) ,, मंगलदास :
(५) ,, भगवानदास :

---

१. कबीर और कबीर पंथ–पृ० १६८।
२. मौखिक रूप से अयोध्या हनुमत निवास से मिला है।
लक्ष्मणकिला से सम्बन्ध स्थापित कर हनुमत निवास की स्थापना की, सियारघुनाथशरणजी हनुमत सदन की स्थापना की, हरिरामशरण जी शास्त्री मं० वर्तमान हैं। बाघी सिरसिया पुपरी के पास जहाँ आदि स्थान है। मण्डल सीतामढ़ी, बिहार प्रान्त है। )

(६) श्री हरिजनदास :
(७) ,, रघुनाथदास :
(८) ,, तुलसीदास :
(९) ,, सरजूदास :
(१०) ,, गोमतीदास :
(११) ,, रघुनन्दनशरण :[1]
(१२) ,, हरिरामशरण : वर्तमानः

अन्य नाम अप्राप्तम् ।

विद्वान्सः छत्तीसगढ़ीशाखायाः (धर्मदासीयशाखायाः) प्रत्येकमाचार्यस्य मठाधीशता कालं २५ वर्षं स्वीकृत्य धर्मदासस्य स्थितिकालं सप्तदशशताब्द्याः द्वितीये चरणे मन्यते ।[1] अतः डा० एफ० ई० की महोदयानुसारं तथ्यद्वयं सम्भाव्यते--

(१) छत्तीसगढ़ीशाखाया गुरुपरम्परायाः तालिकायां कतिचिद् नामानि नोल्लिखितानि ।

(२) धर्मदासः श्रीकबीरस्य समकालिकः नासीत् । तेषां द्वितीया सम्भावनैव समीचीनतरा भाति—इति सत्यम्[2] । अपरश्च पक्षः समीचीन इत्यहं स्वीकरोमि । तद्यथा--

धर्मदासीय शिष्यपरम्परा[3]

| नाम | सम्भावितगद्दीकालः | समाधिकालः स्थानञ्च |
|---|---|---|
| १—श्रीधर्मदासः | ० | जगन्नाथपुरी |
| २—,, चूरामणिनाम : | १६९४ ई० तक | कुदरमाल १६७५ वि० सं० |
| ३—,, सुदर्शननाम : | १७१४ | रतनपुर (बिलासपुर) १७०० |
| ४—,, कुलपतिनाम : | १७३४ | कुदरमाल १७२५ |
| ५—,, प्रमोदनाम : | १७५४ | मण्डला १७५० |

(१) कबीर एण्ड हिज फालोअर्स—पृ० ९९ ।
(२) कबीर और कबीर पन्थ—पृ० १६२; १६३ ।
(३) कीबर एण्ड दी कबीर पन्थ पृ० ११६ ।

| | | |
|---|---|---|
| ६–श्री केवलनामः | १७७४ | धमंद (दुर्ग जिला) १७७९ |
| ७–,, अमोलनामः | १७९४ | मण्डला १७९४ |
| ८–,, सुरतस्नेहीनामः | १८१४ | सिंगेरी (छिन्दवाड़ा) १८२५ |
| ९–,, हकनामः | १८३४ | कवर्धा १८५४ |
| १०–श्री पाकनामः | १८५४ | कवर्धा १८९० वि० सं० |
| ११– ,, प्रकटनामः | १८७४ | ,, १९२० |
| १२– ,, धीरजनामः | १८९४ | ,, १९५१ |
| १३– ,, उग्रनामः | १८९७ | दामाखेड़ा १९५४ |
| १४– ,, दयानामः | ० | ,, १९७१ |

धर्मदासीयशाखायाः ग्रन्थे धर्मदासस्य जीवनसमयश्च सम्प्रदाये प्रसिद्धौ। यथा—

श्रीधर्मदासस्य जन्मः विक्रमसम्वत् १४५२ वर्षे संजातः[१]। विवाहः वि० सं० १५०० वर्षे बभूव। प्रथमपुत्रश्रीनारायणदासस्य जन्मः १५०२ वर्षे बभूव। सद्गुरुकबीरेण सह प्रथमसंमेलनं वि० सं० १५१९ वर्षेऽभवत् ततः १५२० वि० वर्षे उपदेशग्रहणं कृतवान्। ततः चूरामणिनामपुत्रस्य जन्म १५३८ वर्षे बभूव। प्रचारकालः १५४० वि० वर्षे प्रारब्धः। सत्यलोकवासी वि० १५७० वर्षे बभूव इति।

उपर्युक्त मठाधीशेभ्योऽतिरिक्तानां निम्नमठाधीशानां नामानि दृश्यन्ते—

| | |
|---|---|
| १–श्री सुकृतनामः | ५–श्री पारसनामः |
| २– ,, अग्रमणिनामः | ६– ,, जाग्रतनामः |
| ३– ,, रसनामः | ७– ,, भृंगमणिनामः |
| ४– ,, गंगमणिनामः | ८– ,, गृंद्धमणिनामः(वर्तमान महन्त) |

अन्येऽपि कबीरमतप्रभाविताः सम्प्रदायप्रवर्तकाः[२] —

| | |
|---|---|
| १—श्रीवारकरीसम्प्रदायः | २—श्रीगुरुनानकदेवः |
| ३—'' गरीबदासः | ४—श्रीदादूदासः |

(१) कबीर और कबीर पन्थ पृ० १७१–१७३। 'वंश परिचय' के आधार पर है
(२) कबीर एण्ड हिस फालोअर्स पृ० १६५।

५—श्रीपलटूदासः
६—श्रीजीवनदासः
७—श्रीराधास्वामी
८—श्रीशिवनारायणः
९—श्रीगोविन्दसाहबः
१०—श्रीमलूकदासः
११—श्रीभीखादासः
१२—श्रीदरियासाहबः
१३—श्रीयारीसाहबः
१४—श्रीबुलासाहबः
१५—श्रीजगजीवनसाहबः
१६—श्रीतुलसीसाहबः

एतेषां विशेषवृत्तानि तु अग्रे निर्देक्ष्यन्ते। अत्र तु केवलं सिद्धान्तस्वीकृतिः तत्तत् स्थानाद् ज्ञातव्यम्।

## (१८) श्रीसद्गुरुकबीरस्याद्वैतप्रवणत्वे किं मूलमित्यस्य विवेचनम्

यद्यपि श्रीकबीरः अविद्वत्कुलपालितत्वात् साधनाभावाद् विधिवत् संस्कृतस्य शिक्षां न लेभे। तथापि पूर्वजन्मवासनातः श्रीस्वामिरामानन्दगुरोः सकाशादद्वैतशिक्षामेव उत्तमाधिकारित्वात् अवाप। श्रीरामानन्दश्च विशिष्टाद्वैतवादनिष्ठ श्रीराघवानन्दशिष्योऽपि प्रागधीतया अद्वैतविद्यया अद्वैतनिष्ठो भक्तिनिष्ठो योगनिष्ठश्च बभूव इति प्राक्प्रतिपादितम्। एतदेव श्रीसद्गुरुकबीरस्य अद्वैतनिष्ठायां मूलम्। दृश्यन्ते हि लोके पूर्ववासनातः कुलपरम्परां गुरुपरम्पराञ्च अतिक्रम्य अन्यान्यमतनिष्ठाः पुरुषाः साम्प्रतमपि।

अतएव उक्तं गीतायाम्—

'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥[१]'

किञ्च श्रीकबीरः श्रीरामानन्दाद् गुरोः योगशिक्षामधिगम्य योगेनाद्वितीयात्मानं[२] साक्षात्कृतवान्। नानाविधानाञ्च साधूनां यवनानामयवनानाञ्च[३] संगत्या विचारेण अद्वैतनिष्ठामवाप।

---

(१) गीता—अ० ७।१९।
(२) 'कहहिं' कबीर गुरु सिकलो दर्पण। हरदम करहु पुकारा॥—बी०शब्द ३७
रामानन्द राम रसमाते। बी० शब्द ६८।
(३) 'दर की बात कहो दरवेशा। बादशाह है कौने वेषा॥'—बी०रमैनी४९।

## (१९) तत्रवैदिकानामवैदिकनाञ्च प्रभावाप्रभाव–विवेचनम्

### (क) वैदिकानां प्रभाव विवेचनम्—

श्रीसद्गुरुकबीरस्य मतं वैष्णवमतप्रभावाक्रान्तमासीत्, इति तस्य रचनातः प्रतीयते। तद्यथा—

१—श्रीकबीररचनासु भगवतो विविधानि वैष्णवनामानि समुपलभ्यन्ते।[१]

२—तस्य रचनासु ब्रह्मणो निर्गुणसगुणस्वरूपद्वयेऽपि तस्य श्रद्धासीदिति दृश्यते।

३—तस्य रचनासु भक्ति प्रपत्त्युपासना: दृश्यन्ते।

४—तस्य रचनासु योगाङ्गानि च प्रभेदसहितानि वर्णितानि इति दृश्यते।

५—तस्य रचनासु माया तत्त्वस्य विशदं विवरणं तत्र तत्र दर्शितम्॥[२]

प्रतीकोपासना—

---

(१) 'वैष्णवमत में भगवान् के सहस्र नाम बतलाए गए। कबीर ने इनमें से राम, हरी, गोविन्द, मुकुन्द मुरारी, विष्णु, मधुसूदन आदि अनेक नामों से अपने ब्रह्म को अभिहित किया है। राम को उन्होंने सब नामों से अधिक महत्त्व दिया है। सम्भवत: इसका कारण रामानन्द का शिष्यत्व था।'

'निर्गुण के अतिरिक्त उनसे भगवान् के सगुण वर्णन भी मिलते हैं।'

'भक्ति उपासना और प्रपत्ति में बहुत अन्तर नहीं है।……प्रपत्ति का अर्थ है शरणागति कबीर में शरणागति भावना के अन्तर्गत इनका वर्णन किया है।'

'वैष्णवमत में अष्टाङ्गयोग का भी विधान है। अष्टांगों में यम और नियम को विशेष महत्त्व दिया गया है।……कबीर ने उन्हें पूर्णरूपेण अपनाया है।'—कबीर की विचार धारा पृ० १६३।

(२) 'भागवतपुराण में एक-आध स्थलों पर माया का अच्छा निरूपण किया गया है। बहुत सम्भव है कि कबीर को माया का वर्णन करने में भागवतपुराण से कुछ प्रेरणा मिली हो।'—कबीर की विचारधारा पृ० १६३।

श्रीसद्गुरुकबीरेण अरूपः परमात्मा जगति सर्वत्र दृष्टः। एषा विचारधारा 'पुरुष एवेदं यद्भूतं यच्च भाव्यम्'[१] इत्युपनिषत् सिद्धान्तेन प्रभाविता वर्त्तते। यतो हि मन्त्रेऽस्मिन् पुरुषस्यैवजगति विभिन्नरूपेण विवर्तत्वं प्रतिपादितं वर्तते। अरूपस्य परमात्मनः विभिन्नेषु प्रतीकेषु घटपट्यादिरूपेषु उपासना नामतद्रूपत्वदर्शनमित्येव प्रतीकोपासना। यथा—

'खालिक बिनु खाली नहीं, सुई धरन को ठौर।
आगे पीछे राम है, राम बिना नही और[२] ॥'

ब्रह्मण अतिरिक्तस्य वस्तुनो निषेधात् तस्य सर्वव्यापकत्वाङ्गीकाराच्च सर्ववस्तुषु तस्य सत्तानुभूयते सद्गुरुणा।

'पार ब्रह्म सुभर भरा, जाका वार न पार' इत्यादि।

'श्रवणं कीर्तनं विष्णोः स्मरणंपादसेवनम्।
अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम्[३] ॥'

इति श्रीमद्भागवतोक्त लक्षणेन भक्त्या नवविधाः श्रूयन्ते, ताश्च विष्णोः श्रवणम् (१), कीर्तनम्, (२), स्मरणम् (३), पादसेवनम् (४), अर्चनम् (५), वंदनम् (६), दास्यम् (७), सख्यम् (८), आत्मनिवेदनञ्चेत्याख्याः (९)। यद्यपि श्रीकबीरः निर्गुणवादितया सगुणरूपस्य भगवतो विग्रहार्चनम् पादसेवनं च मूर्तिपूजारूपेण प्रसिद्धं न स्वीकरोति तथापि गुर्वीश्वरयोरैक्यात् गुरुपूजनमेव ईश्वरपूजनम्, इति मनुते। ईश्वरस्य सर्वगुरुत्वं 'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्'[४] इति योगसूत्रे प्रसिद्धम्। तथा च गुर्वीश्वरयोरैक्यं श्रीकबीरसिद्धान्ते प्रसिद्धं वर्तते। अतः गुरुपूजनमपि ईश्वरपूजनमेव। एवं भक्त्या नवविधात्वंसूपपद्यते। क्रमेण च श्रीसद्गुरुकबीरपद्ये तासां प्रतिपादनमग्रेक्रियते।

तत्र श्रीसद्गुरुकबीर रचनासु

श्रवणम्— 'मैं जो सुनि हरि है घट मांही[५]'

कीर्तनम्— 'नाम भजा सोइ जीता जग में[६]'

---

(१) श्वेता० उ० ३।१५। (२) साखी ग्र० पृ० ८५६ साखी ४२।
(३) श्रीमद्भागवत् ७।५।२३। (४) योगसूत्र पाद १।२६।
(५) शब्दामृत सिन्धु पृ० ७४। (६) तत्रैव पृ० ७६ भ० १।

'भजन कर जग में जीवन है सार'[1]
स्मरणम्— 'रे मन राम सुमिर पछतायेगा'[2]
'भजन कर निशिदिन टुटे न तार'[3]
पादसेवनम्— 'याद करो दिन जातयाद में,
सतगुरु चरण स्नेह विना रे।'[4]
अर्चनम्— 'पूजा गुरु की कीजिये, सब पूजा जिहि मांहि'
वन्दनम्— 'सब धरती कागज करुं, लेखनि सब बनराय।
सात समुंद की मसि करुं गुरू गुण लिखा न जाय'[5] ॥'
दास्यम्— 'दर्शन को तो साधु हैं सुमिरण ब्रह्मज्ञान।
तरने को आधीनता, बूड़न को अभिमान'[6] ॥'
सख्यम्— हरि मरिहैं तौ हमहूँ मरिहैं,
हरि न मरै हम काहे कूँ मरिहैं[7]
आत्मनिवेदनम्—'मैं गुलाम मोहि वेचि गोसाईं'[8]

## व्यक्ताव्यक्तस्वरूपम्

श्रीमद्भागवत विष्णुपुराणे नारदपाञ्चरात्रान्तर्गतायां आनन्दसंहितायामपि भगवतो मूर्तममूर्तञ्च वर्णितं रूपद्वयम्। कबीरेणापि तद्रूपद्वयं बीजकादौ[9] दर्शितम्।

## निराकारस्वरूपम्—

ब्रह्माद्वैतं तु बीजकादौ श्रीकबीरेण औपनिषदं[10] बहुधा दर्शितम्।

(१) श० मू० सि० पृ० ७८ भ० ८। (२) तत्रैव पृ० ७९ भ० ११।
(३) तत्रैव पृ० ७७ भ० ४। (४) तत्रैव पृ० ७९ भ० ९।
(५) साखी ग्रंथ पृ० ३१ साखी ३४। (६) साखी ग्र० पृ० ५२२ सा० १०।
(७) कबीर ग्र० पद ४३। (८) कबीर ग्र० पृ० ९५ पद ११३-११४
(९) कबीर की विचारधारा पृ० १०५।
(१०) 'स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य'
—प्र० उ० ४।१०।

'कहु हो निरञ्जन कौने बाणी[1].......'

**भक्तिमहिमा—**

श्रीकबीरेण पुराणादौ मुक्तिसोपानत्वेन समाश्रिता भक्तिरपि तत्त्वाभिप्रायेणैव समाश्रियता । यथा—

"व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का[2]"

प्रभु तो भक्तिके वश रे भाई[3]'

**पराभक्ति—**

उपनिषत्सुदृष्टा पराभक्तिः गीतादौ[4] च वर्णिता पराभक्तिरपि श्रीकबीरेण कर्तव्यत्वेन दर्शिता बीजकादौ[4] । यथा—

साखी—'डोरी लागी भय गया, मन पाया विश्राम ।
चित्तचहूँटा राम सो, सोई केवल धाम[5] ॥'

**ईश्वरमहिमा—**

योगशास्त्रे न्यायशास्त्रे पुराणादौ च प्रसिद्धस्य ईश्वरस्य महिमा अपि श्रीकबीरेण समाश्रितः उपासनार्थम् । यथा—

'गोविन्द तेरी महिमा अपरम्पार ।
आपहि एक अनेक रूपमों नाम धर्यो संसार ॥
जड़ को चेतन चेतन को जड़ करत न लागे बार[6] ॥' इत्यादि
चातक कहाँ पुकारै दूरी, सो जल जगत रहा भरिपूरी ।
जेहि जल नाद विन्दु का भेदा, षट् कर्म सहित उपानो वेदा[7]
तथा—'द्युभ्वाद्यायतनं स्वशब्दात्[8]'

---

(१) भागवत । (२) बीजक शब्द ९३ तथा मु० उ० २।२।१० ।
(३) श० मृ० सि० पृ० २०४ म० १६ ।
(४) गीता ११।५५, १२।२–३, १५।४–६, बृ० उ० १।४।२ ।
(५) साखी ग्र० पृ० ६१४ सा० २९ । (६) श० मृ० सि० पृ० १९७ म० २ ।
(७) बीजक शब्द-८७ । (८) ब्र० सू० १।३।१ ।

'यस्मिन् द्यौ पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः[1] ।' इत्यादि उपरिनिर्दिष्टैः प्रमाणैः साधु इदं प्रतीयते यत् डा० हजारीप्रसादद्विवेद[2]-डा० रामकुमारवर्म[3]प्रभृतिभिः बीजकादिग्रन्थवर्णितः योगप्रक्रियां मायातत्त्वं चाधारीकृत्य कबीरस्य नाथपथिकयोगभ्रष्टयोगिकुलप्रसूतत्वं नाथपथिकयोग-भ्रष्टयोगिकुलपालित्वं वा आधारीकृत्य नाथपथप्रभावितत्वं तस्य इति तद् वर्णितं भ्रान्तिमूलकम् ।

**प्रतीकोपासना—**

आपुहिं कर्त्ता भया कुलाला, बहुविधि बासन गढ़े कुम्हारा ।।
'अस जोलहा का मर्म न जाना । जिन जग आनि पसारिन तना ।'

उपनिषत्सु वर्णिता प्रतीकोपासना बीजकादौ[4] दृश्यते अतोऽस्ति बीज-कादौ उपनिषदां प्रभावः । यथा—'पुरुष एवेदं यद् भूतं यच्च भाव्यम्……'

दाम्पत्यसम्बन्धकल्पना, पुत्ररूपेण वात्सल्यभावना च पुराणप्रसिद्ध दृश्यते बीजकादौ । यथा—

'हरि मोर पीव मैं राम की बहुरिया[5] ।'
'हरि जननी मैं बालक तेरा[6]' ।
'जन कबीर तेरी सरण आयो, राखि लेहु भगवान'

---

(१) मु० उ० २ २।५ । (२) कबीर-पृ० १३,-५९-६० ।
(३) सन्तकबीर-पृ० २४ । (४) बी० रमैनी २६।२८ ।

स इमांल्लोकानसृजतः । स ईच्छते मे नु लोका लोकपालान्नुसृजा इति'
ए० उ० १।१।३।

'जहं जहं देखो तहं तहं सोई माणिक बेध्यो हीरा ।
परमतत्त्व यह गुरु ते पायो, कहैं उपदेश कबीरा ।।'बी० श० ८ ।

उदाहरण—'को अद्धा वेद क इह प्रवोचत् ।
इयं विसृष्टिर्यत् आबभूव ।।' ऋ० १।११।१२९।६ ।
'द्यावा भूमी जनयन् देव एक आस्ते ।'—ऋ० वे० १०।६।८१ ।
'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।'—ऋ०वे० १०।१२।१९१ ।

(५) बीजक शब्द ५४ । (६) क० ग्र० पद-११९ ।

न्यायादिदर्शनेषु अभिप्रेत ईश्वरः पुराणादौ समाहृता तद् भक्तिरपि च बीजकादौ दृश्यते। ईश्वरसिद्धिरपि श्रीकबीरेण बीजकसाख्यादौ दर्शिता।—

'जिन यह चित्र बनाईया, सांचा सो सुत धारि।
कहहिं कबिर ते जन भले चित्रहिं लेहिं विचारि॥[१]'

औपनिषदे जीवस्वरूपम् ब्रह्मस्वरूपञ्च सप्रमाणं दर्शितं श्रीकबीरेण।
यथा—'ज्यो दर्पणप्रतिबिम्ब देखिये, आप दुनौं मह सोय।
या तत्त्व ही से वा तत्त्व है पुनि याही है सोय[२]॥'

औपनिषदे—अद्वैतमतं श्रीकबीरसम्मतमासीत् इति प्राक् सप्रमाणं प्रतिपादितम्। अद्वैतानुभूतिरपि तस्य आसीत्, इति कबीरग्रन्थावलीभूमिका लेखकै[३]रन्यैरपि स्वीकृतम्।

औपनिषदम् अद्वैतसिद्धान्तः श्रीकबीरसम्मतः इति बीजकटीका भूमिकायां श्रीस्वामीब्रह्मलीनमुनिर्मन्यते[४]।

औपनिषदं ब्रह्मणो व्यापकत्वं शब्दामृतसिन्धौ ज्ञानभक्तिप्रकरणे श्रीकबीरेण दर्शितम्। तद्यथा—

'राम बिना कछु नाहीं[५]........................।'

माण्डूक्ये दर्शिता प्रणवात् सृष्टिः, श्रीकबीरेण दर्शिता। तद्यथा—

'एक अखण्ड ओंकार ते सब जग भया पसार।
कहहिं कबिर सब नारि के अविचल पुरुष भतार[६]।'

सर्वेषु जीवकायेषु भगवान् ज्योतिरूपेण प्रविष्टः इति औपनिषदमतं श्रीकबीरेण दर्शितम्। तद्यथा—

पावकरूपी साईंयां सब घट रहा समाय।
चित्त चमक लागे नहि ताते बुझि-बुझि जाय[७]॥

भगवान् सर्वस्य प्रेरक इति गीतामतं[८] दर्शितं श्रीकबीरेण। यथा—

(१) बीजक रमैनी सा० २६। (२) बीजक साखी ६३।
(३) कबीर ग्र०भू० पृ० १३ डा० मा० मिश्र।
(४) 'बीजक' विमला टीका--भूमिका पृ० १–१०
(५) शब्दामृतसिन्धु--पृ० १०८ भजन ४ (६) बीजकरमैनी—सा० २७।
(७) साखी ग्र० पृ० ८४९--सा० ४ (८) गीता अ० १८।६१

'पैठा है घट भीतरे, बैठा है सह चेत।
जब जैसी गति चाहिए, तब तैसी मति देत[1] ।।'

आत्मानन्दस्य अनिर्देश्यत्वं उपनिषत् सम्मतं विद्वत् सम्मतञ्च बीजके दर्शितं श्रीकबीरेण[2] । यथा—'सन्तो मते मातु जन रंगी'

रामायणयोगवाशिष्ठादिसम्मतं रामस्य ब्रह्मरूपत्वं स्वीकृतं श्रीकबीरेण।

'राम रहीमा एक है नाम धराया दोय।
कहै कबीर दो नाम सुनि, भरम पड़ो मति कोय[3] ।'
'भाई रे दो जगदीश कहाँ ते आया[4] ।'

'ब्रह्मजिज्ञासा' सूत्रेऽभिप्रेतः ब्रह्मविद्याधिकारी श्रीकबीरः इति हिन्दी-लेखिकाः[5] ।

काम निवृत्त्या जन्ममरणपरम्परा निवृत्तिः इति गीतामतं स्वीकृतं श्रीकबीरेण। यथा—

अमृतवस्तु जाने नहीं मगन भया सब लोय।
कहहिं कबीर कामो नहिं जीवहिं मरण न होय[6] ।।

एवमेव गीतायां पुराणेषु च दृश्यते। यथा—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ।।
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्[7] ।।

---

(१) बीजक साखी—पृ० ३३७।
'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।।'—पञ्चदशी ६।१७१।
(२) 'बीजक शब्द—४०। तैत्तरीय उ०—२।४।१
(३) साखी पृ० १९६ सा० २ बीजक शब्द—२६।
,, ,, ब्र० सूत्र ३।१।११ तथा ४।४।६।
(४) कबीर की विचारधारा—पृ० १७५।
(५) सन्तकाव्य में परोक्षसत्ता का स्वरूप—पृ० १९८।
(६) बीजक रमैनी सा० १०। (७) श्रीमद्भगवद्गीता १६।२१–२२।

कामं जानामि ते मूलं संकल्पात्त्वं हि जायसे ।
न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि[1] ।।

(ख) अमार्गवर्तिनां वैदिकानामप्रभावविवेचनम्

तद्यथा हिंसापरायणानाम्, दयारहितानाम्, नीचगृहभोजनानाम्, ज्ञानरहितानाम्, मूर्खाणाम्, चौरसहायकानाम्, साधुद्वेषिणाम्, जिह्वारसलम्पटानाम्, ब्राह्मणानां च निन्दा कृता श्रीकबीरेण, न तु ब्राह्मणकर्मपराणां सद्वृत्तानां ब्राह्मणानाम् ।

'राम हि गावं औ समुझावैं[2]' इत्यारम्य 'कहहिं कबीर जिह्वा के लम्पट, यहि विधि ब्राह्मण नरक परे । इत्यन्तस्य बीजकग्रन्थस्य दर्शनेन अमार्गगामिनां ब्राह्मणानामेव निन्दायां तात्पर्यमवगम्यते ।

'पांडे बूझि पीयहु तुम पानी[3]'

इत्यादिका बीजकोक्तिरपि ब्रह्मज्ञानरहितानां ब्राह्मणानां निन्दापरा न तु ज्ञानिनां ब्राह्मणानाम् ।

'पण्डित अचरज एक बड़ होई' इत्यादिका बीजकोक्तिरपि[4] अपरं पुरुषोत्तमम् अजानतां पण्डितानामेव न तु ब्रह्मविदां स्वकर्मधर्मपराणाम् औपनिषदानां पण्डितानां निन्दापरा ।

अपरम्पार पार पुरुषोत्तम या गति विरले पाई ।[5] इति तदुक्तिदर्शनात् । एवमेव अन्यत्रापि बीजकशब्देषु उन्नेयम् ।

भूतप्रेतसमाधिपूजाखण्डनमपि श्रीकबीरेण कृतम् । तदपि गीतासम्मतमेव । यथा—

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः[6] ।।

एवमेव बीजके—कहहिं कबीर सुनहु नर लोई । भूतवक पुजले भुतवे होई[7] ।

रामविमुखानां कलिकालिकानां तापसवेषाणां पाखण्डखण्डनमपि कृतम् श्रीकबीरेण न तु अतादृशानाम् । राम न रमसि कवन डण्ड लागा[8]……

(१) महाभा० शा० प० १७७।२५ (२) बीजक शब्द ५२ ।
(३) बीजक शब्द ५३ । (४) बीजक शब्द ५४ ।
(५) बीजक शब्द ५४, ५५, ५६ । (६) श्रीमद्भगवद्गीता १७।४ ।
(७) बीजक शब्द ५७ । (८) बी० शब्द ८० ।

विप्रमतीसीप्रकरणोक्ता ब्राह्मणनिन्दाऽपि हरिविमुखानां ब्रह्मज्ञानरहितानां दुष्प्रतिग्रहपराणां ब्राह्मणानामेव, न तु तद्विपरीतानां ब्राह्मणानाम् ।

हरि बिनु बूड़े नाव भरिसी ।
ब्राह्मण ह्वै के ब्रह्म न जाने ।
घर महं जगन प्रतिग्रह आने[1] ।

इत्यादिकबीरवाणी विचारेण अस्यैवार्थस्य निर्धारणात् ।

स्वे स्वे धर्मे तत्पराणामपि वैदिकानामवैदिकानाञ्च सर्वेषां लोकानां अभिमानिनां निन्दाकृता श्रीकबीरेण, अभिमानस्य पतनहेतुत्वात् । तद्यथा—

सब हिं मदमाते कोई न जाग[2] इत्यादि ।

यत्तु मूर्तिपूजाखण्डनं कृतं श्रीकबीरेण तत् उत्तमाधिकारिणां कृते । यत उत्तमाधिकारिणां मनस्येव ब्रह्म अभिव्यज्यते । पाषाणादौ तु मन्दाधिकारिणां । न तु सर्वव्यापकं ब्रह्ममूर्तौ नास्ति इति श्रीकबीरस्याभिप्रेतम्[3] । सकामकर्मणां सकामोपासनानाञ्च बन्धहेतुत्वात् खण्डनं कृतं श्रीकबीरेण, तत्तु उपनिषत्सु पुराणादावपि च दृश्यते । तद्यथा—

'कर्म हि कै कै जग बौराया भक्ति शक्ति ले बान्धिन माया'
धर्मकथा जो कहते रहई लावरि उठी परातहि कहई[4]'

तत्र पुराणे च दृश्यते—

कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते[5] ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥

अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ते बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणालोकाश्च्यवन्ते[6] ॥

स्वयं कर्मकरोत्यात्मा स्वयं तत्फलमश्नुते ।
स्वयं भ्रमति संसारे स्वयं तस्माद्विमुच्यते[7] ॥
परोपदेशवेलायां शिष्टाः सर्वे भवन्ति वै ।
विस्मरन्तीह शिष्टत्वं स्वकार्ये समुपस्थिते ॥

---

(१) बीजक विप्रमतीसी १ । (२) बीजक बसन्त ४;
(३) शब्दा मृ० सि० पृ० ७६ भजन १७ । (४) बीजक रमैनी ४, ६१ ।
(५) महाभा० शा० प० २४१ । (६) मु०उ० १।२।९ । (७) ईश्वरगीता ३।६ ।

अनुभूति विना मूढो वृथा ब्रह्मणि मोदते।
प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत्[1] ॥

अन्यच्च—देह हलाये भक्ति न होई। स्वांग धरे नर बहुविधि जोई[2]।

एवं सगुणभक्तः सकामकर्मणाञ्च बन्धहेतुत्वात् निन्दाकृता श्रीकबीरेण,[3] न तु निर्गुणभक्तेः, निष्कामकर्मणां वा। गीतायामेकभक्तेः प्रशंसनात्—

'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः[4]'

इति काम्यकर्मत्यागस्यैव गीतायां विधेयत्वात्।

यत्तुब्रह्मशिवविष्ण्वादि देवत्रय निन्दाचतुर्थदेवे निन्दा च कृता श्रीकबीरेण, तत् पञ्चमं देवपरं ब्रह्म स्तोतुं यथाहुर्मीमांसका: 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते', अपितु विधेयं स्तोतुम्। इति।

ब्रह्मणः कर्माप्राप्यत्वेन कर्मणो निन्दा रामकृष्णादीनाञ्च सगुणतया आविद्यकत्वं प्रतिपाद्य, सच्चिदानन्दरूपस्य परब्रह्मण एव प्राप्यत्वं दर्शितं श्रीकबीरेण। तेन सगुण ब्रह्मणोऽपि मन्दाधिकारिकृतायाः सेवायाः चित्तशुद्धिद्वारा ज्ञान प्राप्त्या परब्रह्मप्राप्तौ उपयोगः इति अभिप्राय अत्र श्रीकबीरस्य[5]। एवमेव अन्यत्रापि भजने दृश्यते—'अनगढ़िया देवा कौन करे तेरी सेवा[6]।'

## अवैदिकानाम् प्रभावविवेचनम्—

(१) तत्र प्रथमं यवनमत-खण्डनम्।
(२) चार्वाकमतखण्डनम्।
(३) जैनमतखण्डनम्।
(४) बौद्धमतखण्डनम्।

(१) तत्र यवनमतखण्डनं यथा—

तत्र बीजके यवनानां कुरानग्रन्थस्य तद्धर्माणाञ्च खण्डनम्-

---

(१) मैत्र्युपनिषद् २।२२। (२) बीजक रमैनी ६७।
(३) बीजक रमैनी ५। (४) गीता १८।२ (७।१६-१७)
(५) साखी पृ० ६८५ सा० ८। (६) शब्दामृतसिन्धु पृ० २४२ भ० ४।
(७) तत्रैव भ० ५।

'आय विआय सुमे हरि को नामा'[1] इत्यारम्य
'कहहिं कबीर वाकु दिवस न राति'

इत्यन्तेन ग्रन्थेन श्रीकबीरेण कृतम्। तथा च—

'दिन को रोजा रखत हो रात कुहत हो गाय।
यह खून यह बन्दगी, क्यों कर खुशी खुदाय ॥'[2]

अन्यत्र च तस्य सम्पूर्णं क्रियानित्यकर्मनेवाजादि च खण्डितम्[3]।

'अल्लाह राम जीवों तेरि नाईं'[4]

(२) तत्र चार्वाक्मतखण्डनम्—

शरीरमेवात्मा इति वदतां चार्वाकाणां मतं बीजके कहराप्रकरणेऽन्यत्रापि च साधु खण्डितं श्रीकबीरेण[5]। यथा—

"मति सुनु माणिक मति सुनु माणिक, हृदया बन्ध निवारहु हो।"

(३) जैनमतखण्डनम्—

जैनमतं खण्डितं बीजके श्रीकबीरेण। तद्यथा—

"जैनो धर्मक मर्म न जाने, पाती तोरि देव घर आनैं[6]।"

'समुझे की मति एक है, जिन देखा सब ठौर।
कहहिं कबीर ये बीच के, बलकहि और के और[7] ॥

मुसलिममतखण्डनम्—"अल्लह राम जियो तेरि नाईं[8]"

---

(१) बीजक शब्द ५०। (२) बीजक रमैनी ४९।
(३) बीजक रमैनी ४०। (४) बीजक शब्द ५१।
(५) बीजक कहरा ५। (६) बीजक रमैनी ३० (७) बीजक साखी १८७।
(८) 'अल्लह राम जिवों तेरि नाईं। जिनके मेहर होहु तुम सांईं ॥
क्या मूंडी भूमी शिर नाये, क्या जल देह नहाये।
खून करहु मिसकीन कहावहु, अवगुण रहहु छिपाये ॥
क्या ऊजू जप मज्जन कीये, क्या मसजिद शिर नाये।
हृदया कपट निमाज गुजारहु, क्या हज मक्का जाये ॥
हिन्दु एकादशि करे चौबिसों, रोजा मुसलमाना।
ग्यारह मास कहो किन टारे, एक माह न आना ॥

आदम आदि सुधि नहिं पाई। मामा हौवा कहँ ते आयी ॥[1]

यवनानामादिपुरुष आदम आदेरीश्वरस्य सत्तां न साक्षात्कृतवान्।

'जिन कलमा कलिमाह पढाया, कुदरत खोज तिनहुँ नहिं पाया'[2]
ये मुल्लापदवाच्या; शिक्षकाः जनान् शिक्षयन्ति तेऽपि ईश्वरं न जानन्ति।

## (४) बौद्धमतखण्डनम्—

बौद्धानां मतचतुष्टये प्रधानस्य माध्यमिकमतस्य शून्यवादरूपस्य खण्डनं कृतं श्रीकबरेण। तद्यथा —

'शून्य स्नेही राम बिनु चले आपन पौ खोय।
मनमथ मरै न जीवई, जीवहिं मरण न होय[3] ॥

यत्तु आधुनिकैः हिन्दीलेखकैः श्रीकबीरस्य बौद्धत्वं प्रख्यापितं तत्तु शून्यवादाऽद्वैतवादयोः[4] भेदाज्ञानेन, वस्तुतस्तु अद्वैतवादी औपनिषद एव[5] श्रीकबीरः यत्तु अद्वैतवादेऽभिप्रेतेऽपि श्रीकबीरेण शून्यसहजादि[6]शब्दप्रयोगः बीजकादौ कृतः तत्तु बौद्धशब्दैरेव बौद्धमतखण्डनाभिप्रायेण। अत एव रामं विना शून्य-

---

जो खुदाय मसजीद वसत हैं, और मुलुक किहि केरा।
तीरथ मूरति राम निवासी, दुइ महं किनहुँ न हेरा ॥
पूरब दिशा हरी के बासा, पश्चिम अलह मुकामा।
दिल महं खोज दिलहि मैं खोजो, यहैं करीमा रामा ॥
वेद कितेब कहो किन झूठा, झूठा जो न विचारे।
सब घट एक एक करि लेखै, भो दूजा कहि मारे ॥
जहं लगि जग महं रूप उपानो, सो सब रूप तुम्हारा।
कबीर पोगरा अलह राम का, सो गुरु पीर हमारा ॥
—बीजक शब्द ५१।

(१) बीजक रमैनी ४०। (२) बीजक रमैनी ३९।
(३) बीजक रमैनी ८३। (४) 'कबीर की विचारधारा–पृ० १६४-१६६, १८९।
'शाङ्कर अद्वैत वेदान्त का निर्गुणकाव्य पर प्रभाव'-पृ० ५८-५९।
(५) 'बीजक शब्द १०। (६) बी० श० ११।

समाधि वैयर्थ्यमुक्तं तेन। अत एव च सहजशब्दार्थापरिज्ञानं श्रीकबीरेण बौद्धानां दर्शितम्। तद्यथा —

सहज सहज सब कोई कहै, सहज न जाने कोय।
जेहि सहजे हरिजी मिले, सहज कहिजै सोय[१]॥
सहजे सहजे सब गए, सुत वित कामिणि काम।
एकमेक ह्वै रह्या, दास कबीरा राम[२]॥'

अवैदिकस्य यवनानां सूफी सम्प्रदायस्य प्रभावोऽपि बीजकादौ दृश्यते केचन मन्यते इति। सूफी सम्प्रदायस्यापि अद्वैतवादित्वात्। तद्यथा—

'हज हमारी गोमती तीर, जहाँ बसे पीताम्बर पीर[३]।'

एष अन्य मुसलिमकबीरस्य गुरुः सम्भवति न तु कबीरस्य। अनेन पद्येन पीताम्बरस्याद्वैतवादित्वेन समादरः कृतः श्रीकबीरेण, न तु श्रीकबीरस्य तच्छिष्यत्वमस्मात् कबीरपद्यात् प्रतीयते, शिष्यशब्दानुक्तेः। श्रीरामानन्दशिष्यत्वं तेन स्वयमुक्तञ्च। तद्यथा—

'रामानन्द स्वामी रमत ब्रह्म।
गुरू शब्द काटै कोटि[४] कर्म॥'
'लखे कोई बिरला पद निर्वाण।
रामान्द गुरू कीन्ह बखान॥
दास कबीर के निर्मल ज्ञान[५]।

अन्यत्र च—'काशी में प्रकट भये, रामानन्द चेताये॥'

## (२१) हिन्दीकविषु अद्वैतवादस्य श्रीकबीरोपज्ञत्वम्

अनेकैः लेखकैः अद्वैतवादस्य श्रीकबीरोपज्ञत्वं निर्धारितम्—

---

(१) साखी ग्र० सहज अंग साखी १।
(२) कबीर ग्र० सहज को अं० साखी[३]।
(३) गुरुग्रन्थसाहब बाधा १३
(४) 'शब्दामृतसिन्धु' पृ० ७६ भजन १७।
(५) श० मृ० सि० पृ० १०२,, २६।

श्रीसद्गुरुकबीरो हिन्दीकविष्वद्वैतवादस्यादिकविरासीदिति प्रतीयते। केचन महाराष्ट्रसन्त श्रीनामदेवं हिन्दीकविष्वादिकवित्वेन प्रतिष्ठापयन्ति। किन्तु श्रीनामदेवः श्रीसद्गुरुकबीरस्य समकालिक एव आसीत्। अतः श्रीनामदेवः स्वकवितायां सद्गुरोः कबीरस्य नामोल्लिखति। एवमेव श्रीसद्गुरुकबीरोऽपि स्वकवितायां श्रीनामदेवस्य नामलिखति—

गुरु परसादी जयदेव नामा प्रगटि के प्रेम इन्है के जाना।

वस्तुतः श्रीसद्गुरुकबीरसम्पर्काच्छ्रीनामदेवः सगुणोपासनं विहाय निर्गुणकवितां विरचितवान्।

यद्यपि श्रीकबीरात्प्रागुत्तरप्रदेशे नाथसम्प्रदायस्य प्रादुर्भावः प्रभावश्चास्ताम्। अयं सम्प्रदायः तात्कालिकहिन्दीभाषाभाषी तथाऽद्वैतवादी बभूव। किन्तु तत्सम्प्रदायस्याद्वैतवादिनी हिन्दीकविता मया नोपलब्धा।

श्रीकबीरगुरुः श्रीस्वामिरामानन्दः प्रागेव हिन्दीभाषायां कवितां कृतवान्। किन्तु साद्वैतवादिनी कविता नासीत्। इत्थं हिन्दीकविष्वद्वैतवादस्य श्रीकबीरोपज्ञत्वं प्रतीयते।

॥ इति द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

## मायालक्षणम्

श्रीसद्गुरुकबीरेण वेदान्तप्रतिपादितानां विषयाणां स्वरूपं स्वकीयया प्रक्रियया हिन्दीभाषानिबद्धया परतत्त्वविज्ञानाय बीजकादौ प्रतिपादितम्। तस्य च श्रीकबीरनिर्दिष्टस्य साधनमार्गस्य विषयाणाञ्च साधर्म्यं वैधर्म्यं वा भवतु परतत्त्वप्राप्तौ प्रयोगस्तु भवत्येव इति निश्चितम्। वेदान्तप्रक्रियाणामव्यवस्थिततत्त्वस्य वेदान्तग्रन्थेषु तत्र तत्रोपवर्णनात्। तदुक्तम्—

यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात् साध्वीत्याचार्यभाषितम्[1]।।

तत्र श्रीसद्गुरुकबीरेण ये वेदान्तविषयाः प्रधानीभूता बीजकादौ विषदीकृतास्ते एवात्रालोचयितुमुद्देशत उपन्यस्यन्ते। तेऽमीषट्—

१– मायास्वरूपम्, तत्कार्यस्वरूपञ्च।
२– जीवस्वरूपम्।
३– अध्यासस्वरूपम्।
४– प्रपञ्चस्य मिथ्यात्वम्।
५– परतत्त्वस्य स्वरूपम्।
६– चित्तात्मरूपस्य ज्ञानस्य स्वप्रकाशत्वम्।

(१) तत्रादौ माया लक्षणम्—

अनादित्वे सति भावत्वे सति ज्ञाननिवर्त्यत्वम्। तथा च चित्सुखाचार्यः—
'अनादिभावरूपं परिविज्ञानेन विलीयते'।
तदज्ञानमिति प्रज्ञालक्षणं संप्रचक्षते। इति। तदुक्तं श्रीकबीरेण—

माया महा ठगिनि हम जानी।..........
कहहिं कबीर सुनहु हो सन्तो, इ सब अकथ कहानी[2]।
'सदा रहत सुख संयम अपने। बसुधा आदि [3]कुमारी।।

(२) मायास्वरूपन्तु– श्रीसद्गुरुणेदं सर्वं जगदाविचकं मायिकम्, मिथ्या

(१) पञ्चदशी ८।७३। (२) बीजक शब्द २। (३) बीजक शब्द ११२।

या मन्यते, एतेषां मते श्रीशङ्करादिसिद्धान्तवदविद्या 'तम आसीत् तमसा गूढमग्रे' सत्त्वासत्त्वाभ्यामनिर्वचनीया अकथ्यरूपेणाङ्गीकृता । यथा—

झूठहिं जनि पतियाहु हो, सुनु सन्त सुजाना ।
घटही में ठग पूर है, मति खोहु अपाना ॥
झूठे का मण्डान है, धरती असमाना ।
दशहुँ दिशि वाके फन्द है, जिव घेरे आना ॥
योग जाप तप संयमा, तीरथ व्रत दाना ।
नौधा वेद कितेब है, झूठे का बाना ॥
काहू को शब्दें फुरे, काहू करमाती ।
मान बड़ाई ले रहे, हिन्दु तुरुक दुइ जाती ॥
बात व्योत असमान की, मुद्दत नियरानी ।
बहुत खुदी दिल राखते, बूड़े बिन पानी ॥
कहहिं कबीर कासो कहौं, सकलो जग अन्धा ।
सांचा सो भागा फिरै, झूठे का बन्दा[१] ॥

भोः सुज्ञाः साधवो ? नित्यं शुद्धबुद्धनिजात्मनः ।
सत्यस्य श्रवणादीनामभ्यासोऽत्र विधीयताम् ॥
मिथ्याभूतं जगत् किञ्चित् सिद्धिसम्पत्तिबान्धवम् ।
प्रतीयतां न सत्त्वेन विश्वासो नात्र धीयताम्[२] ॥

अविद्या पारमार्थिकी न, किन्तु अनादिः शान्ता च । इयमविद्या 'बीजक' 'साखी' शब्दग्रन्थेषु रूपकप्रक्रियया निर्दिष्टा इति । तच्चाग्रे वक्ष्यते—

आत्मकर्माश्रितो जीवो नष्टसंज्ञो गतस्पृहः ।
कर्मणा नीयतेऽन्यत्र मामैषा मम चोत्तमा ॥
शब्दस्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः ।
अन्नात्प्रवर्तते जन्तुरेषा माया मम प्रिया ॥[३]

अस्यार्थः—मरणान्तरं स्वकर्मभिः शुभाशुभैस्सम्बद्धो जीवो नष्टचैतन्योऽत्र एव गतस्पृहः, अन्यस्मिन् लोके नीयते, एषा मम उत्तमा माया । शब्दस्पर्शरूप-

(१) बीजक शब्द ११३ । (२) बीजक संस्कृत टीका पृ० ५६४ श्लोक—१–२
(३) वाराह पुराण अ० १२५

रसगन्धपञ्चकं तन्मात्रपञ्चकमिति यावत् आदाय स्थूलशरीरोपादानत्वेन स्वीकृत्य जीवः अन्नादन्नकार्याद् रेतः प्रवर्तते स्थूलशरीराकारेण परिणमते। एषाऽपि मम उत्तमा माया इति। श्रीकबीरेणोक्तम्—

माया मोह् कठिन जग फंदा[1]।
ई माया है मोहिनी, मोहिन सब जगझारि[2]।
योषिद्रूपा च मे माया सर्वेषां मोहकारिणी।
लीलया कुरुते मोहं स्वात्मारामस्य सन्ततम्[3]॥
यथा स्वप्ने द्वयाभासं चित्तं चलति मायया।
तथा जाग्रद् द्वयाभासं चित्तं चलति मायया[4]॥

श्रीकबीरोऽपि—'माया महा ठगनि हम जानी'[5] इत्यादि।

निस्तत्त्वा कार्यगम्याऽस्य शक्तिर्मायाऽग्निशक्तिवत्।
नहि शक्तिः क्वचित्कैश्चिद् बुध्यते कार्यतः पुरा[6]॥

श्रीविद्यारण्यस्वामिना मायाया अतीन्द्रियत्वेन दुर्विज्ञेयत्वमुक्तमत्र। श्रीसद्गुरु-कबीरोऽपि उक्तम्—

एके नारी जाल पसारी, जग में भया अन्देशा[7]।'
शून्यत्वमिति चेच्छून्यं माया कार्यमितीरितम्।
न शून्यं नापि सद्यादृक्तादृक्तत्वमिहेष्यताम्[8]॥

अस्यायं भावः—अत्र मायालक्षणमुक्तं पञ्चदशीपद्ये:—

पादोऽस्य सर्वाभूतानि त्रिपादस्ति स्वयं प्रभः।
इत्येकदेशवृत्तित्वं मायया वदति श्रुतिः[9]॥

---

(१) बीजक रमैनी ७६। (२) बी० रमैनी साखी ४७।
(३) ब्रह्मवैवर्त्त पु० अ० ३५।८५।
(४) मा० उ० का० पृ० २४३।६१ (५) बीजक शब्द २।
(६) पञ्चदशी २।४७। (७) बीजक शब्द ५।
(८) पञ्चदशी २।४९। (९) पञ्चदशी २।५५।

माहेश्वरी तु माया या तस्या निर्माणशक्तिवत् ।
विद्यते मोहशक्तिश्च तं जीवं मोहयत्यसौ[1] ॥

महेश्वरसम्बन्धिनी या मायाऽस्ति तस्या निर्वाणशक्तिवज्जगत्सर्जनसामर्थ्यंवन्मोह-शक्तिश्च मोहनसामर्थ्यमप्यस्ति । तद्वत् श्रीकबीरेणोक्तम्—

'माया मोह मोहित कीन्हा । ताते ज्ञान रतन हरि लीन्हा[2] ॥'
'यह माया रघुनाथ की बौरी, खेलन चली अहेरा हो[3] ।'
'नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृत्तं ज्ञानं तेन मुह्यन्ति जन्तवः[4] ॥

मायाया आवरणशक्तिरत्र प्रदर्शिता गीतायाम् । मायाया असंभावितवस्तु-दर्शनशक्तिरत्र वर्णिता यथा—

अभेदे भेदमारोप्य धर्मधर्मिभ्रमावहा ।
माया भ्रान्तिकरी दक्षाऽप्यसम्भावितदर्शने[5] ॥

श्रीकबीरेणाप्युक्तम्—

माया दीपक पतंग नर, भ्रमि भ्रमि मांहि परन्त ।
एक कोइ गुरु ज्ञान ते, उबरे साधू सन्त ॥
कबीर माया मोहिनी, मोहै जान सुजान[6] । इत्यादि
समुझि न परल विषय कछु माया[7] ।
सेयं भगवतो माया यन्नयेन विरुध्यते ।
ईश्वरस्य विमुक्तस्य कार्पण्यमुत वन्धनम्[8] ॥

विमुक्तस्यापि ईश्वरस्य कार्पण्यं बंधनञ्च मायाकृतमित्यत्र दर्शितम् । तदुक्तं श्रीकबीरेण—

माया मोह बन्धा सब [9]कोई ।

---

(१) पञ्चदशी ४।१२ । (२) बीजक शब्द ४ ।
(३) बीजक कहरा १२ । (४) श्रीमद्भगवद्गी० ५।१५ ।
(५) विष्णुधर्मोत्तरपुराण (६) साखीग्रन्थ पृ ४७६ सा० ७,५५
(७) बीजक रमैनी ८२ । (८) श्री मद्भागवत ३।७।९ ।
(९) बीजक रमैनी ८४ ।

कबीर माया मोहिनी, सब जग घाला घानि।
कोइ इक साधु ऊबरा, तोडी कुल की कानि[1] ॥
यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः।
नश्वरं गृह्यमाणं च विद्धिमाया मनोमयम्[2] ॥

सर्वस्यापीन्द्रियग्राह्यस्य माया मनोमयत्वमप्यत्र दर्शितम्।

सदसतां नयत्याशु सत्तां वाऽऽसत्त्वमञ्जसा।
सत्ताऽसत्ता विकल्पोऽयं तेन मायेति कथ्यते[3] ॥
अहो विचित्रा मायेयं तात? विश्वविमोहिनी।
असत्यैवापि सद्रूपा मरुभूमिषु वारिवत् ॥
अनन्तैव पराऽविद्या निर्वाणपदरोधिनी।
तयैवाभिव्यते मढैस्तदित्थंमत्तः चेष्टितम्[4] ॥

सदसतो वैपरीत्येन दर्शकत्वं मायास्वरूपमुक्तमत्र। किञ्चात्रासत्याया: मायाया: सद्रूपेण भासमानत्वमुक्तम्। अहन्ता तु माया कार्यमपि मायातः प्रबलेत्यप्यत्र दर्शितम्। तदुक्तं श्रीकबीरेण—

माया मोहिनी मन हरना।

योगिन सब पीस डारै, भोगिया वश करना[5]।' इत्यादि

उक्तञ्च भाष्यकारैः :—

'कूटो माया वञ्चना जिह्मता कुटिलता इति पर्याया[6]'। कारणमव्याकृतमाकाशं परमव्योममायाप्रकृतिः। शक्तिस्तमोऽविद्या छायाऽज्ञानमनृतमव्यक्तमित्येवमादि-शब्दैरभिलप्यमानः[7]।'

अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका परा।
कार्यानुमेया सुधियैव माया यया जगत् सर्वमिदं प्रसूयते[8] ॥

(१) साखी ग्रं० माया अं० सा० ९। (२) श्रीमद्भागवत ११।७।७।
(३) यो० वा० ६।९६।२८। (४) यो० वा० ६।६३।७; ६।२।३१।
(५) श० मृ० सि० पृ० १६० भा० १। (६) गीता १५।१६ शां० भा०।
(७) [illegible] (८) विवेकचूडामणि [illegible]

शक्त्यो यस्य देवस्य ब्रम्हविष्णुशिवात्मिका।
ब्रम्हविष्णुशिवा ब्रम्हाब्रम्हप्रधाना ब्रम्हशक्तयः ॥

स्वगुणैसत्वरजस्तमोभिः, सत्त्वे विष्णु, रजसा ब्रह्म, तमसा महेश्वरः। सत्वाद्यु-पाधिसम्बन्धात् स्वरूपेण निरूपाधिकपूर्णानन्दाद्वितीयब्रह्मात्मनैवानुपलभ्यमानाः[१]।

तदुक्तं कबीरेण—

'रज गुण ब्रह्मा सत गुण विष्णु तमो गुणी शिव होई[२]।'

अन्यत्र च—

नारी एक संसारहिं आई, माय न वाके बापहिं जाई[३] ॥

तत्सम्वादीनि वेदान्तवाक्यानि—

'अविद्या योनयो भावाः सर्वेऽमी बुद्बुदा इव।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥'
'यथा सतो जनिर्नैवमसतोऽपि जनिर्न च।
जन्यत्वमेव जन्यस्य मायिकत्वसमर्पकम्[४] ॥'
'ब्रह्ममाये जगद्योनी नोभयोः परिणामिता।
तयोर्विकारिणी माया ब्रह्म तत्र विवर्तनी[५] ॥

अत्र जगतो ब्रह्मविवर्तरूपत्वम्, माया-परिणामरूपत्वञ्च दर्शितम्। तथाहि—

'अनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसम्बधिनी माया[६]'।
'आश्रयत्व विषयत्वभागिनी निर्विशेप चितिरेव केवला।
पूर्वसिद्धत्तमसो पश्चिमो नाश्रयो भवति नापि गोचरः[७] ॥

अत्र ब्रह्मणो मायाऽश्रयत्वम्, माया विषयत्वञ्च प्रदर्शितम्।

'त्रिगुणात्मिका मूलप्रकृतेः[८] 'रजस्तमोऽनभिभूतशुद्धसत्वप्रधानामाया[९]।'

श्रीसद्गुरुकबीरेणापि कथितम्—

'रमैया के दुलहिन लूटल हो बाजार[१०] 'इत्यादि।

(१) श्वे० उ० शां० भा० ५।१२। (२) बीजक श० ८२।
(३) बीजकरमैनी-७२। (४) वेदान्त सिद्धान्त मुक्तावली १५।
(५) अद्वैतसिद्धिसिद्धान्तसार२।५०। (६) सिद्धान्तलेशसंग्रह पृ० ८२।
(७) संक्षेप शारीरक ३१९। (८-९) सिद्धान्तलेश संग्रह पृ० ८३।
(१०) [illegible]

तद्गीतायां दृश्यते—'मम माया दुरत्यया,'[१] इति।

कुतो दुरत्यया—'इत्यतोऽतिशक्तेरिति हेतुरध्यासहृष्ट्योक्तः।'

कुतोऽतिशक्तित्वम्—इत्यतो दैवी इत्येतद्धेतुभिरिति, देवसंबन्धित्वादिति सम्बन्धित्वञ्च परमप्रियत्वमिति। सा श्रीकबीरेण मायारूपेणोक्तम्।

(३) माया-कार्याणाञ्च स्वरूपम्—

ब्रह्मण; सर्जनेच्छारूपं मायाकार्यं श्रीसद्गुरुकबीरेण दर्शितं बीजकरमैनी-प्रकरणे यथा—

'जीवरूप एक अन्तरवासा, अन्तरज्योति कीन्ह प्रकाशा॥
इच्छारूप नारी अवतरी, तासु नाम गायत्री धरी॥
तिहि नारी के पुत्र तिनि भाऊ, ब्रह्मा विष्णु महेश्वर नाऊँ[२]॥

ज्योतिस्वरूपस्य शब्दब्रह्मणः 'गायत्री' नाम्नि नारीमायाकार्यरूपतया वर्णिता रमैनीप्रकरणारम्भे श्रीकबीरेण। तदनुसारीणि पुराणोक्तवाक्यानि—

'एषा भगवति देवी सर्वेषां कारणं हि नः।
महाविद्या महामाया पूर्णा प्रकृतिरव्यया॥
दुर्ज्ञेयाऽल्पधियां देवी योगगम्या दुराशया।
इच्छा परात्मनः कामं नित्याऽनित्यास्वरूपणी[३]॥'

द्वितीयरमैनीद्वारा तस्य पुष्टिः कृता। अर्थात् तस्याऽवस्थापरिणामविशेषात्मिका गायत्री, ततः ब्रह्मविष्णुमहेश्वराः संजाताः। यथा—

'अन्तर ज्योति शब्द एक नारी। हरि ब्रह्मा ताके त्रिपुरारी[४]॥'

सर्गादौ बहुविस्तरेण मायाप्रकटीभूता इत्युक्तं श्रीकबीरेण[५]। मायाशक्ति-भक्तिरूपेण जीवान् बबन्ध इत्युक्तं चतुर्थरमैनीपद्यैः। यथा—

'शक्तिभक्ति ले बांधिन माया[६]'

भगवतो रामस्य ब्रह्मणो वा) माया जगत् सृष्ट्वा सर्वत्राशान्तिं दुःखञ्च विस्तारयीतत्युक्तं श्रीसद्गुरुकबीरेण[७], अयम्भावः— मायामहावह्निकेति मया

(१) गीता—७।१४। (२) बीजकरमैनी—१। (३) देवीभागवत—३।५१-५२।
(४) बीजक रमैनी—२। (५) बी० रमैनी ३।
(६) बीजक रमैनी—४। (७) बी० शब्द १।

ज्ञातमित्युक्तं श्रीकबीरेण[१] । जीवस्य गत्यागति मायाजन्य एव[२] । मायारूपी एका नारी यस्याः जाले सर्वे जीवाः बद्धा इत्युक्तं श्रीकबीरेण । यथा—

'एके नारी जाल पसारी, ताते भयो अन्देशा[३]'

मनोमायाकार्येष्वासक्तमिति श्रीसद्गुरुज्ञानरहितबुद्धेः भ्रान्तजनस्य दशा उक्ता श्रीकबीरेण । यया मायया जगत्सृष्टं तस्या नाशो विधेयो विदुषा यत्नेन इति ज्ञानिनां मोहरहितानां दशा वर्णिता श्रीसद्गुरुकबीरेण[४] ।

एवमेव मायायाः विचित्ररूपेण रूपकातिशयोक्ति द्वारा तस्या स्वरूपं वर्णितम् यथा—

'माया क्वचित्खट्वात्वेन,[५] क्वचित्कम्बलत्वेन[६], क्वचिन्नारीत्वेन,[७] क्वचिद्वन्ध्यात्वेन,[८] क्वचिच्छक्तित्वेन क्वचित् दासीत्वेन,[९] क्वचित्लतात्वेन[१०] इत्येवं बहुभी रूपैर्निरूपिता श्रीकबीरेण । तदनन्तरं माया केन रूपेण बध्नातीति नवम-रमैनीपदेनोक्तं, 'माया' अष्टसिद्धिनवनिधिद्वारा यमं समस्तदेवादिकञ्च सर्वमार्ग- ज्ञानिनमपि बबन्ध ।

सकामोपसनारूपं मायाकार्यं जन्ममरणपरम्परारूपस्य बन्धस्य हेतुरित्युक्तं दशमरमैनी पद्ये । मिथ्यात्वेन स्वप्नसदृशे मायाकार्ये प्रपञ्चे स्नेहबन्धः नष्टाः । केवलं तेषां नामैवावशिष्टमित्येकादशरमैनीप्रकरणे प्रदर्शितम् ।[१२]

---

(१) बी० शब्द—२ ।                    (२) बी० शब्द ३ ।
(३) बी० शब्द-५ ।                    (४) बी० शब्द—७ ।
(५) 'सोवन हार के ऊपर खाटा' । (माया) -बीजकरमैनी ७३ ।
(६) 'बरसे कम्बल भींजें पानी' । श० मृ० सि० पृ० २५२ भ० १ ।
(७) 'पाँच ढोटा एक नारी । बी० श० २० ।
(८) 'बांझक कोख पुत्र अवतरिया' । बी० श० १० ।
(९) 'छक्ति शक्ति ले बांधिन माया' । बी० र० ४ ।
(१०) 'बिल्ली घर में दासी' । बी० श० २१ ।
(११) 'बेलि एक त्रिभुवन लपटानी । बी० श० ९२ ।
(क) 'बांध्यो अष्ट कष्ट नव सूता । यम बांध्यो अजनी के पूता ॥'—बी०रमैनी ९ ।
(१२) 'जन्म जन्म यम पहिरे बूता' । –बी० रमैनी १० ।
बांधहि गुष्टी मुष्टी भई बोरि । तीन लोक मह लागु ठगोरं ॥'—बी०रमैनी ११

मूषकसदृशो जीवः मार्जारो तुल्या च माया, एकमेवानादिकालाग्निवसत इति। वस्तुतस्तु परब्रह्मरूपत्वेन सिंहतुल्य बलिनं जीवं हस्तितुल्या नीरूपा माया भक्षयति, इत्यद्भुतवामेति मायास्वरूपेण मोहरूपस्वकार्यरूपेण च वर्णिता बीजके[1]। माया स्वरूपं वर्णितं गीतायाम्।

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा[2]॥'

इति गीतोक्ताष्टाङ्गयुक्ता प्रकृतिः मायारूपाष्टङ्गी कुमारी इत्येवं वर्णिता श्रीकबीरेण[3]। अस्मिन्मायोपहितं ब्रह्म पुरुषरूपेण त्रिगुणात्मिका च माया नारी-रूपेण वर्णिता श्रीकबीरेण, तयोः संयोगाच्च सर्गः तथा चोक्तं पुराणे—

गणेशजननी दुर्गाराधालक्ष्मी-सरस्वती।
सावित्री च सृष्टिविधौ प्रकृतिरष्टधा स्मृता[4]॥

भगवतः शक्तिर्मायैव मत्स्याद्यवताररूपेण संभूता इति वर्णिता श्रीसद्गुरु-कबीरेण—

सन्तो आवे जाय सो माया[5] इत्यादि।

तदुक्तं गीतायाम्—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया[6]॥

मायाप्रयुक्तं दम्भं समाश्रिता सर्वे जीवा मृता इति माया मोहिनी चोक्ता श्रीकबीरेण। यथा—

माया डिम्भ गेल सब राजा[7]।

मायाया अद्भुतनारीरूपत्वं वर्णितं श्रीकबीरेण, सा स्वशरीरिणीति यथा—

नारी एक संसारहिं आई, माय न वाके बापहिं जाई[8]॥

---

मूस बिलाई एक संग, कहु कैसे रहि जाय।
अचरज एक देखहु हो सन्तो, हस्ति सिंहहि खाय॥

(१) बी०र० साखी १२। (२) गीता–७।४।
(३) 'तब अष्टाङ्गी रची कुमारी, तीन लोक मोहिनी सब झारी।–बी०रमैनी२७।
(४) देवीभागवत—९।११। (५) बीजक शब्द–३।
(६) गीता ४।६। (७) बीजक रमैनी ४७।
(८) बीजक रमैनी ७२।

मायायां नारीरूपत्वमारोप्य तस्याद्भुतं चरितं प्रदर्शितं बीजकग्रन्थे श्रीकबीरेण—

चली जात देखी एक नारी, तर गागर ऊपर पनिहारी।
चली जात वह बाटहिं बाटा, सोवनहार के ऊपर खाटा[1] ॥

मायाकार्यस्य मोहस्य बन्धरूपत्वमुपदिष्टं श्रीकबीरेण। मायाया अनिर्वाच्यत्वं दुर्निरूपत्वञ्च वर्णयित्वा मायया जगद्बन्धनं प्रदर्शितं श्रीकबीरेण। यथा—

ये जियरा तैं दुखहिं सम्हारू। जे दुख व्यापि रहल संसारू।
माया मोह बँधा सब कोई[2] अलपे लाभ मूल गौ खोई[2] ॥इत्यादि।

अविवेकी मूढो जनोऽविद्यया वसुधायां मायामासक्तो भवति। तस्यां स्वसक्ताः सर्वेऽपि महाभट्टा भूपतयः प्रयाताः वसुधा तु आदिकालम् रभ्य इदानीं यावद-स्वामिकत्वेन कुमारी इव वर्तते। इति वसुधायां मोहो माया अनिर्वचनीयत्वञ्च दर्शितं श्रीसद्गुरुकबीरेण। यथा—

तुम यहि विधि समुझहु लोई हो गोरी मुख माँदर बाजै।...
सदा रहत सुख संयम अपने, वसुधा आदि कुमारी ॥[3]

तथैवसंस्कृतटीकाकृता श्रीस्वामीहनुमद्दासमहाभागेन—

ये केवलं जगद् भावास्तानविद्यामयान् विदन्।
कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति ॥
अनात्मज्ञास्तु तान् मत्वा सत्यसौख्यमयानिमान्।
यतमानास्तदर्थं वै निमज्जन्ति भवार्णवे ॥
आशां कुर्वन्ति चान्येषामात्मानं मन्वते नहि।
लभन्ते सत्पतिं नैव त्वहो मोहकदर्थना ॥[3]

जगतो माया ममत्वं दर्शितं, ततः मायायामासक्तस्य शरीराध्यासजन्य-दुःखस्य शरीराद्यनित्यता वर्णनं कृतं बीजके। यथा—

सन्तो दृष्टि परे सो माया[4]।

---

(१) बीजक रमैनी ७३। (२) बी० रमैनी ८४।
(३) बी० श० ११२ सं० टीका पृ० ५६४।
(४) श० पृ० सि० पृ० ९३-९४ म० ७।

हिंडोलाप्रकरणेऽपि मायाया: अद्‌भुतानि कार्याणि चरितानि दर्शितानि । मनोविकारादियुक्तास्सर्वे देवादिमन्वादय: पुन: पुन: मायायामासक्तिं कृत्वा जन्ममरणादिरूपहिंडोलायां दोलायन्ते[1] । उक्तञ्च टीकायाम् तत्रैव ।

भ्रमसिद्धा हि दोलेयं मनोदेहात्मकञ्जगत् ।
यत्राऽऽगत्य हि सर्वेऽमी दोलायन्ते शरीरिण: ।।
पापपुण्यमयौ स्तम्भौ ह्यध: स्थावुच्छ्रितौ दृढौ ।
मेरुस्तम्भोऽत्र मायैव तिर्यक् ताभ्यां परं स्थिता ।।
लोभो गोपानसी चात्र विषया भ्रमणप्रदा: ।
प्रेङ्०स्थानादिका ज्ञेया यत्र भ्राम्यति वेगत:[2] ।।
यया नात्र भवेदिच्छा क्रीडितुं सा मति: कुत: ।
वर्तते हृदये कस्य हरेस्तन्त्रं जगत्समम्[3] ।।

चांचरप्रकरणेऽपि मायया: कार्यंचरितं दर्शितं श्रीकबीरेण यथा—

खेलती माया मोहिनी मन बौरा हो[4] ।

तत्रैव टीकायाम्—

"जनतामोहिनी माया क्रीडतीव जगत्त्रये ।
यया संसारिण: सर्वे जीर्णा गीर्णा निपीडिता: ।।
कौतुकं चांचराख्यं सा कुर्वन्तीव विलासिनी ।
कुरुते बहुधा लीलां तां विद्धि दु:खदां सदा ।।
त्रिभिर्गुणमयै: रागै: पटं चित्रं विधाय च ।
विद्धि तां सुन्दरीभूत्वा परिधायात्र चागताम् ।।
तस्या रूपस्य शोभा सा परमाद्‌भूतरूपिणी ।
अनिर्वाच्यं महत्त्वञ्च ज्ञायतां स्वविवेकत:[5] ।।"

श्रीकबीरग्रन्थावल्यामपि मायाया: विविधानि कार्याणि चरितानि च दर्शितानि । तान्येव साखीबीजकानुसारं दृश्यते । तद्यथा—

कबीर 'माया मोह की, भई अँधारी लोइ ।'[6]

(१) बीजक हिंडोला १–२–३ । (२) तत्रैव बी० सं० टीका पृ० ६३३ ।
(३) तत्रैव बी० सं० टीका पृ० ६३८ । (४) बी० चांचर २ ।
(५) बी० चांचर २ सं० टीका पृ० ६८२ (६) कबीरग्र० पृ० २० सा० ३४

अत्र तु 'लोय' शब्देन निखिलसंसारिजनस्य बोधे विद्यते, 'लोई' इति पाठस्तु (लोगो) भ्रामके लेखकानुसारी भार्या वदति।

श्रीसद्गुरुकबीरमतानुसारेण राम नामजपतां जन्मसार्थकं भवति। ते मायाया वञ्चिता न भवन्ति। मायाकार्ये च विषये बद्धा आसक्ता न भवन्ति। यथा—

'जग हटवारा स्वाद ठग, माया वेश्या लाय।
राम नाम गाढा गहो, जनि जा जन्म ठगाय[1] ॥'

तद्रहितानां कृते माया बन्धहेतुः, ज्ञाननिवर्त्या इति, अज्ञानिजनस्य जाल-तुल्या (माया) अस्ति।

'कबीर माया पापिनी, फन्द लै बैठी हाट।
सब जग तो फन्दे परा, गया कबीरा काट[2] ॥'

माया स्वकार्यलोभद्वारा मूढजनं बध्नाति। यस्याः कार्याणां शब्दस्पर्शा-दीनां विषयाणां भोगस्यान्तो न भवति। माया तु कुबुद्धिमुत्पाद्य पापं कारयति रामनामजपञ्च प्रतिबध्नाति[3]।

कबीर माया पापिनी, लोभ लुभाया लोग।
पूरी किनहुँ न भोगिया, इसका यही वियोग॥
कबीर माया पापिनीं, हरि सो करै हराम।
मुख कड़ियाली कुबुधिकी, कहन न देई राम॥'

साधकाः मायाकार्याणि वांछन्तोऽपि न तानि प्राप्नुवन्ति। ये तु मनसाऽपि नेच्छन्ति ते तानि मायाकार्याणि प्राप्नुवन्ति। यथा—

'कबीर माया पापिनी, मांगी मिलै न हाथ।
मना उतारी जूठ करूं, लागी डोलै साथ[4] ॥'

माया हरिप्राप्तौ बाधिकेति। मायाज्ञानिनामज्ञानिनाञ्च मोहं जनयति,

---

(१) साखीग्र० पृ० ४६४। माया अं. साखी १
(२) साखीग्र० पृ० ४६४। माया अं० साखी २
(३) सा० ग्र० पृ० ४६४ साखी ३–४।
(४) साखीग्र० पृ० ४६५ साखी ५।

विषयोपभोगेन नाना विधान्रोगान् दुःखानि च नानाविधानि विघ्नानि समुत्पादयति । यथा--

'कबीर माया मोहिनी, मोहै जान सुजान ।
भागेहूँ छूटै नहीं, भरि भरि मारै बान[1] ॥'

मायामोहिनीमोहं समुत्पाद्य मधुरान् विषयरसान् भोजयति । सद्गुरुकृपया समुत्पन्ने ज्ञाने सति निवर्तते । माया मोहिनीरूपा सर्वं जगत् भ्रामयति । कश्चन साधुपुरुषः, अध्यात्मज्ञाने प्रयतमानस्स्वबन्धनानि भङ्क्त्वा मायाबन्धनाद्बहिर्गच्छतीति[2] ।

मायारूपा तस्करिका, अज्ञानरूपायां तमश्छन्नायां निशायां यस्स्वपिति, तस्य सर्वस्वरूपं ज्ञानरत्नमपहरति । स च पश्चात्प्रबुद्धो रोदिति—

'कबीर माया मोहिनी, भई अन्धेरी लोय ।
जो सुता तिहि मूसिया, रहे वस्तु को रोय[3] ॥'

मायारूपवृक्षस्य त्रिविधं फलं, शोकदुःखसंतापरूपं भवति । तस्यां छाया तु स्वप्नेऽपि शीतलतारूपा न भवति । तस्यास्तत्त्रिविधमपि फलं नीरसं भवति । तदुपयोगेन च तनोस्तापो जायते । अनेकैः जनैः स्थूलानि मायाकार्याणि धनधामादीनि सर्वाण्यपि त्यक्तुं शक्यन्ते विषयवासना, लोकैषणा तु मनसि संभृता सूक्ष्मामाया त्यक्तुं न शक्यते, सा तु 'पीर पैगम्बर औलिया' साधुप्रभृतीनपि ग्रसतीति हेतोः वासनारूपा मायैव दुस्त्यजा इति[4] ।

'मोटी माया सब तजे झीनी तजी न जाय ।
पीर पैगम्बर औलिया, झीनी सबको खाय' ॥

इमां संसाररूपां मायां महादेवादपि प्रबलां त्यक्तुं कश्चिन्न शक्नोति, किन्तु स्रष्टा, ईश्वर एव मायां त्याजयितुं शक्नोति । यथा—

'शंकर हू (सांकर) ते सबल है, माया यह संसार ।
अपने बल छूटै नहीं छुटवै सिरजनहार[5] ॥'

संसाराध्वनि गच्छतां पुंसामाशारूपाऽऽसक्तिरूपा ऽऽसक्तिर्भवति । सा जीवनपर्यन्तं न भिद्यते । अन्तकालेऽपि तिष्ठति । देहगेहभार्यापुत्रादिष्वहंममत्वा-

(१) सा० ग्र० पृ० ४६५ सा० ७ ।
(२) साखीग्रन्थ पृ० ६४५ सा० ८ । (३) सा० ग्र० पृ० ४६६ सा० १० ।
(४) सा० ग्र० पृ० ४६९ सा० २२-२४ । (५) सा० ग्र० पृ० ४७० सा० २६ ।

दिवृद्धया मायारूपया हरौ स्नेहः त्यक्तो भवति। भगवान् तु मायाकारकः, तां मायां समाश्रिताः कियन्तो गताः परलोकमिति[1]।

धनधान्यादिरूपायां मायायां सर्वेस्निह्यन्ति यस्तु भगवान् इदं वपुः सृष्टवान् तं विस्मरन्ति इति।

'संसारी सो प्रीति करि, सरै न एको काम।
दुविधा में दोऊ गये, माया मिली न राम॥
माया आगे जीव सब, ठाढ़ भये कर जोरि।
जिन सिरजा जलबुन्द सो, तासो बैठें तोरि[2]॥

कनककामिनीरूपायां मायायामासक्तं सर्वं जगज्ज्वलति। अतोऽग्निसम्पृक्त तूलावेष्टितज्वलनरूपायां मायायां सन्तो ? न स्निह्यन्ति। इत्युक्तं श्रीकबीरेण–
यथा—माया के झक जग जली, कनक कामिनी लागि।
कहु सन्तो किमि राखिये, रुई लपेटी आगि[3]॥

इयं माया सर्वं जगद्भ्रामयति। इमां मायां तरितुं तारयितुं च जगति साधवो महापुरुषा समागताः। अस्मिन् संसारे मायारूपो मोहो न कर्तव्यः। यतोहि यस्मिन् गृहे यावदेव मायाजन्यमंगलं भवति, तस्मिन् गृहे तावानेव द्रोहो भवति। तद्यथा—

'या माया जग भरमिया, सबको लागी उपाध।
यहि तारन के कारने, जग में आये साध॥
कबीर या संसार की, झूठी माया मोह।
जिहि घर जिता बधावना, तिहि घर तेता दोह॥
सब आसन आसा तना, निवरत कोई नाहि।
निवत्ति को जाने नहीं, प्रवृत्ति परपंच मांहि॥
'कबीर वेदशास्त्र जहं लगि, सब कञ्चन की ढेर।
अनुभव पारस की कनी, ता महं अनन्त सुमेर[4]॥

(१) साखीग्र० पृ० ४७१ साखी २८–३३।
(२) साखीग्रन्थ पृ० ४७१ साखी ३१-३२ (३) साखीग्रन्थ पृ० ४७३ साखी ४१
(४) साखीग्र० पृ० ४७४ साखी ४४–४५–४६–६१

ज्ञानिनो मायातः पराङ्मुखा भवन्ति । अज्ञानिनो मायावशवर्तिनस्तु न पराङ्मुखा भवन्ति, इति ।

ये ये मायायामासक्तास्ते सर्वे तया अधः पातिताः, तथा मुनिवरो नारदोऽपि अधः पातितः । अतस्तस्यामासक्तिर्न कार्या । तत्कार्येषु नासक्तिर्विधेया[1] इति ।

पूर्वोक्तानि पद्यानि मायाविषये बीजककबीरग्रन्थावल्यादौ श्रीकबीरेण उपन्यस्तानि । तानि च वेदान्तवाक्यैस्सह अर्थतस्सम्वदन्ते । तद्यथा—

(१) वेदान्तवाक्यम्—शक्तेर्मायात्वे तु –

'एताभ्यामेव शक्तिभ्यां बन्धः पुंसस्समागतः ।
याभ्यां विमोहितो देहं मत्वात्मानं भ्रमत्ययम्[2] ॥

भक्तेर्मायात्वे वेदान्तवाक्यं यथा—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुनः ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः[3] ।

पूर्वोक्तं कबीरस्य पद्यमेतत्—

'शक्ति भक्ति ले बान्धिन माया[4]'

अत्रानूतमां परमश्रेष्ठां मोक्षरूपाम् गतिमास्थित इत्युक्त्या प्रतीयतेऽन्येषां भक्तानां प्राप्तव्यागतिरवस्थारूपा यथाक्रममार्तानां भक्तानां रोगनिवृत्तिः जिज्ञासूनां साधनसम्पत्तिः, अर्थार्थिनां लक्ष्मीप्राप्तिः, एतास्सर्वाऽपि गतयो माया रूपा एव बन्ध हेतवः, केवलमेका आत्मभक्तिरेव नैर्गुण्यरूपपरमश्रेयः प्राप्तिरूपेति ।

वेदान्तवाक्यं यथा—'मायी सृजते विश्वमेतत्[5]'
बीजकेऽपि—'बहुविधि चित्र बनाय के, रचो क्रीडा राश[6]'

---

(१) कबीरग्र० पृ० २६ सा० २९-३१ । (२) विवेक चूडामणि श्लो० १४६ ।
(३) गीता ७।१६–१७ । (४) बीजकरमैनी ४ ।
(५) श्वेताश्वेतर उप० ४।९ । (६) बीजक हिंडोला २ ।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्[१] ।

तथा बीजके–'ई माया रघुनाथ की बौरी, खेलन चली अहेरा हो ।[२]

'न मां दुष्कृतिनो मूढ़ाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः[३] ॥

तदुक्तं श्रीकबीरेण—

'मैं जाना हरिसो मिलूं, मो मन मोटी आस ।
हरि बिच डारै अन्तरा, माया बड़ी पिशाच[४]।

'दैवी ह्येषा गुणमयी, मम माया दुरत्यया[५]'

'ब्रह्माश्रयासत्वरजस्तमो–गुणात्मिका माया अस्ति[६]'

ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्[७]

श्रीसद्गुरुणाप्युक्तं —

'माया महा ठगनी हम जानी ।
त्रिगुण फांस लिए कर डोले, बोले मधुरी बानी[८]

'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि, यन्त्रारूढानि मायया[९] ॥

श्रीकबीरोक्ति—'भरम में भूल रहा संसार'[१०] ॥

पांच तत्त्व के भीतरे, जाका यह विस्तार[११] ॥'

'माया मात्रं तु कार्त्स्न्येनाभिव्यक्तस्वरूपत्वात्[१२] ॥'

श्रीकबीरोक्ति—'सबका साक्षी मेरा सांई[१३] ।'

'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्[१४] ॥

---

(१) श्वे० उ० ४।१० । (२) बी० कहरा १२ ।
(३) गीता अ० ७।१५ । (४) कबीरग्रन्थ० पृ० २५ साखी ९ ।
(५) गीता ७।१४ । (६) तत्त्वबोध २९ (गीताभा० ७।१४)
(७) श्वे० उ० १।३ । (८) बीजकशब्द २ ।
(९) गीता १८।६१ । (१०) शब्दामृतसि० पृ० २१९ अ० ८ ।
(११) साखी ग्र० पृ० ६८४ साखी ६ । (१२) ब्रह्म सू० ३।२।३ ।
(१३) श० म० सि० पृ० २४९ अ० २३ । (१४) गीता ९।८ ।

श्री कबीरेणोक्तम् 'बहु विस्तार के प्रकटी माया[१]'।
'सत्वंरजस्तम इति गुणाः प्रकृतिसम्भवाः।
निबध्नाति महाबाहो देहे देहिनमव्ययम्[२] ॥'

सद्गुरुकबीरोक्तिः—'माया के बशि सब परे, ब्रह्मा विष्णु महेश।
सनक सनन्दन नारदहुं, गौरीपूत गनेश[३] ॥'

एवमन्यान्यपि मायास्वरूपादिप्रतिपादकानि वेदान्तवाक्यानि प्रदर्श्यन्ते। यानि तदर्थकैः कबीरवाक्यैः पूर्वप्रदर्शितैरन्यैश्च सह संवदन्ते तद्यथा—

'तुच्छाऽनिर्वचनीया च, वास्तवी चेत्यसौ त्रिधा।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयोक्तिकलौकिकैः[४] ॥'

कहहिं कबीर कोई भागि बाचे, अभय सतगुरुशरण[५]

'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते[६]'

भाष्यकारः—"सर्वधर्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते ते मायामेतां सर्वभूतमोहिनीं तरन्ति-अतिक्रामन्ति संसारबन्धाद् मुच्यन्ते इत्यर्थः।"

'भगवदेकशरणतया तत्त्वज्ञानद्वारेण मायातिक्रमस्सम्भवतीति"।
'ये शरणं प्रपद्यन्ते, त एतां मदीयां गुणमयीं मायां तरन्ति'।
'अन्यत्सर्वं परित्यज्य मामेव ये प्रपद्यन्ते'।

'देवस्य ममेश्वरस्य विष्णोः स्वभावभूता दैव्यप्राकृता हि यस्मादेषा गुणमयी गुणात्मिका मम माया दुरत्यया दुस्तरा तस्मात् मामेव ये प्रपद्यन्ते शरणं गच्छन्ति मायामेतां ते तरन्ति।'

'मामेव ये प्रपद्यन्ते-प्रपत्तिरज्ञानं गत्यर्थानां ज्ञानार्थकत्वात् ज्ञानस्यैव मायाख्याविद्यानिवर्तकत्वेन तत्तरणहेतुत्वात्। न चाविद्याऽतिरिक्ते यं मायेति युक्तम्।'[७]

---

(१) बीजकरमैनी ३।                                    (२) गीता १४।५।
(३) बीजकसाखी १५१                                    (४) पञ्चदशी ।६।१३०।
(५) श० मृ० सि० पृ० १६० भ० १।                  (६) गीता ७। १४।
(७) एकादशटीकातः गीता ७।१४

'विश्वासं सर्वतस्त्यक्त्वा कृष्णमेव भजेद्बुधः' इति श्रीमदाचार्योक्त्यनुसारेण प्रपत्तिमार्गरीत्या ये भजन्ते मां पुरुषोत्तममेव ते मायां तरन्ति।

ये मामेव केवलमनन्यभावेन पुरुषोत्तमं प्रपद्यन्ते प्रपन्ना भवन्ति ते एतां मायां मोहनात्मिकां तरन्ति।

ये मामेव सर्वभूतस्थं भगवन्तं वासुदेवं प्रपद्यन्ते विषयीकुर्वन्ति त एवैतां मायां तरन्ति।

भवतु नाम सद्गुरुकबीरसिद्धान्ते परतत्त्वविज्ञानाय मायाया मायापतेश्च विज्ञान साधनमार्गः। तं ज्ञात्वा मायां परित्यज्य मायापतिञ्च विज्ञाय मुक्तिं लभन्ते। सर्वे भवबन्धा आसक्तिबन्धाश्च मुमुक्षूणां हीयन्ते। इति ॥[1]

## (२) जीवस्वरूपविमर्शः

तत्र जीवति प्राणान् धारयतीति व्युत्पत्त्या प्राणप्रधानस्य सूक्ष्मशरीरस्य धारयिता मायाकार्यभूतायां तुच्छविद्यायां चिदाभासरूपो जीवः इति। यदुक्तम्—

'इति ताः श्रुतयः प्राहुर्जीवत्वं प्राणधारणात्।
चैतन्यं यदधिष्ठानं लिङ्गदेहश्च यः पुनः।
चिच्छाया लिङ्गदेहस्था तत्सङ्घो जीव उच्यते[2]॥ इति

अन्तःकरणावच्छिन्न चैतन्यरूपः, अन्तःकरणप्रतिबिम्बो वा जीवः। तस्य चावस्थाभेदेन नामत्रयं विश्वस्तैजसः प्राज्ञ इति। तत्र विश्वः जाग्रदभिमानी, तैजसस्तु स्वप्नाभिमानी, प्राज्ञस्तु सुषुप्ताभिमानी, स चावस्थासु मनोमयं विविधं द्वैतं सृजति। सृष्ट्वा च तत्र तन्तुवायकीटवत्स्वयं बद्धो भवति। इदञ्च जीवस्य सोपाधिकं रूपं, वस्तुतस्तु जीवः कूटस्थः—

कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते।[3] इति

अयं साक्षीपदेनापि व्यपदिश्यते साक्षी तु मनसस्तद्वृत्तीनां तद्वृत्त्युपारूढविषयाणाञ्च भासकः, स्वप्रकाशविज्ञानरूपः 'तमेव भान्तमनुभाति सर्वम्'[4] इत्याद्युपनिषद्वाक्यं तत्र प्रमाणम्।

यद्यपि जीवस्यस्वरूपविषये नानाविधानि मतानि सन्ति। तथाहि—

---

(१) गीता ७।१४ एकादश टीका से। (२) पञ्चदशी-४।१०-११।
(३) पञ्चदशी ४।२२। (४) क० उ० २।५।१५।

ज्ञानदर्शनादिमानिति जैनाः सुखादिसमवायिकारणमिति नैयायिकाः। शेषत्वे सति कर्तेति वैष्णवाः। प्राणधारणानुकूलव्यापाराश्रयः। इन्द्रिय विशिष्ट-शरीरवानिति। अविद्यावच्छिन्नचैतन्यम्, अविद्योपहितं चैतन्यम्, अविद्याप्रति-बिम्बितं चैतन्यम्, अन्तःकरणावच्छिन्नं चैतन्यम्, अन्तःकरणाभासश्चेतनः वा इति वेदान्तिनः[१]।

'आवरण प्राधान्येनाविद्याऽऽज्ञानशताब्दितो जीवोपाधिः[२]।

तथापि एतेषु मतेष्वद्वैतवेदान्तानुसारी एव मतं श्रीकबीरस्य। तथाहि—

जीवरूप एक अन्तरवासा[३]।

अर्थात्—अन्तर्ज्योतिस्वरूपस्य परमात्मरूपस्य च साक्षिणः 'एकोऽहं बहुस्याम्' इत्येवं रूपेच्छा अजायत। सा चेच्छैव मायाविष्टस्य तस्य वधूर्जाता।

सैवेच्छाविवर्तरूपा गायत्री श्रुतिस्मृतिपुराणादि प्रसिद्धा। तस्या अयोनिजाः संकल्पमात्र प्रभवाः पुत्रा जाताः अलौकिका अप्रमेयप्रभावसंयुता ब्रह्मविष्णुमहेश्वराः ब्रह्मा चेदं चराचरं जगत्सृष्ट्वा कदाचिद्भ्रान्तोमातुश्च संनिधौ उपविष्टो जिज्ञास-याऽपृच्छत तव को भर्ता इति। तच्च श्रुत्वा माता लोकदृष्टं विहायतत्त्वदृष्ट्-याऽब्रवीत्। यस्त्वं साऽहमहं चत्वम्, अत्र सत्यः कश्चन द्वितीयः पदार्थो न विद्यते इति। आवयो स्वरूपे वस्तुतो भेदो न विद्यते। सदैव त्वं मत्स्वरूपः, अहञ्च त्वत्स्वरूपा इति। अत्र संशयो नास्ति। त्वं ब्रह्मदृष्ट्या पुरुषः, अहं त्रिगुणात्मिका तव महेश्वरस्य शक्तिस्त्वदायत्ता माया, तव भार्यारूपा गायत्री-नाम्नी। एवमीशजीवयोरेकामायारूपा भार्या भवति अवस्थाभेदेन च ब्रह्म-विष्णुमहेश्वररूपस्य पुत्रवर्गस्य जननीपि भवति। तादृशाश्च ब्रह्मादिसदृशाः कस्या अपि नार्या, सुपुत्रालोकेन दृश्यन्ते ये ध्यानतः निजं पितरं जानीयुः। यस्तु सर्वस्य पिता यज्ज्ञानञ्चावश्यकम्, सोऽसङ्गः सच्चिदानन्दः एकोऽपि मति विभ्रमाद् भिन्नत्वेन प्रतीयते। स च वस्तुतो जीवस्वरूपादभिन्न मायया च जगतः कर्ता, स्वरूपेण तु न किञ्चित् करोति, इत्यस्य श्रीकबीरपद्यसंदर्भो विशदः। तत्संवादीनि वेदान्तवाक्यानि यथा—

---

(१) सर्व तन्त्र सिद्धान्तपदार्थलक्षणसंग्रहः पृ० १११।

(२) सिद्धान्तलेश सं० पृ० ८४। (३) बीजक रमैनी ३।

'ॐआत्मा वा इदमेक एवाग्र आसीन्नान्यत् किन्चन मिषत्-स ईक्षत् लोकान्नु सृजा इति[1] ।'

'सदेव सोम्येदमग्रासीदेकमेवाद्वितीयम्,' तदैक्षत बहुस्यां प्रजायेय इति तत्तेजोऽसृजत[2] ।'

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ।' इत्यादि
'सोऽकामयत, बहुस्यां प्रजायेयेति'[3] ।

(३) बद्धजीवस्वरूपम्

'द्वा सुपर्णा सयुजा सखाया'[4]

इति मन्त्रेण जीवेश्वरयो. स्वरूपे फलभ तृत्वा अभोक्तृत्वरूपे निरूपिते । अन्यच्च दृश्यते—

'भोक्ता भोग्यं प्रेरितारं च मत्त्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म-मेतत्[5] ।' 'नेतरोऽनुपपत्तेः[6] ।'

'भेदव्यपदेशाच्च[7]'

'इतर ईश्वरादन्यः संसारी जीव 'इत्यर्थः'

इदं वस्तं श्रीसद्गुरुकबीरेण ईदृशमुच्यते—

'वे उतङ्गः तुम जाति पतङ्गा, यम घर कियहु जीवको संगा[8]'

अत्र ईश्वरा उतङ्ग अर्थात् सर्वश्रेष्ठः, जीवश्च यमगृहनिवासं-अर्थात् बद्धः । इत्येवं च मन्त्रोक्तौ जीवेश्वरौ श्रीकबीरेण स्वीकृतौ । इदमेव तथ्यं 'भयादस्याग्निस्तपति[10]' इत्यादि मन्त्रेणाभिधियते । अर्थात्-ईश्वरः सर्वशक्तिमान्' इति ।

'सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम् ।
एतावान् ज्ञानविषयः किं प्रलापैः करिष्यति ॥
ये केचन समारम्भा ये जनस्य क्रिया क्रमाः ।
ते सर्वे देहयात्रार्थमात्मार्थं न तु किञ्चन ॥

(१) एतरेयोपनिषद्-१।१ । (२) छा० उ० ६।२।१-२ ।
(३) तै० उ०-२।१।-६ । (४) मु० उ० ३।१।१ ।
(५) श्वेता०उ०-१।१२ । (६) ब्रह्मसूत्र-१।१।१६ ।
(७) ब्र०सूत्र शां०भा०-१।१।१७ (८) ब्र० सू० शा० भाष्ये सूत्र १९ ।
(९) बी० रमैनी-११ । (१०) क० उ०-२।६।३ ।

इदं हेयमुपादेयमिदमित्यसदुत्थितौ ।
निश्चयौ गलितौ यस्य ह्यस्याऽसावतिदुर्लभः ॥
कस्तादृशो यस्य न सन्ति दोषाः ।
कस्तादृशो यस्य न दुःखदाहः[1] ॥

श्रीकबीरेणाप्युक्तम्—'जिन जिव कीन्ह आपु विश्वासा[2]' इत्यादि

'मन एव मनुष्याणां कारणं बन्धमोक्षयोः । विविधवासनामोहादिकलुषितेन मनसा जीवो बध्यते, तन्निवृत्तौ तु बन्धान्मुच्यते इति । मनसा द्वैतदृष्टौ भयं भवति, अद्वैतदृष्टौ तु न भयं न शोकादिकम् । 'द्वितीयाद् वै भयं भवति' इति, 'तत्र को मोहः कः शोक एकत्वमनुपश्यत. इत्यादि श्रुत्यादिश्चात्र प्रमाणम् । एव एव अद्वैतवेदान्तसिद्धान्तो वर्णितः श्रीकबीरेण यथा —

'सो वन देखत जीव डराना[3]' इति

अस्यार्थः—भ्रमसंशयादियुक्ताः जीवाः यदा जगद्रूपं द्वैतवनं दृष्ट्वा भीताः,तदा वैष्णवादिरूपेण शरीराभिमानिनो जीवाः स्वभिन्नमेकं देवं रक्षकं मन्यन्ते स्म । संगत्यादिकं साधनं विना सर्वात्मानं सद्गुरुं ते न विदुः, यस्य स्मृत्यादिना सर्वं भयं निवर्तते । ततोऽज्ञानकामादिपूर्वकं तद्भक्तिक्रियया तेषामेतादृशो दशा जाता । यथा कश्चित् कृषकः कृषिं करोति तस्य क्षेत्रे चाधिकोतृण उत्पद्येत, किन्तु तत्र अन्नकणोनोत्पद्येत तथैव तटस्थ देवभक्त्या सकामकर्मादिना च स्वर्गादौ देहरूपं क्षेत्रमुत्पद्यते । तथा देहात् पुत्रपौत्रादिरूपं धनराज्यादिरूपञ्च क्षेत्रमुत्पद्यते । तथापि तत्र आत्मज्ञान, मोक्ष, शान्ति, सुखस्वरूपा, अन्नकणान्नोत्पद्यन्ते इत्यर्थः । तत्सम्बन्धादीनि वेदान्तवाक्यानि यथा—

'इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वं भूतानि संमोहं सर्गे यान्ति परंतप[4] ? ॥'
गुरोरवज्ञया मृत्युर्मन्त्रत्यागाद् दरिद्रता ।
गुरुमन्त्रपरित्यागी सिद्धोऽपि नरकं व्रजेत[5] ॥'
'कृतस्य दातारमनुत्तमस्य निधिनिधीनामपि लब्धविद्याः ।
येनाद्रियन्ते गुरुमर्चनीयं पापांल्लोकांस्ते व्रजन्त्यप्रतिष्ठाः[6] ॥

(१) यो॰ वा॰ प्र॰-५ सर्ग ८ । (२) बीजक रमैनी ४३ ।
(३) बी॰ र॰—१२ । (४) गीता—७।२७ ।
(५) गुरु गीता । (६) महाभा॰ आ॰ पर्व—७६।६८ ।

'मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्[१] ॥
'योऽन्यां देवतामुपासतेऽन्योऽसावन्योऽहमस्मीति ।
न स वेद, यथा पशुरेवं स देवानाम्[२] ॥

यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किम् उ बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः[४]।' उक्तं सद्गुरुणा—

'भूलि परे जिव अधिक डराई[३]'

'कर्माणि दुःखोदकाणि कुर्वन् देहेन तैः पुनः ।
देहमभाजते तत्र किं सुखं मर्त्यधर्मिणः[४] ॥'
'द्वौ व्याधी देहिनो घोरावयं लोकस्तथा परः ।
याभ्यां घोराणि दुःखानि भुङ्क्ते सर्वेहि पीडितः ॥
स्वयं कर्म करोत्यात्मा स्वयं तत्फलमश्नुते ।
स्वयं भ्रमति संसारे स्वयं तस्माद्विमुच्यते[५] ॥'
'सुचिराभ्यस्तभावं तु वासना खचितं मनः ।
यत्र तत्र भ्रमत्स्वर्गनरकादि प्रपश्यति ।
स्वयं स्वप्न इवाभाति मृतस्य परलोक धीः ।
तमेव पश्यति चिरं न तत्राप्यस्ति सत्यता[६] ॥'

श्रीसद्गुरुकबीरेणापि कथितं—जस जिव आपु मिले अस कोई ।
बहुत धर्म सुख हृदया होई ॥ इत्यादि[७]।

अस्यार्थ—श्रीसद्गुरुसच्छास्त्रयोर्वाक्यानां सुश्रूषाऽभाव इदं कारणमस्ति । यदं जीवो यादृशोऽविवेकी व्यसनि भ्रान्तः कुमार्गी च भवति । तादृश एव कश्चिद् यदि तत्पार्श्वेआगच्छति तदा तस्य हृदये बहुलो धर्मः प्रकटीभूतः

---

(१) पञ्चदशी-११।११७ । (२) बृ० उ०-१।४।१० ।
(३) बी० रमैनी-१६ । (४) श्रीमद्भा०-११।१०।२९ ।
(५) योगवाशिष्ठ प्र० ६।२।३३।१० (१४३।४०) ।
(६) प्र० ६।२३।३८ ६।२।१४३।४३ । (७) बी० रमैनी १७ ।

प्रतीयते। धर्मस्य च फल सुखं भवति। तस्य सन्निधे यदि सर्वात्मारामस्य कथा क्रियते सा तस्मै न रोचते यदि कदाचित्कथंचिद्रोचत अपि तथापि चित्ते स्थिरा न भवति। अतस्ते गुरूपदेशादि कामनां हृत्य सर्वात्मारामं हृदगुहेशानं न भजन्ते। अन्यञ्च देवां भजन्त इति भावः।

एतस्य स्पष्टीकरणं कृतं सद्गुरुणा शब्दप्रकरणे यथा--

'कहहिं कबीर झूठहि झूठा, ठगहिं ठग व्यवहारा हो[1]' इत्यादि।

तत्संवादीनि शास्त्राणि—

'सर्वस्यैव जनस्यास्य विष्णुरभ्यन्तरे स्थितः
तत्परित्यज्य ये यान्ति बहिर्विष्णुं नराधमाः।
संत्यज्य हृद्गुहेशानां देवमन्यं प्रयान्ति वै
ते रत्नमभिवान्छन्ति त्यक्त्वा हस्तस्थ कौस्तुभम्[2] ॥'

किञ्च विषयाशक्ताः परं पदं न स्मरन्ति। यथा--

'शब्दस्पर्शादयो येऽर्था अनर्था इव ते स्थिताः।
येष्वासक्तस्तु भूतात्मा न स्मरेच्च परं पदम्[3] ॥'
'यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः।
न स तत्पदमाप्नोति संसारं चाधिगच्छति[4] ॥'

बद्धजीवस्यात्मदर्शने उपायः—

'भोगत्यागविचारात्मपौरुषान्नान्यद् हि।
उपयुज्यत इत्यज्ञाः स्वात्मैवासु प्रणम्यताम्[5] ॥'

तल्लक्षणं यथा---

'अद्भुत पंथ वरणि नहिं जाई, भूले राम भूले दुनियाई।
जो चेतहु तो चेतहु भाई, नाहीं तो जिव यम ले जाई[6] ॥

अत्र बद्धजीवस्य कर्त्तव्योपदेशः श्रीकबीरेण कृतः।

तत्सम्वादीनि शास्त्रवाक्यानि--

---

(१) बी० श० १७। (२) यो० वा० ५।८।१४-१५।
(३) मैत्रयण्युपनिषद्-४।२। (४) क० उ०-१।३।७।
(५) यो० वा०-५।४९।३५। (६) बीजक रमैनी-१८।

'अहन्यहनि भूतानि गच्छन्ति यममन्दिरम् ।
शेषाः स्थातुमिच्छन्ति किमाश्चर्यमतः परम्[१] ॥'
'समासक्तं यथाचित्तं जन्तोर्विषयगोचरे ।
यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात्[२] ॥'
'कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ।
तेऽपि मृत्युवशं यान्ति यावच्चन्द्रदिवाकरौ[३] ॥'

अयं भावः—अज्ञानीजीवो लोकद्वयभ्रष्टो भवतीत्येतद् दर्शितं श्रीकबीरेण शास्त्रे च, गुरुवेदान्तवाक्येषु विश्वासः कार्यः संशयो न कार्यः। यथा—

'संशयात्मा विनश्यति[४] ।

ज्ञानिनः स्वरूपं दर्शितं श्रीकबीरेण यथा—

'सन्तो समझे की मति न्यारी ।
निज दुःख सुख सम सबको जानै, आतम तत्त्व विचारी[५] ॥'

तत्रैवपद्ये—अज्ञानिनां शठानां स्वरूपं दर्शितं श्रीकबीरेण—

औरन को उपदेश दिढ़ावै, आप स्वतः नहिं मानै ।
मुख कछु और हृदय कछु औरहिं, कैसे रामहिं जानै ॥
औरन से कह मोह न कीजै, जो चाहो सुख भाई ।
माया मोह आप उरझाने, धिक ऐसी चतुराई[६] ॥' इत्यादि

बद्धजीवस्य दुःखयमयातनादि वारणार्थं उपदेशः कृतः—

'अब कहु रामनाम अविनाशी । हरि छोड़ि जियरा कतहुं न जासी ॥
जहां जाहु तहं होहु पतङ्गा । अब जनि जरहु समुझि विष संगा[७] ॥'

उक्तञ्च—शब्दादिभिः पञ्चभिरेवपञ्चपञ्चत्वमापुः स्वगुणेन बद्धाः ।

---

(१) महाभा० वनपर्व–२१३।१६ ।
(२) पञ्चदशी ११।११५ ।
(३) अपरोक्षानुभूति श्लो०–१६ ।
(४) गीता ४।४० ।
(५) श० मू० सि० पु० ४७–म० २२ ।
(६) बी० रमैनी–२० ।
(७) बीजक रमैनी ३० ।

'कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च[1] ।।'
अर्थात्--विषयसङ्गो विनाशाय इत्युपदेशः ।

बद्धजीवस्य धर्मः

'जीव शीव का आहि नशीना, चारो बद्ध चतुर्गुण मौना[2] ।।'

तत्सम्वादी वेदान्तवाक्यम्-

'सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ।।
मूढ ग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्[3] ।।'

'अब तो होई नरक महं वासा । निशिदिन रहहु लबारक पासा[4] ।।'

'इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषधं स्थानं सरूजं किं करिष्यति[5] ।।'

## (३) जीवस्यबद्धमुक्तयोर्भेदः

'सुस्मृति आहिं गुणन के चीन्हा । पाप पुण्य का मारग कीन्हा ।......

कहहिं कबिर ई पाखण्ड, बहुतक जीव सताव ।
अनुभव भाव न दरशये, जिअन न आपु रखाव[6] ।।'

उक्तञ्च शास्त्रेण—

'प्रत्यक्षञ्चानुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ।
आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः[7] ।।'
'न तच्छास्त्रं तु यच्छास्त्रं वक्ति हिंसामनर्थदाम् ।
यतो भवति संसारस्सर्वानर्थकपरम्परा ।

(१) विवेक चुडामणि ७८-७९ (२) बी० रमैनी-३० ।
(३) गीता-१७।१८-१९ । (४) बी० रमैनी—४४ ।
(५) यो० वा० ६।२।१०३ । (६) बीजक रमैनी ३२ ।
(७) मनुस्मृति १२।१०५-१०६ ।

सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
अमांसभक्षणे विप्रास्तच्च तच्च न तत्समम्[१] ॥'

अस्यायं भावः—अहिंसा मनः शुद्धिद्वाराऽऽत्मदर्शनसाधनं कर्त्तव्या ।
श्रीसद्गुरुणापि उक्तम् —

कहइत मोहि भैल युग चारी । समुझत नाहिं मोर सुत नारी[२] ।इत्यादि

अस्यार्थः—मोहभ्रमनिवृत्यै गुरुश्चतुर्षु युगेषूपदिशति, परन्तु लोका गुरुवाक्यानि नावबुध्यन्ते । किन्त्वज्ञानमोहादिवशाद् वदन्ति 'अयं मम पुत्र इयं मम प्रिया भार्या' इति । एतेषां सङ्गेन वंशप्रतिष्ठाद्वारा मम सुखं शान्तिश्च भविष्यतीति । किन्तु यथा वंशसंघर्षजन्मावह्निर्वंशान् दहति तथैवेते रागद्वेषादिभिः परस्परं जायमानैर्विनश्यन्ति । एतद् दृष्ट्वाऽप्यज्ञानोपहिता वंशादिसम्बन्धिनिव्यवहार एव प्रवर्त्तन्ते । अयमेव मोहस्य महनीयो महिमा इति । तत्संवादीनि वेदान्तवाक्यानि—

द्वयाक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्मशाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥
ये विरक्ता महात्मानो भोगभावनतानवम् ।
भावयन्त्यभवायान्त भव्या भुवि जयन्ति ते[३] ॥
इष्टं दत्तं तपोऽधीतं व्रतानि नियमांश्च ये ।
सर्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते[४] ॥
'न स पुनरावर्तते'[५]
'तेषां न पुनरावृत्तिः'[६]
'यद् गत्वा न निवर्तन्ते'[७]
तस्माज्ज्ञानेन शुद्धेन प्रशान्तात्मा जितेन्द्रियः ।
निर्ममो निरहङ्कारो मुच्यते सर्वपापभिः[८] ॥

---

(१) ब्रह्मवैवर्त पु० १०७ । ६६-६७ । (२) बी० रमैनी ५० ।
(३) योगवाशिष्ट (४) महाभा० अश्वमेधप० ४४।२१ ।
(५) छा० उ० ८।१५ । १ । (६) बृ० उ० ६।२।७५ ।
(७) गीता १५।६ । (८) यो० वा० ४।५।७।३५ ।

अर्थात्-ममत्वत्यागद्वारा जीवो ज्ञानं प्राप्यामर्त्यो भवति। तृष्णायां दोषाः श्रीसद्गुरुकबीरेणोक्तम्—

मन की बात है लहर विकारा। ते नहि सूझै वार न पारा[1] ॥

क्षणमुल्लाससमायाति, क्षणमायाति शून्यताम्।
जडा विह्वलयत्याशु तृष्णा प्रावृट्-तरङ्गिणी ॥
दृष्टदैन्यो हतस्वान्तो हतो जायाति नीचताम्।
मुह्यते रौति पतति तृष्णयाऽभिहतो जनः।
न स्थिरा कोटरे यस्य, तृष्णकृष्णभुजङ्गमी।[2]
तस्य प्राणानिलाः स्वस्थाः, पुंसो हृदयरन्ध्रगाः ॥

तृष्णाया मुक्तः पुरुषः संसारं तरितुं समर्थः। ज्ञान्यज्ञानिजीवस्वरूपमुक्तं श्रीकबीरेण—

"बहुतक साहस करहु जिय अपना। तिहि साहब सो भेंट न सपना।
साखी—झीं झीं आशा मह लगे, ज्ञानी पण्डित दास।
पार न पावहिं वापुरे, भरमत फिरहिं उदास ॥[3]

अस्यार्थः—सत्सं।सद्गुरूपदेशं विना यदि स्वेच्छया स्वविचारेण च यान् साहसपूर्वकान् यत्नान् त्वं द्वन्द्वदुःखनिवृत्तये करोषि, तथापि यस्य जगत्प्रभोः संगपरिचयाभ्यां सद् दुःखमप्रतीकार्यं निवर्तते, तस्य प्रभोः प्राप्तिः स्वप्नेऽपि न भवति। यत आत्मानात्मविवेकं विना सच्चिदानन्दरूपस्य स्वस्वरूपभूतस्य ब्रह्मणः प्राप्तिर्न भवति। ते खल्वविवेकिनस्सूक्ष्मस्थूलयोर्द्वयोरपि मिथ्यात्वानात्मत्वबुद्धिं विनाऽऽशाकामादिग्रन्थीन् आत्मबुद्धिविरोधिनो न छिन्दन्ति। अनेन प्रकारेण स्वापराधवशादेव सर्वं जीवनं निष्फलं भवति अतो यौवनकाले ये कामादियुक्ता व्यवहरन्ति तेऽन्तकाले स्वापराधमेव स्मरन्ति न तु केनचित्कारितमपराधम्। अतः कामाद्यपराधान् सर्वान् त्यक्त्वा जगत्प्रभुणा भगवता सह परिचयः कर्तव्यः। तत्परिचयोपायश्च सर्वाशाकामादिपरित्यागः। सत्संगो, गुरुभक्तिश्चेति। एतैस्साधनैर्विना सर्वे नाना योनिषु दुःखमाप्नुवन्तो भ्रमन्ति। तत्संवादीनि शास्त्रवाक्यानि यथा—

---

(१) बी० र० २०। (२) यो० वा०, उ० प्र० ६।१५।९-११।
(३) बीजक रमैनी १०।

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
जघ्न्यमानाः दन्द्रम्यमाणः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः[१] ॥

एतः च्छ्रुत्वा सम्परिगृह्यामर्त्यः प्रवृह्यचधर्म्यमणुमेतमाप्य ।
स मोदते मोदनी यं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये[२] ॥

कामक्रोधादिसंसर्गादशुद्धं जायते मनः ।
अशुद्धे मनसि ब्रह्मज्ञानं तच्च विनश्यति ॥
दिशा मोहो यथा लोके विदुषामपि जायते ।
आनन्दात्मनि सन्मोहो विदुषामेवमस्त्यपि ॥
कामक्रोधो तु सर्वस्य हृदि जन्तोः प्रतिष्ठितौ ।
हित्वा ब्रह्मविदं त्वित्थं गुरुशास्त्राच्छ्रुतं मया[३] ॥
न प्रीतिर्विषयेष्वस्ति प्रयानात्मेति जानताम् ।
कुतो रागः कुतोद्वेषः प्रतिकूलमपश्यतः ॥
तेनाधीतं श्रुतं तेन तेन सर्वमनुतिष्ठितम् ।
येनाशां पृष्ठतः कृत्वा वैराग्यमवलम्बितम्[४] ॥

अयं भावः—सर्वं त्यक्त्वा आशापाशं हित्वा च ज्ञानार्थं यतनीयम् ।
शास्त्रज्ञ-मूर्खं स्वरूपमुक्तं श्रीसद्गुरुकबीरेण यथा—

अन्ध सो दर्पण वेद पुराणा, दर्वी काह महारस जाना ।
जस खर चन्दन लादे भारा, परमल वास न जानु गमारा।[५]

शास्त्राण्यधीत्याऽपि क्रियां विना शास्त्रज्ञा मूर्खाः । तदर्थवादीनि वाक्यानि यथा—

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति[६] ॥
अधीत्य चतुरो वेदान् सर्वशस्त्राण्यनेकशः ।
ब्रह्मतत्त्वं न जानाति दर्वीपाकरसं यथा ।[७]

---

(१) मु० उ० १।२।८, क० उ० १.२.५ । (२) कठोपनिषद् १।२।१३ ।
(३) आत्मपुराण ७।१६५।२९१ । (४) इतिहाससमुच्चय १०।४७ ।
(५) बीजक रमैनी ३३ । (६) चाणक्य नीति । (७) मुक्तिकोपनिषद् ६५ ।

स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान्[१] ॥

शास्त्राणि अन्धस्य कृते दर्पणवद् व्यर्थानि ।

यथा खरश्चन्दनभारवाही, भारस्य वेत्ता न तु चन्दनस्य ।
तथैव विप्राः षट्शास्त्रयुक्ता मद्भक्तिहीनाः खरवद्वहन्ति[२] ॥

स्वरूपानुसन्धानव्यतिरिक्तान्यशास्त्राभ्यास उष्ट्रकुङ्कुमभारवद् व्यर्थः[३] ।

ज्ञानिस्वरूपम् यथा—'ज्ञात्वा देवं सर्वपाशापहानिः[४] ।

जीवस्य स्वस्वकर्ममाहात्म्यं प्रदर्शितम् ते स्वकर्मणा हि सिद्धि विन्दति । यथा—

क्षत्री करे क्षत्रिया धर्मा । सवाई वाको बाढै कर्मा ।
शून्य सनेही राम विनु चले अपन पौ खोय ।
मनमथ मरै न जीवई, जीवहिं मरण न होय[५] ॥

यत्तु शून्यवादिनः शून्यमेव मोक्षस्वरूपं वदन्ति तन्न, 'जीवहिं मरण न होय' इति वाक्यविरोधात् ।

जीवस्यासदाचारफलम्—

वेद की पुत्री स्मृति भाई सो जेवरी कहँ लेतही आई ।
आपुहि वरि आपन गर बन्धा, झूठी मोह काल को फंदा ।[६]

इत्यादि । तत्संवादीनि वाक्यानि यथा—

नाचरेद् यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः[७] ॥
न रणे विजयाच्छूरोऽध्ययनान्न च पण्डितः ।
न वक्ता वाक्पटुत्वेऽपि न दाता चार्थदानतः ॥
इन्द्रियाणां जयाच्छूरो धर्मं चरति स पण्डितः ।
हितप्रायोक्तिभिर्वक्ता दाता सम्मानदानतः[८] ॥
जीवन्तम्मृतवन्मन्ये देहिनं धर्मवर्जितम् ।
मृतो धर्मेण संयुक्तो दीर्घजीवी न संशयः[९] ॥

---

(१) मुक्तिकोपनिषद् २।६५–६६ । (२) श्रीमद्भागवते
(३–४) संन्योसापनिषद् २।५९ । (५) बीजक रमैनी ८३ ।
(६) बीजक रमैनी ३४ । (७) छा० उ०
(८) व्याससमृतिः ४।५९–६० । (९) [illegible] ।

जीवन्मुक्तस्तु निष्कामो न मृतिं प्रतिपद्यते ।
प्राणोत्क्रान्तिर्मृतः सा तु ज्ञानिनो न हि विद्यते[1] ॥

अन्यत्र च—कामबन्धनमेवैकं नान्यदस्तीह बन्धनम् ।
कामबन्धविमुक्तो हि ब्रह्मभूयाय कल्प्यते[2] ॥

'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः[3] ।'

'अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी ।'

नात्मा जीव उत्पद्यत इति । कस्मात् ? अश्रुतेः । न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयः सुप्रदेशेषु । ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तम् । सत्यमुक्तम् । उत्पत्तिरेव त्वस्य न सम्भवतीति वदामः । 'कस्मात् ? नित्यत्वाच्च ताभ्यः[4] ।' 'न जीवो म्रियते' इति श्रुतिः ।

अन्यत्र च—'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति ।'

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति[5] ॥

'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म[6] 'इत्यादि आज्ञानात्संसार इति प्रदर्शनम् । यथा— 'भंवर उठे वक बैठे आई ।............
हल हल कांपे बाला जीवा । नहिं जानो का करि हैं पीवा[7] इत्यादि ।

को गृहेषु पुमान् सक्तमात्मानमजितेन्द्रियः ।
स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥
कोऽन्वर्थतृष्णां विसृजेत प्राणेभ्योऽपि य ईप्सितः ।
यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करस्सेवको वणिक्[8] ॥

---

(१) अनुभूतिप्रकाश (२) सुरेश्वराचार्य वार्तिक ।
(३) ब्रह्मसूत्र २।३।१७ । (४) तत्रैव शांकरभाष्य २।३।१७ ।
(५) गीता २।१७ । (६) बृ० उ० ४।४.२२ ।
(७) बीजक शब्द ६२ । (८) श्रीमद्भागवत–

अविकारि भगवत्स्वरूपं जीवान् प्रति कथयति स्म—

'चातक कहां पुकारे दूरी, सो जल जगत रहा भरी पूरी।……
……सो जल भेद न जानु कबीरा'[1] ॥ इति

अस्यार्थः—हे नराः यथा चातका दूरस्थं गगने जलमाकाङ्क्षन्त अन्तिकस्थन्तु भूमिष्ठं जलं नाभिलषन्ति, तथा यूयं कस्माद् दूरस्थं तीर्थादौ हरिं द्रष्टुं वाञ्छथ, अन्तिकस्थं तं न जानीथ। यस्य लाभादक्षया तृप्तिर्भवति, पुनः संसारो न भवति, स हरिः सर्वत्र वर्तते अन्तिकेऽपि वर्तते। येऽन्तिकस्थं हरिं सर्वस्येशानं जानन्ति तेषां कदापि ग्लानिः संशयो वा तत्स्वरूपविषयको न जायते। हरेरेव सर्वेषां नादानां बिन्दूनाञ्च भेदा जायन्ते। तत एव च वेदाः कर्माणि च जज्ञिरे। तस्मिन्नेव हरौ जीवानामीश्वराणां च स्थितिर्वर्तते। स एव हरिर्देवलोके पृथिवीलोके च व्यापकत्वात् प्रकाशते। यस्माद्धरेः सर्गादौ सर्वाणि शरीराण्युत्पन्नानि तं हरिं जनान् विदन्ति। इति।

तत्सम्वादीनि वाक्यानि यथा—

य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते एतद्वै तत्[2] ॥
सर्वात्मनि संपश्येत् सच्चासच्चसमाहितः।
सर्वं ह्यात्मनि संपश्यन्नाधर्मे कुरुते मनः॥
आत्मैव देवतासर्वास्सर्वमात्मन्यवस्थितम्।
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्[3] ॥
अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्[4] ॥

'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति'[5] इत्यादि।

जीवो वस्तुतो निराकारो निर्गुणः सच्चिदानन्दरूपः। अविद्यया तु देहगेहादौ बद्ध इति प्रदर्शितं कबीरेण। यथा—

---

(१) बीजक शब्द ८७। (२) क० उ० २।१।५।
(३) मनुस्मृति अ० १२। (४) पञ्चदशी। (५) तै० उ० २।७।

पांच तत्व लै या तन कीन्हा, सो तन का लै कीन्ह।
कर्म हि कै वश जीव कहत हैं, कर्महिं कहं जीव दीन्ह[1] ॥

तत्संवादिवेदान्तवाक्यं यथा —

प्राक्तनं गुणसंभारं ममेति बहु मन्यते।
यत्तु चित्तमतत्त्वज्ञं दुःखितं जीव उच्यते ॥
आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः।
घटाकाशवच्च संघातैर्जातावेतन्निदर्शनम्[2] ॥

साखी-जाग्रत रूपी जीव है शब्द सोहाग श्वेत।
जलद बुन्द जल कूकुड़ी, कहहिं कबीर कोई देख[3]।

अस्यार्थः - नित्य जाग्रत्स्वरूपोऽयं जीवात्मा चित्स्वरूपतः।
आपातरमणीयाश्च शब्दादिविषया इमे ॥
क्षारद्रव्यस्य संसर्गाद्यथा लौहं विलीयते।
अकृतात्मा तथा तेषां संगात्प्रच्यवते स्वतः ॥
जले जलदविन्दूनां पाते बुद्बुद्सन्ततिः।
यथा तद्वदिदं विश्वं पश्यन्ति वै विवेकिनः[4] ॥

तत्संवादीनि शास्त्रवाक्यानि यथा –

पश्य भूतविकारांस्तान् भूतमात्रान् यथार्थतः।
तत्क्षणाद् बन्धनिर्मुक्तस्स्वरूपस्थो भविष्यति[5] ॥
नाहं देहो न मे देहो बोधोऽहमिति निश्चयी।
कैवल्यमिव सम्प्राप्तो न स्मरत्यकृतं कृतम्[6] ॥

श्रीसद्गुरुकबीरस्य जीवविषयकः सिद्धान्तः —

'यन्त्री यंत्र अनुपम बाजै ··· ··· ···
··· ··· ··· जिन यंत्री मन लाया[7] ॥

अस्यार्थः —हे यन्त्रिन् देहरूपयन्त्रवज्जीवः तवेदं देहरूपं वीणा यन्त्रम-

---

(१) बीजक साखी २३।    (२) मा० उ० का० ३।३।४।
(३) बीजक साखी २८।    (४) बीजक सं० टीका पृ० ७६७
(५) महाभारत [illegible] (६) अष्टावक्र गीता [illegible] (७) बीजक [illegible]

द्भुतं नदति । यतो लोके वीणायन्त्रं वादकाद्बहिर्भवति । त्वन्तु स्वदेहरूपस्य वीणायन्त्रस्यान्तर्बहिस्सर्वासु दिक्षुसर्वस्मिन्नाकाशे सर्वेषां मुखेषु स्थित्वा इदं यन्त्रं वादयसि । त्वमिदं यन्त्रमादाय सर्वेषु लोकेषु गच्छसि । एकस्मिन् शब्दे प्रणवरूपे सर्वेषां शब्दानां मूलभूते सर्वशब्दरूपविकारात्मतामश्नुवाने षट्त्रिंशतो रागाश्नानाहतञ्च शब्दं त्वमेव वदसि । एतादृशं तव रूपं सर्वव्यापकाद् रामाद् भिन्नं नास्ति । अतस्तवेदं रूपमद्भुतम् । अस्मिन् देहरूपे वीणायन्त्रेमुखमेव नालम् । श्रवण एव तुम्बिको अन्यच्चास्य सर्वं साधनं सर्वज्ञः श्रीसद्गुरुरीश्वर एव निर्मितवान् । सूक्ष्मशरीररूपम्, अस्मिन् जिह्वैव तन्त्रीताररूपा, नासिका च यन्त्रस्य नागदन्तिका लग्नो । माया च ममता रूपा अस्मिन् यन्त्रे क्षौद्रविकृतिकृता । तया मायया प्रेरितोऽयञ्जीवस्सदा ऋजुर्भूत्वा बहिर्याचमानो भ्रमति । एतद् यन्त्रद्वारा च भिक्षाप्रदातृणां रञ्जनार्थं बहिर्गीतानि गायति । बाह्यविषयज्ञानार्थमेव च भगवता इन्द्रियाणि विरचितानि । कश्चिद् धीरो यदि सर्वा इन्द्रियवृत्तिविषयेभ्यो निरुध्य अन्तर्मुखीकरोति, तस्य हृदयाकाशे महान् प्रकाशो ( आत्मज्ञान ) ब्रह्मरूप उदेति । ये इन्द्रियाणि बाह्यविषयेभ्यो निरुध्य विषयानुभवञ्च परित्यज्य निजात्मनि मनस्समाहितवन्तस्ते विवेकिनस्संजाताः । अत आत्मचिन्तनं कर्तव्यमिति भावः ––

'सर्वाजीवे सर्वस्थे बृहन्ते, अस्मिन्हंसो भ्राम्यते ब्रह्मचक्रे ।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति[1] ।।'
'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं प्रसृतं ब्रह्मैवेदं विश्वं वरिष्ठम्[2] ।।'
'स इह प्रविष्ट आनखाग्रेभ्यः[3] ।'
चिद्धातुर्यत्र यत्रास्ते तत्र तत्र निजं वपुः ।
पश्यत्येष जगद्रूपं व्योमतामेव चात्यजत् ।।
सर्वत्र विद्यमानोऽपि देहेषु तरलायते ।
सर्वगोऽप्याऽऽतपः सौरो भित्यादौ वै विजृम्भते[4] ।।

(१) श्वेता० उ० १।६ ।
(२) मु० उ० २।२।११ ।
(३) बृ० उ० १।४।७ ।
(४) योगवासिष्ठ

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया[1] ॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥
सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते[2] ।

'य आत्मनि तिष्ठन्'[3]
'आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च[4] ॥'

जीवस्य सततं हरिध्यानपरत्वं मोक्षोपाय इति रूपकमुखेन प्रदर्शनम् ।

'जोल्हा बीनहूं (हो) हरिनामा ··· ·· ··· ···
··· ··· ··· ··· कबीरा ज्योति समाना[5] ।'

तत्सम्वादीनि वेदान्तवाक्यानि यथा —

'सर्वभावपदातीतं सर्वभावात्मकं च वा ।
यः पश्यति सदात्मानं स समाहित उच्यते ॥
मनागपि विचारेण चेतसस्वस्य निग्रहः ॥
मनागभिकृतो येन तेनाप्तं जन्मनः फलम् ॥
विचारकणिका येषां हृदि स्फुरति पेलवा ।
ऐषैवाभ्यासयोगेन प्रयाति शतशाखताम् ॥
मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव ।
भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥
त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज[6] ॥'

---

(१) गीता १८।६१, ३।१७ । (२) ऋ० वे० सं० ६।९।११ । गीता १५।१५ ।
(३) शतपथब्राह्मण ११।३१।१ । (४) क० उ० ११३।१३ ।
(५) बीजक शब्द ८८ । (६) योगवाशिष्ठ ।

जीवस्य विवेकविज्ञानोपदेशः—

'कहुहो अम्बर कासो लागा[१]'

तत्संवादीनि वाक्यानि यथा—

'व्यापकं सर्वतो व्योम मूर्त्तैं सर्वैर्वियोजितम् ।
यथा तद्वदिहात्मानं विद्याच्छुद्धं परं पदम्[२] ॥
'येनावृत्तं नित्यमिदं हि सर्वज्ञः कालकालो गुणी सर्वविद्यः[३] ।
"एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्[४] ॥

'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रमति मृत्यो रूपाणि[५] ।

'वृद्धयादीनां स्वरूपं यो विविनक्ति स तत्त्ववित् ।
स एवमुक्त इत्येवं वेदान्तेषु विनिश्चयः[६] ॥

## श्रीसद्गुरुद्वारा जीवसंबोधनम्

'ये जियरा तैं दुःखहिं सम्भारू……… ।
……अस्ति……निरस्ति न होय[७] ॥

अस्यार्थः—हे जीव, त्वमात्मानमात्मनात्मविवेकरूपं साधनं संपाद्य तस्माद् दुःखाद् गर्भवासादिरूपादात्मानं रक्ष । यद्दुःखं सर्वत्र जगति व्याप्तमस्ति । मायाजनितेन मोहेन सर्वोऽपि जनो बद्धः । अल्पविषयोपभोगसुखलोभेन स्वरूपानन्दसुखरूपं मूलधनं विनाशितं सर्वैः । 'इदं मम' 'इदं तव' इति माया प्रयुक्तया भावनया सर्वापि विपत्तिरागच्छति । अनयैव भावनया जननी गर्भे शयनं जीवस्य भवति, तदन्तरं जन्मप्राप्य जीवो विविधं क्रीडानन्दमनुभवति । कदाचिच्च दुःखाद् अत्यन्तं रोदति । बहूनिरूपाणि धारयति, निर्द्वन्द्वः कदाऽपि न भवति

(१) बीजक शब्द ९४ ।
(२) योगवाशिष्ठ ।
(३) श्वेत० उ० ६।२ ।
(४) ब्रह्मबिन्दूपनिषद् ॥
(५) बृ० उ० ४।३।७ ।
(६) पञ्चदशी ८।५८ ।
(७) बीजक रमैनी ८४ ।

बाल्यावस्थामारभ्यैव हर्षशोकादिभिर्द्वन्द्वैरभिभूतो भवति । एवं द्वन्द्वजातमनुभवन् पुनरशासक्ता भ्रमरा इव विषयासक्ता बहुशो मृता, अद्यापि जायन्ते म्रियन्ते च । विरलाः परमहंसा एवं विवेकिनो जन्मादिबन्धाद् विमुच्यन्ते । विषयासक्तास्तु भ्रमरतुल्या मानवा पुनः पुनर्जायन्ते म्रियन्ते च । एवं जन्मादिजन्यानि दुःखानि इष्टवियोगादिजन्यं संतापम्, गमनागमनदुःखानि नरकादि अनुभवन्ति यमयातनाश्चानुभवन्ति । सत्यस्यात्मसुखस्य लेशमात्रमपि न लभन्ते । किन्तु आध्यात्मिकाधिभौतिकाधिदैविकभेदभिन्नं दुःखत्रयं सदाऽनुभवन्ति । यतः एभिः सत्यो धर्मः सद्गुरुः सत्यं ज्ञानम्, सत्य आत्मानं लब्धः । यल्लाभेनास्य तापः शान्तः स्यात्, आत्मानश्चायमवबुध्यते इति ॥ तत्संवादीनि वेदान्तवाक्यानि, यथा—

पूर्वमिष्टमनिष्टं स्वमनिष्टञ्चेष्टामित्यपि ।
परिकल्प्य तदभ्यासात्ततोऽपि तत्परिज्यज ॥
ये विरक्ता महात्मानो भोगभावनतानवम् ।
भावयन्त्यभावायान्तर्भव्या भुवि जयन्ति ते ॥'[1]
न देहिनं सुखं किंचिद्विद्यते विदुषामपि ।
तथा च दुःखं मूढानां वृथाहंकरणं परम्[2] ॥'
'न तदस्ति न यत्सत्यम्, न तदस्ति न यन्मृषा ।
यद्यथा येन निर्णीतं तत्तथा तं प्रति स्थितम्[3] ॥'
'स्वप्नजागरितस्थानं ह्येकमाहुर्मनीषिणः ।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥[4]'
'एक शत्रुर्न द्वितीयोऽस्ति शत्रुरज्ञानतुल्यः पुरुषस्य राजन् ।
येनाविष्टः कुरुते कार्यं ते च घोराणि कर्माणि सुदारुणानि[5] ॥'

अज्ञानमेव पुरुषस्य परमः शत्रु सर्वनाशकत्वात् भवति । अज्ञानात्संसारः, परतत्त्वज्ञानान्मोक्ष इति सिद्धान्तप्रदर्शनम् । यथा—

(१) बी० र० व४ श्लि० टीका । (२) श्रीमद्भा० स्क० ११।१०।१८ ।
(३) यो० वा० पृ० ८६ । नि० प्र० उ० सर्ग ९६ ४१ ।
(४) मा० उ० का० २५ । (५) श्रीमद्भा० ११।१०।१८ ।

'देखि देखि जिव अचरज होई।
यह पद बूझे बिरला कोई' ॥[1]......इत्यादि

अस्यार्थः– शास्त्राणि विविधानि बुध्वा भ्रमतो जीवान् दृष्ट्वा मनस्याश्चर्यं भवति। यत इमे परोक्षं तत्वल्लोकरूपां मुक्तिं कामयन्ते। अपरोक्षं निजात्मरूपं पदन्तु केचिदेवं विजानन्ति। इत्मात्मतत्त्वमज्ञात्वा सर्वे कर्मिणो मनुष्या भूतलादुपरिस्वर्लोकमाकाशस्थितं गच्छन्ति। तथा अज्ञायोगिनोपि मनः प्राणां च नियम्य स्वर्गादिलोकमेव गच्छन्ति। केचिच्छून्यशब्दाद्युपासका आकाश एव लीयन्ते। ईदृशा नरा मनोरूपायाः पिपीलिकाया वासनारूपे मुखे हस्तीभूत्वा प्रविशन्ति। अत एव पर्वतनतुल्यस्थिरधारणावन्तोऽपि योगिनः तपस्विजनाश्च तुच्छविषयवायुवेगेन माया कार्यं मनोवेगेन च उड्डीयन्ते। एतस्मिन् संसारे सर्वे जनाः स्वर्गादिलोकानेवारुरुक्षन्ति! तथैव च स्थिरा भवितुमिच्छन्ति। तत्र च प्रबलो विषयवातो वर्तते इत्यपि मन्वत इत्येतदाश्चर्यम्। योगिनश्च प्राणान् निरुध्यदशमद्वारं प्रविशन्ति। ते चात्मानुभवमप्राप्ताः नाना विधासु सिद्धिष्वासज्जन्त इत्येतदाश्चर्यम्। स्वर्गे चाज्ञानानां कर्मिणां योगिनाञ्च विषयानन्दतरङ्गा उत्तिष्ठन्ति। किञ्च सत्यसुखरूपं जलं विनैव तत्र चक्रवाकरूपा देवास्तत्र विहरन्ति। अनात्मज्ञाः पण्डिता अपि गेहादेहादिष्वासक्ताः पुराणानि पठन्ति। परोक्षञ्च स्वर्गलोकं व्याचक्षते। तच्च श्रुत्वा अन्ये स्वर्गादिरूपमिथ्याफलेच्छुका भवन्ति। परमात्मानञ्च न वाञ्छन्ति। तत्र श्रीसद्गुरवः वदन्ति ये विवेकिनःसत्संगं, गुरुसेवां विचारं हरिभक्तिप्रभृतीनि च साधनान्याधारीकृत्येममपरोक्षं सर्वाधारं रामं विजानन्ति। मिथ्याभूते संसारे चासक्तिरहिता रागद्वेषादिविरहिताश्च व्यवहरन्ति, त एव प्रमाणिकाः सन्तः। यतस्तऽस्ति भाति प्रियमित्येतद्रूपैर्भासमानमात्मानं सर्वस्य साक्षिभूतं सत्यानन्दस्वरूपमुपदिशन्ति। इति।

सत्संवादीनि वाक्यानि वेदान्ते यथा—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततानामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः[2]॥

(१) बीजक शब्द १११। (२) गीता–७।३।

अज्ञानात्कर्म-कर्मणश्च संसारस्तद्यथा—

न कर्तृत्वन्न कर्माणि लोकस्य सृजति प्रभुः।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते॥
नादत्ते कस्यचित्पापन्न चैव सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः[१] ॥ इति

अज्ञानेन पुरुषस्य स्वरूपंतिरोहिम्। अतो जीवाः कष्टमनुभवन्ति।

## (४) प्रपञ्चस्य मिथ्यात्वम्

प्रपञ्चंनाम संसार स्च चानिर्वच्यत्वेनमिथ्याभूतायाःमायायाः परिणामः। अतस्तस्य परिणाम्युपादानं माया, माया च मिथ्या इत्युपादानोपादेययोस्सा-जात्येन प्रपञ्चोपि मिथ्या। ब्रह्मणस्तु विवर्तः प्रपञ्चस्तत्र माया निमित्तकारणं, ब्रह्म तु विवर्तोपादानम्। तात्त्विकोऽन्यथाभावः परिणामः, अतात्त्विकोऽन्यथाभावो विवर्त इति वेदान्तडिंडिमः। मतद्वयेऽपि माया कार्यत्वेन प्रपञ्चस्य मिथ्यात्वम्।

तत्र प्रपञ्चमिथ्यात्वविषये श्री कबीरस्य सूक्तयः प्रदर्श्यन्ते तासां संवादीनि वाक्यानि च। तद्यथा—

'पूछे कोई सन्त सुजान अन्देशा ··· ··· ···
या नगरी कोई रहन न पावै, भय चिन्ता दुःख खानी[२]। इत्यादि।

वेदान्तवाक्यानितुकठोपनिषदिबहूनि यमनचिकेतससम्वादरूपाणि सन्ति। श्री डा० गोविन्दत्रिगुणायतेनोक्तम्—'जिज्ञासु कबीरस्य दशा नचिकेतसो न्यूना नासीत्[३]' स तद्वदेव सर्वं परित्यज्य परतत्त्वस्यान्वेषणाय गच्छति स्म। तद्यथा—

'न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्मचेत्वा[४]'

इत्यादिभिः नचिकेतसा विचारितंसर्वंवस्तुमृत्युसमयेऽस्मिन् संसारे त्यक्त्वा जीवेन गम्यते। धनादिकं स्वजनरक्षणोपभोगसमये च दुःखरूपमस्ति। अतो दुःखरूपलोकपरलोकयोःसुखं किम्? सर्वं मायिकम्। अत एव नाशवदिति। अर्थात् निखिलप्रपञ्चो मिथ्यात्वेन ज्ञायते।

---

(१) गीता ५।१४-१५। (२) शब्दामृ०सि०पृ० ४७ भ० २१।
(३) कबीर की विचारधारा, पृ० १७५।(४) कठोपनिषद् १।१।२७।

श्रीकबीरेणापि बहुधा विचारितम्, सम्पूर्णप्रपञ्चोऽज्ञानदृष्ट्याऽवलोकितः ततः कथितवान्—

हम घर जारा (जाल्या) आपना, लूका लीन्हा हाथ।
वाहू का घर फूंक दूं चले हमारे साथ[1]॥

अत्र गृहं शरीरमिति ज्ञातव्यम्। अतःसर्वो मायिकः प्रपञ्चो दुःखमय इति विचारितं नचिकेतसा—

अजीर्यताममृतानामुपेत्यय जीर्यन्मर्त्यः क्वधःस्थः प्रजानन्।
अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत[2]॥

अजरा अमराश्च देवाः तेषां समीपं प्राप्तो जरामरणधर्मवान् मनुष्यो ब्रह्मजीवयोर्धर्मभेदं विजानन् विषयोपभोगे दुःखानि च विजानन्नतिदीर्घे जीविते को रमेत इत्यर्थः। उक्तञ्च श्रीकबीरेण—

अलपे सुख दुःख आदिहुं अन्ता, मन मुलान मैगर में मन्ता।
सुख विसराय मुक्ति कहं पावै, परि हरि सांच झूठ कहं धावै[3]॥

इत्यादि तद्वद्वेदान्तवाक्यानि—'नाल्पे सुखमस्ति[4]'
'नाकस्य पृष्टे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति[5]।'
अत्राज्ञानिनां गत्यातिगतिरूपादुःखरूपा च संसारगतिर्वर्णिता। अन्यत्र च—

'मन्ये मायेयमज्ञानं यत्सुखं स्वजनादपि।
निदाघवारणायालं निजच्छाया न कस्याचित्॥
निर्विवेकतया वाल्यं कामोन्मादेन यौवनम्।
वृद्धत्वं विकलत्वेन सदा सोपद्रवं नृणाम्॥'[6]
'कृमिभिः क्षतसर्वाङ्गस्सौकुमार्य्यात्प्रतिक्षम्।
मूर्छामाप्नोत्सुरुक्लेशोस्तत्रत्यैः क्षुधितैर्मुहुः[7]॥'
निष्क्रामन् भृशदुःखार्तो रुदन्नुच्चैरधोमुखः।
यन्त्रादिव विनिर्मुक्तः पतत्युत्तानशाटयथ[8]॥

(१) साखी ग्रन्थ पृ० ७७८ सा० ८। (२) कठोपनिषद् १।१। २८।
(३) बीजक रमैनी २३। (४) छा० उ० ७। २४। १।
(५) मु० उ० १।२। १०। (६) बी० यु० टी० पृ० ८५।
(७) श्रीमद्भा० ३।३१ ६ ८। (८) वृ० उ० सुरे० वार्तिक १।१८९।

अत्र बान्धवसम्पर्केसुखाभिमानोऽज्ञानादिति बाल्ये च विविधानि दुःखानि वैराग्याय वर्णितानि।

"हमारे मन कब भजिहों गुरू (हरि) नाम।
बालापन जनमत ही खोयो, ज्वानी में व्यापा काम।
वृद्धभये तन कांपन लागे, लटकन लागे चाम"[1]॥ इत्यादि

मनागपि विचारेण चेतसस्स्वस्य निग्रहः।
मनागपि कृतो येन तेनाप्तं जन्मनः फलम्॥
सम्यग्विचारिणं प्राज्ञं यथा भूतात्रलोकिनम्।
आसादयन्त्यपि सफलानविद्या विभवा भृशम्[2]॥

विचारेणाविद्यानिवृत्तिरित्यत्र प्रदर्शितम्। ततः प्रपञ्चोपरम तदनन्तरं मुक्तिरिति ज्ञायते। यथा श्रीसद्गुरुकबीरेणोक्तम्—

चन्द्र चकोर अस बात जनाई, मानुष बुद्धि दीन्ह पटलाई॥
चारि अवस्था सपने कहई। झूठो फूरो मानत रहई॥
मिथ्या बात न जानै कोई। यहि विधि हि सब गेल विगोई[3]॥
बुद्ध्वाप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः।
बध्नाति भावनां भूयो नरो नासौ स गर्दभः[4]॥
'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्[5]॥'

श्रीसद्गुरुकबीरेणोक्तम्—

रहना नहि देश विराना है।
यह संसार कागज की पुड़िया, बुन्द पड़े घुल जाना[6] है।

अर्थात् निखिलप्रपञ्चं मिथ्यारूपं मायिकं तेषां ममता न कर्तव्या। यथा—

मम माता मम पिता मम भार्या ममात्मजाः।
ममेदमिति जन्तूनां ममता बाधते वृथा॥[7]

चेत सवेरा चलना बाट, यह जग देखा झूठा ठाट[8]। इत्यादि

(१) श०मृ०सि०पृ० १४७ भ० ३। (२) योगवा० ५।९३।४-५।
(३) बीजक रमैनी २४। (४) यो० वा० ५।८।१९।
(५) छा० उ० ६।१।३। (६) श० मृ० सि० पृ० ५० भ० ३०।
(७) नारदीयपु० ३७।४१। (८) श० मृ० सि०पृ० १२४ भ० १।

उक्तञ्च—कामयानाःसदा कामं ते त्रयस्सर्वदैव हि।
जयन्ति यज्ञान् विविधान् ब्रह्मविष्णुमहेश्वराः[1]।
अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदति[2]।

अत्र ध्यानपदेन ध्यानं ज्ञानं संकल्पो विचारश्च परविषयकमुच्यत इति।

माया डिम्भ गेल सब राजा, उत्तम मध्यम बाजन बाजा[3]।
मायाया डिम्बभूता ये सर्वे बालिशका नृपाः।
तेऽपि मृत्वा गताश्चासन्, कीर्तयो मध्यमोत्तमाः[4]॥

आत्मलाभं विना न विश्रान्तिर्जीवस्येति पूर्वोक्तपद्ये दृश्यते। तदनुसारि वेदान्तवाक्यम्—

करोतु भुवने राज्यं विशत्वम्भोदमम्बु वा।
नात्मलाभादृते जन्तुर्विश्रान्तिमाधिगच्छति[5]॥

विनश्वरशरीरगृहधनादेर्मिथ्याभिमानपरित्यागाय श्रीसद्गुरुकबीर उपदिशति—

काया कञ्चन यतन कराया, बहुत भाँति के मन पलटाया।
ताते फाँसी काल की, करहु आपनी शोच।
सन्त सिधाये सन्त जहँ, मिलि रहु पोंचहिं पोंच[6]॥

अयम्भावः—मनोऽनात्मसु दत्त्वैते सर्वेऽहङ्कारिणो नराः।
कायाकञ्चनकाद्यर्थं प्रयत्नं कुर्वते सदा॥
अहो मोहस्य माहात्म्यं किमन्यदिह कथ्यताम्।
स्वयं हि नरके यान्ति स्वयं नाके च निर्वृतौ॥[7]

तदनुसारीणि वेदान्तवाक्यानि—

आशा पाशशतप्रोताः पातोत्पातोपतापदाः।
संसारवृतयो भुक्ता इदानीं विश्रमाम्यहम्॥
मनस्तुषारकणिका विवेकार्कातपेन मे।
चिरप्रवृत्तये नूनमचिराल्लयमेष्यति॥

---

(१) देवी०भा० १।८।४६। (२) कठोपनिषद् २।६।१३।
(३) बी० र० ४७। (४) बी० र० ४७ सं० टी० पृ० १६०।
(५) योगवाशिष्ठ ४। ५७।३४। (६) बीजक रमैनी ६४।
(७) बी० र० ६४ सं० टी० १-११।

विविधैस्साधुभिःसिद्धैरहं साधु प्रबोधितः ।
आत्मानमनुगच्छामि परमानन्दसाधनम्[1] ॥

अर्थात् संतापदायिन्यस्संसारवृत्तयो निरोद्धव्याः, संसारानुकूला मनोवृत्तयो विवेकेन च निरोद्धव्याः । साधुमागमं सम्प्राप्य परमानन्दसाधनमात्मानुगमनं विचारेण कर्तव्यमित्येतदत्र दर्शितम् ।

अनात्मन्यात्मविज्ञानं तस्माद्दुःखं तथेतरत् ।
रागद्वेषादयो दोषास्सर्वं भ्रान्तिनिबन्धनाः[2] ॥

अनात्मन्यात्मविज्ञानाद् दुःखम्, रागद्वेषादिदोषैरपि दुःखम्, भोगार्थं धनार्जने दुःखमित्येदत्र हानाय वैराग्याय च दर्शितम् ।

प्रकटे प्रेम विवेक दल, अभय निशान बजाय ।
उग्र ज्ञान उर आवते, जग का मोह नशाय[3] ॥
करै दूरि अज्ञानता, अंजन ज्ञान सु देय ।
बलिहारी वा गुरुन की, हँस उबारि जु लेय[4] ॥

अयम्भावः—सद्गुरुभक्तिसत्संगादिविवेकद्वारा यदा 'नेह नानास्ति किञ्च' इत्यादि श्रुत्याऽद्वितीयब्रह्मातिरिक्तजगदभावज्ञानेन मनसकाशाद् दृश्य-जगद्विलीयते । तदा निरतिशयं मोक्षरूपं सुखं प्राप्य, परमानन्दं स्वरूपमनुमीयते । तदनुसारीणि वेदान्तवाक्यानि यथा—

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥
प्रपञ्चो यदि विद्यते निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः[5] ॥

सत्यमेवं स्यात्प्रपञ्चो यदि विद्येत, रज्ज्वां सर्प इव कल्पितत्वान्नतु स विद्यते ।

मुक्तिदा गुरुवागेका विद्याः सर्वा विडम्बकाः ।
काष्ठभारसहस्रेषु ह्येकं संजीवकं परम्[6] ॥

---

(१) योगवाशिष्ठ उप० प्र० ९।५८, ६२-६३ । (२) ईश्वर गीता २।२०-२१ ।
(३) सा० ग्र० पृ० सं० १०२३ साखी ३ । (४) सा०ग्र० पृ० ३९ साखी ६३
(५) मा० उ० पृ० ९५-९६ । का० १६-१७ । (६) गरुडपुराण ४९।८९ ।

येनाभ्यासः परित्यक्त इष्टे वस्तुनि सोऽधमः ।
कदाचिन्न तदाप्नोति वन्ध्या स्वतनयं यथा[१] ॥
देहः किमन्नदातुर्वा निषेक्तुर्मातुरेव वा ।
मातुपितुर्वा क्रेतुर्वा बलिनोऽग्ने शुनोऽपि वा ॥
एवं साधारणं देहमव्यक्त प्रभवाप्ययम् ।
को विद्वानात्मसात्कृत्य हन्ति जन्तूनृतेऽसतः[२] ॥

देहे स्नेहोऽविवेककृतः, अतो देहस्य पुष्टये हिंसा न कर्तव्या इति भावोऽत्र दर्शितः ।

देहसंसारयोरसारत्वं तेनानित्यत्वम्, तेन माया कार्यत्वम्, तेन तयोर्मिथ्यात्वञ्च प्रदर्शितं सद्गुरुकबीरेणास्मिन्प्रकरणे--

'पानी बीच बतासा सन्तों, तन का यही तमासा है ।[३]'
'काया चलत प्राण क्यों रोई ।
तुम्हारे संग बहुत सुख कीन्हा, नित उठ मलमल धोई ।
तुम तो हंस चले घर अपने, हमको चलत विगोई ॥
हंस कहे सुन काया बौरी, मेरो तेरो संग न कोई ।
तो से घट बहुतेरे छोड़े, संग न लागै कोई ।
लट छिटकाये माता रोवै, खाट पकड़ के भाई ।
आँगन बैठी तिरिया रोवै, हंस अकेला जाई ॥
शिव सनकादिक और ब्रह्मादिक, शेष सहस्र मुख जोई ।
जिन जिन देह धरी दुनियाँ में, थिर न रहिया कोई ॥
पाप पुण्य दो जन्म संघाती, समझ देख नर सोई ।
कहैं कबीर प्रभु पूरण की गति, बूझै बिरला कोई[४] ॥'

अत्र वेदान्तसिद्धान्तानुरोधीनि वाक्यानि—

सर्वाऽशूचि निधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते[५] ॥

अथापि संसारासारता प्रदर्शनेन वैराग्यमेव पूर्वोक्तवाक्येन प्रदर्शितं श्रीकबीरेण तत्र हानोपायत्वेऽप्युक्तम् । तद्वत्--

(१) महामृत (२) श्रीमद्भा० १०।११।१२ ।
(३) क० मृ० सि० पृ० १८४ भ० १ । (४) तत्रैव भ० २ ।
(५) उपदेशसप्तकम्—

'सुकिरत करले नाम सुमर ले, को जानै कलकी ।
जगत में खवर नहीं पलकी ॥
झूठ कपट करि माया जोरिन, बात करै छल की ।
पापकी पोट धरै शिर ऊपर, किस विधि ह्वै हलकी ॥
यह मन तो है हस्ती मस्ती, काया मिट्टी की ।
श्वास श्वास में नाम सुमिर ले, अवधि घटै तन की ॥
काया अन्दर हंसा बोले, सुखिया कर दिल की ।
जव यह हंसा निकसि जाहिगें मट्टी जंगल की ॥
काम क्रोध मद लोभ निवारो, यही वात असल की ।
ज्ञान विराग दया दिल राखो, कहैं कवीर दिल की'[१] ॥

इत्यादिद्वारा अत्र श्रीकबीरेण संसारस्य नश्वरत्वं प्रदर्श्य वैराग्यं समुत्पाद्य तस्य हेयत्वं प्रदर्शितम् । तत्सम्वादिवेदान्तवाक्यम् यथा—

श्वो भावा मर्त्यस्य यदन्तकैतत्सर्वेरिन्द्रियाणाञ्जरयन्ति तेजः ।
अपि सर्वञ्जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते[२] ॥

श्रीसद्गुरुकबीरेणोक्तम्—

खाते खाते युग गया, अजहूँ न न चेतहु आय ।
कहहिं कबीर पुकारिकै, ई जीव जरतहिं जाय[३] ॥

नष्टात्मस्थितयो भोगवह्निषु प्रज्वलन्त्यलम् ।
देवा दिवि देवेन्द्रादौ दह्यमाना द्रुमा इव[४] ॥

आत्मविषयकनिश्चयाभावे दावानलेन द्रुमा इव भोगवह्निषु ज्वलन्तीति दर्शितं श्रीकबीरेण । तत उपदिशति श्रीसद्गुरु—

थोरे जीवन कारणे मन क्यों लगी है मस्ती ।
धन योवन सव धरा रहेगा, द्वारे बाँधा हस्ती[५] ॥

इत्यादि तद्वद् दृश्यत उपनिषदि—

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थ प्रजानन् ।
अभिध्यायन्वर्णरतिप्रमोदानातिदीर्घे जीविते को रमेत[६] ॥

---

(१) श० मू० सि०, पृ० ५१ भ० ३१ । (२) कठोपनिषद् १।१।२६ ।
(३) बीजक र० साखी ७९ । (४) योगवासिष्ठ ६।८।९७ ।
(५) श० मू० सि० पृ० ५१ भ० ३२ । (६) क० उ० १।१।२८ ।

अत्र संसारानित्यत्वमिथ्यात्वयोः प्रदर्शनेन वैराग्यं समुत्पाद्य संसारहानोपायः प्रदर्शितः श्रीकबीरेण त्रिगुणदेहतत्त्वादिविचारप्रकरणे शब्दामृतसिन्धौ देहादीनां त्रिगुणमाया-कार्यत्वेन मिथ्यात्वम् । मिथ्याभूतानामपि देहादितत्त्वानामात्मबन्ध-हेतुत्वं ज्ञानाच्च बन्धनिवृत्तिरित्येतदुपदर्शितं श्रीसद्गुरुणा । तद्यथा—

'हंसा त्रिगुण कर्म की मोट ।[1]'
'झीनी झीनी बीनी चदरिया ।[2]'
'सोच समुझ अभिमानी चादर तेरी भई है पुरानी ।।[3]'
'यह तन ठाँट तंबूरे का ।[4]'
'दुलहिन कहे न अंगिया धुलाई[5] ।'
'चेत सवेरा चलना बाट, यह जग देखा झूठा ठाठ ।[6]'
'हंसा प्यारे सरवर तेजे जाये[7] ।'

अत्र सम्वादीनि वेदान्तवाक्यानि यथा—

अद्यैव कुरु यच्छ्रेयो वृद्धस्सन् किं करिष्यसि ।
स्वगात्राण्यपि भाराय भवन्ति हि विपर्यये[8] ॥
नरदेहस्य पातात्प्राक् तद् बोद्धुं शक्नुयान्न चेत् ।
जन्मान्तरेषु तद्बोधः प्रायेणात्यन्त दुर्लभः[9] ।

यावत्स्वस्थमिदं शरीरमजरं तावदेव निःश्रेयसे प्रयतितव्यमित्येतदत्र दर्शितम् —

यस्तु कामान् परित्यज्य त्यक्तकर्मा जितेन्द्रियः ।
आतिष्ठेत मुनिर्मौनं स लोके सिद्धिमाप्नुयात् ॥
दैवं पुरुषकारश्च कालश्च पुरुषोत्तम ?
त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलावहम्[10] ॥

कामकर्मणोः त्यागः, जितेन्द्रियत्वम्, मौनञ्चात्मज्ञानसाधनम् । दैवं, कालः, पुरुषकारश्चेत्येतत् त्रयं समुदितं सर्वफलसिद्धये भवतीत्यत्र श्लोकद्वयेन दर्शितम्—

---

(१-५) श० मृ० सि० पृ० १७६ भ० १-२-३-४-६-७ ।
(६) तत्रैव पृ० १२४ भ० १ । (७) बीजक श० ६० ।
(८) बीजक श० ६० सं० टी० पृ० ४।२, यो० वा० १६२। २० ।
(९) अनुभूतिप्रकाश ११।९८ । (१०) मत्स्यपुराण २२१-।८।१०

यथा वडिशमांसश्च मत्स्यापातसुखप्रदम् ।
तथा विषयिणां तात ? विषयो मृत्युकारणम् ॥
दारग्राहो हि दुःखाय केवलन्न सुखाय च ।
तपस्स्वर्गभक्तिमुक्तिकर्मणां व्यवधायकः[1] ॥

यथा वडिशमांसं मत्स्यस्य मृत्युकारणम् । तथा विषयिणां मृत्युकारणं विषयः । दारपरिग्रहो दुःखाय न सुखाय । तपस्स्वर्गभक्तिमुक्तिसत्कर्मणां विरोधी चेत्यत्र दर्शितम् ।

'हो दारी की लै देऊं तुहि गारी[2]' इत्यादि ।

यद्वन्नारी दुःखकरी कामिनः पुरुषस्य हि ।
नार्या अपि च कामिन्याः पुमान् दुःखकरस्तथा ॥
ततो दुःखकरः कामो न नारी न नरोऽपि च ।
एवं विज्ञाय मतिमान् कामं शत्रुमिमंत्यजेत् ॥
संकल्पाज्जायते कामः संकल्पो गुणबोधनात् ।
गुणबोधस्य नाशः स्याद्दोषाणामवलोकनात्[3] ॥

कामो मानवस्य परः शत्रुः तंसंकल्पाज्जायेत, संकल्पं दोषदर्शनाज्जयेदित्येतदत्र प्रदर्शितं यथापूर्वं श्रीकबीरेणोक्तम् ।

दोषाणामवलोकनेन मोहोऽयं जगदान्ध्यकृत् ।
अतत्त्वे तत्त्वधी हेतुस्तृष्णाबीजं विनश्यति ॥
तस्मिन्नष्टे स्वयं कामो निर्मूलमिव पादपः ।
विनश्यति क्षणादस्मिन्नष्टे क्रोधोऽपि नश्यति ॥
अहङ्कारञ्च मात्सर्यं कामं क्रोधं परिग्रहम् ।
अधर्माभिनिवेशञ्च त्यक्त्वा वैराग्यमास्थितः ॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
अवेक्ष्य चात्मनात्मानं ब्रह्मभूयाय कल्पते[4] ॥

अत्र सर्वेषां कामक्रोधादीनां निवृत्त्युपायः, वैराग्येन च परेण ,सर्वभूतेष्वात्मदर्शनं तेन च ब्रह्मत्वप्राप्तिर्दर्शिता ।

---

(१) ब्रह्मवैवर्त पु० २३।२०।२ । (२) बीजक श० ६१ ।
(३) आत्मपुराणे ११८।३६ । (४) बी० श० ६१ शि० टीका

भंवर उठे बक बैठे आई, रैनि गये दिवसो चलि जाई[1]।
को गृहेषु पुमान् सक्तमात्मानमजितेन्द्रियः।
स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥
कोऽन्वर्थतृष्णां विसृजेत् प्राणेभ्योऽपि य ईप्सितः।
यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक्[2] ॥

अजितेन्द्रियस्य गृहासक्तिर्दुरुद्धरा, प्राणेभ्योऽपि प्रेयांसोऽर्थाः। अतोऽर्थतृष्णादुरुद्धरा। तस्करः सेवको वणिक् चासुभिरर्थं क्रीणातीत्येतत्सर्वमत्र पद्यद्वये आत्मोद्धाराय वैराग्याय चोपदिशति। यथा पूर्वोक्तं श्रीकबीरेण। अतः श्रीसद्गुरुकबीरसिद्धान्ते निखिलप्रपञ्चस्यमिथ्यात्वं दृश्यते, यथा—

'अवधू क्षर अक्षर से न्यारा, तुम ताका करो विचारा[3]'

इत्यादिपद्ये ब्रह्मभिन्ननिखिलप्रपञ्चस्य मिथ्यात्वं सिद्धयति इति विमर्शः।

## (५) परतत्त्वस्य स्वरूपम्

उपनिषत्सु परतत्त्वस्य स्वरूपं वाङ्मनसयोरगोचरत्वेन प्रतिपादितम्। केनोपनिषत्कथयति यत् तत् परतत्त्वं प्राक्तनान्यन्तःकरणानि बहिरिन्द्रियाणि च न ज्ञातुं शक्नुवन्ति। तानि तु तत्र गमनेऽपि न क्षमाणि-तस्मिन् तेषां प्रवेशस्तु सुतरां दुष्करः। अपि तु येष्विन्द्रियेषु या चेतना क्रिया च प्रतीयते परतत्त्वस्य प्रेरणया तस्यैव च सत्तया भवति। एतस्य परतत्त्वस्योपदेशस्य कोऽपि प्रकारो न केनापि श्रुतो न वा ज्ञातः न च स्वबुद्धयावगन्तुं शक्यते अस्यां स्थितौ परतत्त्वस्वरूपं वाङ्मनसाऽगोचरं प्रतीयते—'न तत्र चक्षुर्गच्छति न वाग्गच्छति न मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथोऽविदितादधि।'[4]

श्रीसद्गुरुणा कबीरेणाध्यास्या उपासनाया निन्दा कृता। तद्यथा—

अवधू छाड़हु मन विस्तारा।
सो पद गहहु जाहि ते सद्गति। पारब्रह्म ते न्यारा[5]।

(१) बीजक शब्द ६२। (२) श्रीमद्भा०
(३) पा० मू० सि० पृ० ९९ भ० १९।
(४) केनोप० १।३। (५) बीजक शब्द ४८।

अन्यत्र च—अविगति अकल अनूप देख्या, कहता कह्या न जाई।
सैन करै मन ही मन रहसे, गुंगे जान मिठाई[1]॥

उपरितनमुद्धरणमशुद्धमनोऽविषयकम्। निष्कामकर्मणा अभ्यासवैराग्याभ्यां च शुद्धेन मनसा तु विज्ञातुं तत्परतत्त्वं शक्यते। उपनिषदो वदन्ति। तद्यथा—

एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः[2]।
यन्मनसा न मनुते येनाहुर्मनो मतम्
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते[3]॥

तथापि निषेधमुखेन तु सर्वनिषेधे परिशेषरूपतया वर्णयितुं शक्यते। वर्णितञ्चोपनिषत्सु 'नेति नेति'[4] इति। श्रीमद्भागवतेऽपि गजेन्द्रमोक्षप्रकरणे गजेन्द्रस्तुतावुक्तम्। यथा—

"स वै न देवासुरमर्त्यतिर्यङ् न स्त्री पण्डो न पुमान् न जन्तुः।
नायं गुणः कर्म न सन्न चासन् निषेधशेषो जयतादशेषः॥[5]"

अर्थात्—ब्रह्म देवाऽसुरत्वादिभिर्निर्वक्तुं न शक्यते। तत्तु सर्वनिषेधे सति शिष्यते। श्रीसद्गुरुकबीरेणापि ब्रह्मणो वागगोचरत्वं निषेधमुखेन शब्दगोचरत्वञ्च दर्शितम्। तद्यथा—

"पण्डित देखहु हृदय विचारी। को पुरुषा को नारी[6]" इत्यादि।
"पण्डित मिथ्या करहु विचारा। न वहाँ सृष्टि न सिरजनहारा[7]"...
"सुधि बिनु सहज ज्ञान बिनु ज्ञाता। कहहिं कबीर जन सोई[8]॥"

यदा शब्दानामपि लौकिकपदार्थविशेषधर्मप्रतिपादने नास्ति शक्तिः, अतएव इक्षुरसःगुड-द्राक्षा-मधूक-पुष्पशर्करा सितादीना-मनुभूयमाना मधुररस-भेदाः शब्देनेन प्रकाश्यन्ते किन्त्वनुभवमात्रगोचरा एव। तदा कथं वक्तुं शक्यते परतत्त्वं ब्रह्म शब्देनपदेष्टुं विधिमुखेन इति। तद्यथा—

"अर्थान्तरराहित्येऽप्यस्यैषां तत्स्वभावता।
मा भूत्तदनुभाव्यत्वं बोधात्मा तु न हीयते[9]॥"

(१) कबीर ग्रन्थावली पद ६ श० मृ० सि० पृ० १०९। भ० ७
(२) कठोप० १।३।१२ (३) केना उ० १।१।५ (४ बृ० उ० २।३।६।
(५) श्रीमद्भा० ८।३।२४। (६) बी०श० ११। (७) बी० श० १२।
(८) बी० श० १०। (९) पञ्चदशी ३।१५।

श्रीसद्गुरुकबीरेणापि तत्त्वभावेन दर्शितम्—

"कहहिं कबीर गूंगे का शक्कर। क्यों कर कहैं दिवाना ॥[१]
"स्त्री पुरुष के सुख को, खसी नहीं पहिचान।"
"पारब्रह्म के तेज का, कैसा है उनमान।
कहिवे की शोभा नहीं, देखे ही परमान[२] ॥

यत्तु क्वचित् विधिमुखेनोपनिषत्सु पुराणेषु ब्रह्मण उपदेशो दृश्यते स सगुणब्रह्मपरः, न तु निर्गुणस्योपदेशः। स च 'स्थूलारुन्धती निदर्शन 'न्यायेन[३]' इति। सद्गुरुणा श्रीकबीरेणापि एवमेव सगुणं 'ब्रह्म' क्वचित्क्वचिद् दर्शितम्। तद्यथा— 'कहहिं कबीर राम है राजा, जो कछु करै सो छाजै[४]'।

'नाना नाच नचाय के, नाचै नट के वेष।
घट घट अविनाशी बसै, सुनहु तकी तुम शेख[५]" ॥
'चल जहं पुरुष बसत निर्वाण'[६] इत्यादि।

आश्चर्यरूपं ब्रह्मरूपं निरुपाधिकं परतत्त्वं व्यापकमिति वेदान्तवाक्यानि—

आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः[७]।
अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च[८] ॥
पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्[९]।

आत्मैवाधस्तादात्मोपरिष्टादात्मापृष्ठादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति[१०]।

एवमेव सद्गुरुश्रीकबीरसिद्धान्तो वेदान्तसिद्धान्तसम्वादी—

भाई रे अद्बुद रूप अनूप कथा है। कहुं तो को पतिआई।
जहं जहं देखों तहं तहं सोई। सब घट रहल समाई॥[११] इत्यादि

(१) बी० श० ४०। (२) साखी ग्र० पृ० २८१सा० २।
(३) लोकोक्तिः। (४) बीजक शब्द १५।
(५) बीजक रमैनी ६३। (६) शब्द मृ० सि० पृ० ११८। भ० ४
(७) क० उ० १।२।७। (८) क० उ० २।५।९।
(९) मु० उ० २।१।१०। (१०) छा०उ० ७।२५।२। (११) बीजक शब्द ४५

उहवां तो सब एक है परदा रहिया वेप।
भरम करम सब दूर कर, सब हीं मांह अलेख[1] ॥

परतत्त्वस्य व्यापकता श्रीसद्गुरुकबीराभिमता। शब्दामृतसिन्धौ सद्गुरोः कबीरस्यैकं पद्यमस्ति यत्काव्यभाषायां ब्रह्मणो व्यापकतां वर्णयति। तस्यायमभिप्रायः—

साधो! अहं हरे हरिमपश्यम्, अर्थात् हरिह्वयोर्नामकरमात्रेण भेदः, ब्रह्मरूपेणाभेदः। एवमेव तत्त्वं धनं भाण्डागारम्, अध्यक्षश्च, तदेव वीथी, भिक्षा, याचको, भिक्षापात्रमपि। ब्रह्म एव मद्यम्, आसवस्थानम्, आसववृत्ति अपि तदेव, तदेव चषकम्, तदेव च मत्तोऽपि। अर्थात् सर्वाणि वस्तूनि ब्रह्मरूपाणि सन्ति। तदतिरिक्तस्य नान्यस्य वस्तुनः सत्ता। यथा—

'साधो हर में हरि को देखा[2]।'

साखीग्रन्थे परतत्त्वस्य व्यापकतायाः निदर्शनपुरस्सरं वर्णनमस्ति। यथा अग्निरणुष्वणुषु व्यापकोऽस्ति एवमेव परतत्त्वमप्यणुष्वणुषु व्यापकमस्ति। यथा—अग्नेः प्राकट्याय प्रस्तरविशेषस्य संघर्षणस्यावश्यकता भवति तथैव परतत्त्वस्य प्राकट्याय चित्तप्रसादस्यावश्यकता भवति—

पावक रूपी साइयां सब घट रहा समाय।
चित्त चकमक लागे, नहीं ताते बुझि बुझि जाय[3] ॥

सद्गुरोरिदं कथनं कठोपनिषदः प्रतिफलनमस्ति। यथा—

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च[4] ॥

यथा पलाशवृक्षे तस्य पुष्पाणि पुष्पिताऽवस्थायाः प्रागदृश्यरूपेण तिष्ठन्ति तथैव परतत्त्वमप्यदृश्यरूपेण सर्वत्र तिष्ठति—

जैसे लकड़ी ढाक की ऐसा तन यह देख।
वा में टेसू छिपि रहा, या में पुरुप अलेख[5] ॥

सद्गुरुश्रीकबीरसम्मतं परतत्त्वमेवम् इति। तद्यथा—

(१) साखी ग्रन्थ पृ० ६७६ सा० २ (२) श० मृ० सि० पृ० ४४ प० १६।
(३) साखी ग्रन्थ पृ० ८४८ साखी ४। (४) कठो० २।२।१०।
(५) [illegible]

एक बिनु दूसरा दृष्टि आवै नहीं ।
एक बिनु कहो तुम कौन दूजा[१] ॥ इत्यादि
घट घट में रटना रट रहा प्रगट नहीं अलेख है जी[२] ।

पद्येऽस्मिन्नेकस्यैव परब्रह्मणस्सर्वत्र व्यापकत्वं सर्वरूपत्वञ्च वर्णितमस्ति । तत्सम्वादीनि वेदान्तवाक्यानि—

स यश्चायं पुरुषे, यश्चासावादित्ये स एकः ।[३] ।

एकस्य तत्त्वस्यादित्ये ( सूर्ये ) पुरुषे च सत्त्वं वर्णितम् । तच्चोररिवर्णितं श्रीकबीरसिद्धान्तसम्मतम्—

'एकमेवाद्वितीयम्[४]' ।

'अन्योऽसावन्योऽहमस्मीति, न स वेद[५]' ।

एतत्संवादीनि सन्ति श्रीसद्गुरुकबीरस्याप्तानि च वचनानि एवमेवमद्वैतरूपस्य परतत्त्वस्य सर्वात्मकता व्यापकता च उद्घुष्यते । तद्यथा—

कबीर सोधि विचारिया, दूजा कोई नाहिं ।
आपा पर जब चीन्हिया, उलटि समाना ताहिं[६] ॥

एतत्संवादिवेदान्तवाक्यं यथा—

व्याप्य व्यापकता मिथ्या सर्वमात्मेति शासनात् ।
इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः[७] ॥

अद्वैतस्य व्यापकत्वं नदीदृष्टान्तेन समुद्रदृष्टान्तेन वा दर्शितं श्रीसद्गुरुणा । तद्यथा—

पार ब्रह्म सुभर भरा, दरिया वार न पार ।
खाली कहीं न देखिये, जेता सुइ संचार ॥[८]

अस्यार्थः—शुभ्रं परं ब्रह्म सर्वत्र सुपरिपूर्णं वर्तते । वर्षाकालिकमहानदीसदृशस्य समुद्रस्येव वा परब्रह्मणः पारो न दृश्यते । परब्रह्मणोऽतिरिक्तं स्थानं

(१–२। श० मृ० सि पृ० २५१ भ० १५ । १६ (३) तै० उ० २।७।१ ।
(४) छा० उ० ६।२।१ । (५) बृ० उ० १।४।१० ।
(६) साखी ग्र० पृ० ६·४ सा० ४
(७) अपरोक्षानुभूति द्वैतमिथ्या प्र० श्लो० ४६ ।
(८) साखी ग्रन्थ सर्वज्ञता को० साखी ७ ।

सूचीसंचारमात्रमपि न दृश्यत इति। एतदर्थे संवादीनि वेदान्तवाक्यानि यथा—

'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्[1]'।

'ओमित्येतदक्षरमिदं सर्वं[2]'।

'सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म[3]'।

'नेह नानास्ति किञ्चन[4]'।

'ब्रह्मैवेदं सर्वम्[5]'।

'इदं सर्वं यदयमात्मा[6]'।

'परमार्थसत्यरूपेणानृतमिदं सर्वं सचराचरमाच्छादनीयं स्वेन परमात्मना[7]' एतेषु वेदान्तवाक्येषु ईशावास्यादिषु जगति सर्वस्यैव ब्रह्मरूपत्वं वर्णितम्। तदतिरिक्तस्य च सत्ताऽनङ्गीकारात्।

अत एवोक्तमन्यत्रापि सद्गुरुणा तत्परतत्त्वं सर्वत्र ओतप्रोतमस्ति, तेन विना सूचिकाग्रमात्रस्थानं रिक्तं नास्ति--

पारब्रह्म सुभर भरा जाका वार न पार।
खालिक बिनु खाली नहीं जेता सुई संचार॥[8]

सद्गुरोः कबीरस्येदं वचनं गीतायाः प्रतिफलनमात्रमस्ति—

'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्[9]।'
'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः[10]।'

अर्थात् परमात्मा जगत् प्रविश्याधिष्ठानाधारतया स्वरूपसत्तया धारयति। छान्दोग्योपनिषद् व्यापकतायाः निरूपणं प्रकारान्तरेण करोति। अर्थात् तत्परतत्त्वमेव भूमाशब्देनापि व्यपदिश्यते। स भूमा अधस्तादुपरिष्टात्पश्चात्पुरस्तादिदं सर्वमस्ति। तद्व्यतिरेकेणान्यस्याभावात्—

स एवाधस्तात् स उपरिष्टात् स पश्चात्स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वमिति[11]।

---

(१) ईशा० उ० १। (२) मा० उ० १। (३) तत्रैव २।
(४) क० उ० २।१।११। (५) नृसिंहोत्तर उ० ७।
(६) बृ० उ० २।४।६। (७) ईशा०उ० १ शा०भा० १
(८) सा० ग्र० पृ० सा० ७। (९) गीता १०।३९।
(१०) [illegible] (११) [illegible]

## (६) व्यापकत्वस्यालम्बनरूपता

सद्गुरुकबीर ईश्वरप्राप्तये समुत्सुकानां कृत एकंसुदृढमवलम्बनमपि निरदिशत्। यस्साधक एषणात्रयमतीत्येश्वरप्राप्तये व्याकुलोऽस्ति, तदन्वेषणाय कदाचिद्धिमालयं गच्छति, कदाचिच्च सघनं वनमाहिण्ड्यते, तं निर्दिशति--

भूला भूला क्या फिरै, शिर पर चढ़ि गई बेल।
तेरा साईं तुझहि में ज्यों तिल माहीं तेल[१]॥
ज्यों तिल माहीं तेल है चकमक माहीं आग।
तेरा सांईं तुझ हि में, जाग सके तो जाग[२]॥

सद्गुरुकबीरः कथयति यद्मायायाः प्रवञ्चनादेव त्वमन्यत्र भ्रमसि मायायाः प्रवञ्चनमवगच्छ, ताञ्च तिरस्कुरु। यथा तिले तैलं चकमकाख्यप्रस्तरविशेषे चाग्निस्तिरोभूतस्तथैव परतत्वमपि सर्वत्रानुस्यूतमस्ति। मोहं परित्यज्य विवेकं कुरु। एतद्विषये सम्यगवबोधाय श्रीकबीर एकां घटनां प्रस्तौति--

कबीर बहुत भटकिया, मन ले विषय विराम।
ढूंढ़त ढूंढत जग फिरा तिनका ओटे राम[३]॥

अर्थात् कोऽपि महाशयो विषयादुपरतो भूत्वा परतत्वान्वेषणाय चतुर्दिक्षु पर्यटन्नासीत्। किन्तु तत् परतत्वं तृणस्य व्यवधानेन तिरोहितमासीत्।

बृहदारण्यकोपनिषदपि कथयति यत् व्यापकं तत् परतत्वं समस्तेषु भूतेष्वन्तरितमस्ति। किन्तु भूतानि तन्न जानन्ति—'यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यः सर्वाणि भूतानि न विदुः, यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृत[४]।

तैत्तिरीयब्राह्मणेऽऽरण्यकेऽपि कथितम्—'यस्मात्परं नापरमस्ति किञ्चित्[५]'। तैत्तिरीयोपनिषदपि कथयति 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः तेनैष पूर्णः[६]।'

श्रीसद्गुरुकबीरः कथयन्ति यदेकमेवात्मतत्वं सर्वत्रानुस्यूतमस्ति। अन्यानि सर्वाणि कार्याणि भ्रमरूपाणि तथैव सन्ति यथा दर्पणे प्रतिबिम्बः। यथा--

(१) सा० ग्र० पृ० ८४७ सा० ५। (२) सा० ग्र० पृ० ८४९ सा० ६।
(३) स०मृ० पृ० ८५२ सि० १६ (४) बृ० उ० ३।७।१५।
(५) तै० आ० १०।१०।३०। (५) तै० उ० २।५।

साधो ! एक आप सब माहिं ।
दूजा करम भरम है किरतम ज्यो दर्पण में छाहीं[1] ।।

सद्गुरोरिदं निदर्शनमद्वैतवेदान्तस्यैकां प्रथितां शाखां स्मारयन्ति या बिम्बप्रतिबिम्बभावं मन्यते । तच्छाखावलम्बिनः कथयन्ति यत् कस्यचिद्बिम्बस्य प्रतिबिम्बानां शतसंख्या भवितुमर्हन्ति । किन्तु तथैवतदसंख्यैव वास्तविकी अन्याश्च संख्या अमरूपा एव तिष्ठन्ति । प्रतिबिम्बावादिनस्स्वसिद्धान्तस्य प्रमाणरूपेणोपनिषदामेकं शान्तिपाठं प्रस्तुवन्ति ।

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते[2] ।।

अयं शान्तिपाठः बिम्बप्रतिबिम्बभावं विना परिणामादिवादे न सङ्गच्छते । अस्योद्धारणस्यायमभिप्रायः अदो ब्रह्म पूर्णमस्ति । पूर्णाज्जगदपि पूर्णमस्ति, यतः पूर्णाद्बिम्बात् पूर्णस्यैव प्रतिबिम्बस्य सम्भवः । यदि बिम्बस्थानीयः कश्चित् पुरुषोऽविकलाङ्गो भवति, तदा तस्य प्रतिबिम्बोऽप्यविकलाङ्गो भवति । कोऽपि बिम्बः केनाप्यङ्गेन यदि विकलाङ्गो भवति, तदा तस्य सर्वेऽपि प्रतिबिम्बास्तेनैवाङ्गेन विकलाङ्गा भवन्ति । प्रतिबिम्बस्य विकलाङ्गता निरासाय बिम्बस्याविकलाङ्गता आवश्यकी । परन्त्वं यदा पूर्णमस्ति, तदा तस्य प्रतिबिम्बसमूहस्य पूर्णतापि सम्भवत्येव । यतो 'पूर्णात् पूर्णमुदच्यते' । अतस्तस्मात् पूर्णात् प्रतिबिम्बात् निःसृतास्सर्वप्रतिबिम्बाः पूर्णा एव भवन्ति ।

'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इत्यंशोऽपि प्रतिबिम्बवादे एव सङ्गच्छते, न तु परिणामवादे । कस्यचित् पूर्णस्य वृक्षस्य सम्पूर्णतया कस्मिंश्चित् कार्ये यदि विनियोगस्यात्तदा तस्य वृक्षस्याणुरपि नावशिष्यते । तदा पूर्णस्य वृक्षस्यावशिष्टतायाः का कथा ? प्रतिबिम्बवादे तु पूर्णाद्बिम्बादसंख्यानां प्रतिबिम्बानामादानादपि बिम्बस्य पूर्णता न व्याहन्यते, इत्यद्वैतवेदान्तिनो बिम्बप्रतिबिम्बभावस्योः एवास्याः शाखायातात्पर्यमस्ति । उक्तं हि सद्गुरुणा—

---

(१) शब्दामृ० सि० पृ० ४३ भ० १५ ।
(२) ई० उ० शा० पाठ १ । बृ० उ० ५।१

'दूजा करम भरल है किरतम ज्यों दर्पण में छांही[1] ॥'

इदं कथनं प्रतिबिम्बवादस्यैव प्रतिच्छाया। अतःसद्गुरोः कबीरस्य मतम-द्वैत—सिद्धान्तानुसारि सिद्धयति। सद्गुरोः कबीरस्य मतं योगादिशास्त्रस्य न तथा सम्वादि, प्रत्युत स तु सुस्पष्टैः शब्दैः पूर्वोक्तपदैः निराकरोति—

योग युक्ति में भरम न छूटे, जब लग आप न सूझै।
कहहिं कबीर सोई सत गुरू पूरा, जो कोई आपा बूझै[2] ॥

इत्थमुपनिषत्सु परतत्त्वस्य यत्स्वरूपं वाङ्मनसोऽगोचरत्वेन प्रतिपादितं तदेव स्वरूपं सद्गुरोरभिमतम्—

जाके मुख माथा नहीं, नहीं रूप अरूप।
पुष्पवास से पातला, ऐसा तत्त्व अनूप[3] ॥

अर्थाचस्य मुखे शिराद्यवयवाः न सन्ति, यद्रूपवच्छब्देन वा न प्रतिपादितुं शक्यं तत्परमात्मतत्त्वं बीजके रमैन्यामपि कथितम्—

रूप निरूप जाय नहिं बोली। हलका गरुआ जाय न तोली॥
भूख न तृषा धूप नहिं छांहि। सुख दुख रहित रहे तिहि मांहि[4] ॥

सद्गुरोरिदं वचनमुपनिषदुक्तीनामेव प्रतिफलनम्। मुण्डकोपनिषद् कथयति—
यत्तद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः[5]।

अर्थात् तत्परतत्त्वं ज्ञानेन्द्रियाज्ञेयम्, कर्मेन्द्रियाग्राह्यम् गोत्राद्युपाधिरहितम्, ब्राह्मणादिवर्णगतभेदशून्यम्। नेत्रादिज्ञानेन्द्रियरहितम्, सर्वविधिकर्मेन्द्रियशून्यम्, व्यापकमविनाशि तत् परतत्त्वमस्ति। तस्मिन् सुसूक्ष्मता अस्ति, यस्याः प्रतिफलम् तु—'पुष्पवास से पातला[6]' इति सद्गुरोः वचनमस्ति।

परतत्त्वरूपपरब्रह्मविषयैकामतिः, परतत्त्वस्यैकत्वात्, अन्यविषयास्तु बह्व्यो मतय इति सद्गुरोः श्रीकबीरस्य मतम्—

समझे की मति एक है, जिन देखा सब ठौर।
कहहिं कबीर वै बीच के बलकहिं औरक और[7]॥

(१) ध० मू० सि० पृ० ४३ भ० १५। (२) ध० मू० सि० पृ० ४४ भ० १५
(३) साखी ग्र० पृ० ६८३ सा० २५। (४) बीजक रमैनी ७७।
(५) मु० [illegible] (६) बीजक साखी [illegible] (७) बी० साखी [illegible]

तत्त्वविषये श्रीसद्गुरुकबीरसंवादीनि वेदान्तवाक्यानि यथा--

'य आत्मा अपहत पाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः, सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः'[1]।

अदृष्टो द्रष्टाऽश्रुतो श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता, नान्योऽतोऽस्ति मन्ता, नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तं ततोहोद्दालक आरुणिरुपरराम[2]।

'स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंगमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन'[3]।

'स वा अयमात्मा ब्रह्म विज्ञानमय मनोमयः……

……………………यत्कर्म कुरुते तदभिसंपद्यते[4]।।'

परत्वस्य ब्रह्मण आदिमध्यान्तराहित्यमखण्डत्वममूलराहित्यमजरामरत्वश्चेति श्रीकबीरमतम् तद्यथा—

आदि अन्त नहीं होते बिरहुली। नहीं जड़ पल्लव पेड़ बिरहुली।[5]
इत्यादि

एतत् श्रीसद्गुरुकबीरमतसंवादीनि वेदान्तवाक्यानि यथा—

'योऽयमात्मेदममृतम्[6]'

'स वा एष महानात्माऽजरोऽमरोऽमृतोऽभयः[7]'

'स वा एष महानज आत्मा……स एष नेति नेत्यात्मा[8]'

'जीवापेतं वाव किलेदं म्रियते…न जीवो म्रियते[9]'

'न जायते म्रियते वा विपश्चिन्[10]'

'नेह नानास्ति किञ्चन'[11]

(१) छा० उ० ८।७।१। (२) बृ० उ० ३।७।२३।
(३) बृ० उ० ३।८।८। (४) छा० उ० ४।४।५।
(५) बीजक बिरहुली १। (६) बृ० उ० २।५।१।
(७) बृ० उ० ४।४।२५। (८) बृ० उ० ४।४।२२।
(९) छा० उ० ६।११।३। (१०) कठो० १।२।१८, गीता २।२०।
(११) बृ० उ० ४।४।१९।

'न मृत्युरासीदमृतं न तर्हि, न राज्या अह्न आसीत् प्रचेतः
आनीदवातं स्वधया तदेकं, तस्माद्धान्यन्न परः किञ्चिनासः'[1] ॥

एतेषु वेदान्तवाक्येष्वात्मनोमृतत्वंमजरत्वाभयत्वादीनां प्रतिपादिनं बहु निरसनञ्च कृतं तच्छ्रीसद्गुरु सम्मतम् ।

परतत्त्वस्य व्यापकत्वम्, वागविषयत्वम्, सर्वदेहेन्द्रियधर्मराहित्यम्, एकत्वम् सर्वसंसारधर्मराहित्यञ्चेति श्रीसद्गुरुकबीरमतम्--

'एकै काल सकल संसारा ।[2]..............

तदनुरूपवेदान्तवाक्यानि यथा--

नैव स्त्री न पुमानेष च चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते, तेन तेन स युज्यते[3] ॥
तस्मै सर्वं ततसर्वं स सर्वं सर्वतश्च सः ।
सोऽन्तः सर्वमयो नित्यं तस्मै सर्वात्मने नमः[4] ॥
एक एव त्रिलोकात्मा रूपादिगुणवर्जितः ।
न तद्रूपं सितं श्यामं कपिशं पिङ्गलं न च ॥
न वै रक्तं न वा पीतं चित्रं संकरमेव च[5] ॥
अस्त्यनन्तविलासात्मा सर्वगः सर्वसंश्रयः ।
चिदाकाशोऽविनाश्यात्मा प्रदीपः सर्वजन्तुषु[6] ॥

---

(१) ऋ० १०।१२९, तै० ब्रा० २।८।९।४, नि० ७।३ ।

(२) एकै काल सकल संसारा । एक नाम है जगत पियारा ॥
तिया पुरुष कछु कहल न जाई । सर्व रूप जग रहा समाई ॥
रूप निरूप जाय नहिं बोली । हलुका गरुवा जाय न तोली ॥
भूख न तृषा धूप नहिं छाहीं । दुःख सुख रहित रहै तिहि माहीं ॥
साखी--अगम अपार रूप बहू । औ अरूप बहु भाय ॥
बहुत ध्यान कै खोजिया । नहिं तेहि संख्या आय ॥
बीजक रमैनी ७७ ।

(३) श्वे० उ० ५।१० ।  (४) योगवा० उ० ४८।२३ ।

(५) स्कन्द पु० केदार ख० [illegible]  (६) [illegible]

## (७) अद्वैतरूपे परतत्त्वे प्रमाणानि

अद्वैतरूपे निर्गुणे परतत्त्वे शब्द एव प्रमाणम् तत्प्राप्त्युपायश्च योगो विचारो वा। एतदेव च तदाराधनम्। शब्दादिरूपेषु विषयेष्वासक्तिरूपो मनसो विकारश्च तत्प्राप्तौ प्रतिबन्धकः। अतः प्रतिबन्धकाभावरूपतया विषयविकारपरित्यागस्यापि तत्प्राप्त्युपायत्वमिति श्रीसद्गुरुकबीरमतम्, तथथा—

एक शब्द में सब कहा सब ही अर्थ विचार।
भजिये निर्गुण राम को, तजिये विषयविकार[1] ॥

अत्रैव संवादीनि श्रीमद्भागवत् पद्ये दृश्येते—

आत्मानमन्यञ्च स वेद विद्वानपिप्पलादो न तु पिप्पलादः।
योऽविद्ययायुक् स तु नित्यबद्धो विद्यामयो यस्स तु नित्यमुक्तः[2] ॥
ज्ञात्वाऽज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः[3] ॥

एतत्पद्यद्वयस्यार्थः—विद्वान् साक्षात्कृताद्वैतात्मतत्त्व आत्मानमपिप्पलादः अहं कर्मकर्तृत्वाभावेन कर्मफलस्य सुखदुःखरूपस्याभोक्ता इति वेद, अन्यञ्च कर्मकर्तृत्वाभिमानेन पिप्पलादः कर्मफलस्य प्रायुक्तस्योभयरूपस्य भोक्ता इति वेद। अहं यावाद् विभुः यः परतत्त्वरूपः यादृशः निर्गुण-अकर्ता-अभोक्ता इत्यादिरूप इति ज्ञात्वाऽज्ञात्वा चानन्यभावेन-स्वतः परतश्चाभेदेन भजन्ति ते मे मम ईश्वरस्य भगवतो भक्ततमा मता इति।

निर्गुणस्यात एवोपाधिराहित्येनाद्वितीयस्य रामपदस्य योगविचाराभ्यां द्वाभ्यामन्यतरेण वा, भजनम्, शब्दादिविकाराणाञ्च तत्प्रतिबन्धकानां परित्यागः, इति द्वयमेवाद्वैतात्मप्राप्त्युपायः। ये तु बहुविस्तरग्रन्थाः पण्डितैर्विरचितास्ते तु जिज्ञासुपुरुषं प्रजल्पयन्तीति नाधीतिन अद्वैतात्म प्राप्तिरूपमभीष्टं साध्यत इति श्रीसद्गुरुकबीरसिद्धान्तः। तथथा—

आधी साखी सिरकटी, जो निरुवारी जाय।
क्या पण्डित की पोथिया, रात दिवस मिलि गाय[4] ॥

---

(१) बीजक साखी ३७८। (२) श्रीमद्भा० ११।११।७।
(३) श्रीमद्भाग० ११।११।३३। (४) बीजक साखी २१।

अस्यार्थः--'भजिये निर्गुण राम को' पद इत्यादिका उत्तरार्धरूपा अर्धा "साखी' विरकटी 'पूर्वार्द्धरहिता' 'जो निरुवारी जाय' इति। यदि श्रवण मननपूर्वकं विचार्येत तदा पण्डितैर्विरचितानां बहुविस्तराणां ग्रन्थानामहर्निशं मिलित्वा गानेन किं प्रयोजनम् ? व्यर्थत्वादिति। एतत्साखीसंवादि वेदान्त-वाक्यं यथा—

'नानुध्यायाद् बहून् शब्दान् वाचो विग्लापनं हि तत्' इति
'अन्या वाचो विमुञ्चत' इति चोपनिषद्वाक्यम्।

अद्वैतरूपं परतत्त्वमेव त्रिगुणात्मकमायोपहितं सा मायावृत्तिरूपं स्वसंकल्पं जगत्सर्गाय विविश्राय मूषायां मृदितमृत्पिण्डमिव मायायां निक्षिप्येदं विचित्रं जगन्निर्मितवान्। तत्र यथा मूषानिक्षिप्तमृदितपिण्डस्याधिकरस्य सूत्रेण छित्वा घट्टाद्विनिर्मियते कुम्भकारेण, तथा स एव प्रभुः हिरण्यगर्भरूपेण सूत्रात्मा सूत्रधारो भूत्वेदं विविधं जगद्विचित्रं करोति। एवदिव्जगद्यं विचारयन्ति ते जना भद्राः स्वस्वज्ञानेन परेयाप्तोपदेशेन हिनकृत्त्वात्। किञ्च स भगवान् चिदात्मकेन स्वरूपेण सन्निधानमात्रेण निमित्त कारणम्, मायोपहितरूपेण चोपादान कारणं भवति अत एव सर्वात्मकञ्चेति श्रीसद्गुरोः कबीरस्य मतम्—

'आपुहि कर्त्ता भया कुलाला ........ ......
कहहिं कबीर ते जन भले, चित्रहिं लेहिं विचारि[१] ॥'

(१) आपुहि कर्त्ता भया कुलाला। बहु विधि वासन गढ़ै कुम्हारा।
विधि ने सबहिं कीन्ह इक ठाऊं। अनेक यतन के बने कनाऊं।
जठर अग्नि महं दीन्ह प्रजाली। तामंह आप भये प्रतिपाली।
बहुत यतन कै बाहर आया। तब शिवशक्ति नाम धराया।
घर के सुत जो होय अयाना। ताके संग न जाय सयाना।
सांची बात कही मैं अपनी। भया दिवाना और कि सपनी।
गुप्त प्रगट है एकै दूधा। काको कहिये ब्राह्मण शूधा (शूद्रा)।
झूठी गर्भ भूलो मति कोई। हिन्दू तुरुक झूठ कुल दोई।
साखी-जिन यह चित्र बनाइया, सांचा सो सुत धारि (धार)।
कहहिं कबीर ते जन भले, चित्रहिं लेहिं विचारि॥
—बीजक, रमैनी २६।

एतदर्थे मूलभूतानि वेदान्तवाक्यानि दृश्यन्ते। तत्र मात्रावृत्तिरूपे भगवतः संकल्पे प्रमाणभूतं वेदान्तवाक्यं यथा--

'आत्मा वा इदमेक एवाग्र आसीन्नायत् किञ्चनमिषत् स ईक्षत लोकान्नु सृजा इति[1] ।'

तत्र उपादानकारणत्वे प्रमाण यथा--

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा[2] ॥

सर्वात्मकत्वे प्रमाणं यथा--'एषो ह देवः प्रदिशोऽनुसर्वाः पूर्वो ह जातः स उ गर्भे अन्तः[3] । इत्यादि।

'सम्पाद्य तच्छरीरं स जठराग्नावपक्षतः।
रक्षकोऽथाऽभवत्तत्र प्रकाशाद्यैः स्वयं प्रभुः[4] ॥'

स्वस्यहितकृत्वेमानं यथा--'यद्यथाऽहिनिर्ल्वयनी वल्मीकेमृता प्रत्यस्ताशयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव[5] । अभिन्ननिमित्तोपादानत्वेन सर्वात्मकत्वेमानं यथा--

'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि[6]
एतमेके वदन्त्यग्निमनुमन्ये प्रजापतिम्।
इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतम्[7] ॥

एकोवशीसर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्[8] ॥

स्वस्यहितकृत्वेमानं यथा--ज्ञानवानेव सुखवान्'

यनेदं रचितं चित्रं सर्वमुच्चावचं खलु।
तं सत्यं सूत्रधारं च जानीत सज्जनाः सुखम् ॥

---

(१) ऐ० उ० १।१।१।
(२) शु० यजु० ३१।१९।
(३) श्वे० उ० २।१६।
(४) बीजक पृ०९८ (स्वानुभूति सं०टी०)।
(५) बृ० उ० ४।४।७।
(६)
(७) मनुस्मृ० १२।१२३।
(८) क० उ० २।५।१२।

त एव सज्जना लोके सुखिनश्च विशेषतः ।
यैश्चित्राणि विचार्यैवं चित्रवाँल्लक्ष्यते स्वयम्[1] ॥

निर्गुणं परतत्त्वं न लघुनापि गुरु-अमूर्तत्वात् । मूर्तिमतां हि लघुत्वं गुरुत्वञ्च लोके दृष्टम् । किञ्च परतत्त्वं द्रष्टुमशक्यते, अल्पत्वादिति श्रीसद्गुरु-कबीरस्य मतम् । तदुक्तम्—

हलका कहूं तो बहु डरूँ, भारी कहूँ तो झूठ ।
मैं का जानौं राम को, नैनन कबहूँ न दीठ[2] ॥

परतत्त्वस्यासङ्गत्वमौपनिषदत्वम् । जगत्कारणत्वञ्च, तद्वेदनस्यैव तत्प्राप्त्युपायत्वमिति परतत्त्वविषये श्रीसद्गुरोः कबीरस्य मतम् । तत्र परतत्त्वस्यासङ्गत्वं यथा—

सहज शून्य मन सुमिरते प्रगट भई एक जोत ।
बलिहारी ता पुरुष को निरालम्ब जो होत[3] ॥

अत्र चतुर्थपदेन परतत्त्वस्याङ्गत्वमनाधारत्वं सूच्यते । न तु बौद्धमतशून्यवादस्य पुष्टि 'पुरुष' शब्द वाच्यत्वात् । 'असङ्गोह्ययं पुरुषः[4]' इति श्रुतेः । परतत्त्वस्यौपनिषदत्वं यथा—

वेद कहे सो नहिं लखे, समुझे और कि और ।
चौरासी के धार में, कबहुँ न पावै ठौर[5] ॥

अस्यार्थः—यद्वेदेन निषेधमुखेन कथ्यते परतत्त्वम् तज्जना न विदन्ति, ततोऽन्यदन्यच्च विदन्त्यापरब्रह्मरूपं तत्त्वम् । अतस्ते चतुरशीतिलक्षयोनिषु भ्रमन्तः स्थितिं न लभन्त इति । तदस्मादि वेदान्तवाक्यं यथा—'तं त्वौपनिषदं पुरुषं पृच्छामि[6]' इति श्रुतेः ।

परतत्त्वस्य जगत्कारणत्वं यथा—

एकहिं ते अनन्त अनन्त, अनन्त एक ह्वै आया ।
परिचय भया जु एक ते एकहिं माह समाया[7] ॥

(१) 'बीजक' स्वानुभूतिसंस्कृतरत्नाकराहिन्दी व्याख्या-पृ० १०१ ।
(२) साखी ग्रन्थ जरन अङ्ग १ । क० ग्र० जर्णा को अङ्ग १ ।
(३) बीजक रमैनी साखी ६ । (४) बृ० उ० ४।३।१६ ।
(५) बी० सा० परिशिष्ट ५५ । (६) बृ० उ० ३।९।२६ । (७) बी०सा०२३२ ।

अस्यार्थः—एकं परतत्त्वं स्वशक्त्या मायया अनन्तं जातं सर्गकाले, 'रूपं रूपं प्रतिरूपो बभूव' इति श्रुतेः। प्रलयकाले तु तदेवानन्तं प्रलीय एकं जातम्। यदा तु विचारेण योगेन वा एकस्य परतत्त्वस्य साक्षात्काररूपः परिचयोः जातः, तदातदेवानन्तमेकस्मिन् परतत्त्वे प्रविष्टम्। अर्थात्तदा तत्साक्षात्कर्तुरेकपरतत्त्वरूपेण स्थितिर्जाता इति।

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।
तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः[1]॥

तद्वेदनस्यैव तत्प्राप्त्युपायत्वं यथा—

बूझ आपनी स्थिर रहे, योगी अमर सु होय।
आपा बूझे भरमहिं तजै, आपै और न कोय[2]॥

अस्यार्थः—यदात्मज्ञानं दृढं भवति तर्हि योगी अजरामरात्मवेदनेनामरो भवति। यत आत्मज्ञाने सत्यात्मनो जन्मजरामरणादिरूपो भ्रमस्त्यक्तो भवति। तदा चात्मज्ञाने दृढे जाते सत्यद्वितीयात्मैवैकस्तिष्ठति। अन्यद्द्वैतञ्च तदा नास्ति अनेन आत्मज्ञानेनात्मनस्स्वरूपप्राप्तिस्सूचिता। तत्सम्वादिवेदान्तवाक्यं यथा—

'नान्यः पन्था विद्यतेऽयनाय'[3] इति श्रुतेः।

अस्यार्थः–अयनाय–आत्मनस्समीपे गमनाय–आत्मप्राप्तिरूपाय–अन्यः ज्ञानादतिरिक्तः-पन्था न विद्यत इति।

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्।'[4]
श्रीसद्गुरुकबीरसम्मतमद्वैतरूपं परतत्त्वम्—

मैं लागा उस एक से, एक भया सब माँहि।
सब मेरा मैं सबन का, तहाँ दूसरा नाहिं[5]॥

अस्यार्थः—अहं तस्मिन्नेकस्मिन्नद्वितीये परतत्त्वे ज्ञानध्यानाभ्यामासक्तः। तेन तदेकं परतत्त्वं सर्वेषु भावेषु व्याप्तं दृष्टम्। तदा मया ज्ञातं सर्वं वस्तु मम, अहं सर्वस्येति, तत्र च तेन ज्ञानेन द्वितीयं नास्ति। तदाऽद्वैतरूपं परमात्मतत्त्व मात्मनि सर्वस्मिंश्च जगत्यनुगतं मया दृष्टमिति। तत्संवादीनि वेदान्तवाक्यानि यथा—

(१) श्वे० उ० ६।१३।
(२) बीजक परिशिष्ट साखी २८।
(३) श्वे० उ० ६.१५।
(४) क० उ० १।२।२२।
(५) साखी ग्रन्थ परिचय अ० सा० ५७।

योमां पश्यति सर्वत्र सर्वञ्च मयि पश्यति ।
तस्याहन्नप्रणश्यामि स च मे न प्रणश्यति[1] ॥

अन्यत्र च—

'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः, शिवोऽद्वैत एवमोंकार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद य एवं वेद[2] ।"

## (८) श्रीसद्गुरुकबीरसम्मतः परतत्त्वसंवेदानोपायः

प्रणवस्य स्वरूपतो जपपूर्वकं तदर्थज्ञानमेवाद्वितीयात्मसंवेदनोपाय इति श्रीकबीरस्य प्रौढं मतम् । तद्यथा--

ओओंकार आदि जो जाने, लिखि के मेटे ताहि सो माने ।
ओ ओंकार कहै सब कोई । जिन यह 'लखा' सो बिरले होई ।
'एक अण्ड ओंकार ते सब जग भया पसार'[3] इत्यादि ।

अस्यार्थः—जगत आदिकारणं परापरब्रह्मप्रापकत्वात् परापरब्रह्मरूपम्, ओंकार सम्यग् स्वरूपतोऽर्थश्च यो वेत्ति, स विधिलिखिते पुण्यपापे तत्फले च सुखदु:खरूपे जात्यायुर्भोगरूपाणि च तत्फलानि निवर्तयति । अद्वितीयात्मरूपञ्च परतत्त्वमेकं स मन्यत इति । न तु विनाशशीलस्य लिखितस्य ओङ्कारशब्दस्य ज्ञाने मुक्तिरिति । सत्संवादीनि वेदान्त वाक्यानि यथा—

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥
प्रणवो ह्यपरं ब्रह्म प्रणवश्च परःस्मृतः ।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥
प्रणवं हीश्वरं विद्यात्सर्वस्य हृदि संस्थितम् ।
सर्वव्यापिनमोंकारं मत्वा धीरो न शोचति[4] ॥

तस्मिन् परतत्त्वविषये श्रीसद्गुरुकबीरवाक्यम्—

जाको मुनिवर तप करैं, वेद थकै गुण गाय ।
सोई देउ शिखापना, कहिं न कोई पतियाय[5] ॥

---

(१) गीता ६।३० । (२) मा० उ० १२ ।
(३) बीजक चौंतीसा १, रमैनी साखी २७ ।
(४) मा० उ० आगम प्र० २४–२६, २८ । (५) बीजक साखी १३१ ।

अस्यार्थः--मुनिवरा यत्परतत्त्वं प्राप्तुं तपस्यन्ति-योगविचाररूपे तपसी [कायिकवाचिकमानसभेदैर्भिन्नानि च तपांसि कुर्वन्ति, सर्वे वेदाश्च यस्य समारोपितान् मायया कल्पितान् गुणान् सर्वगन्धः, सर्वरसः, ऐतदात्म्यमिदं सर्वमित्यादिवाक्यैर्वर्णयन्तः । अन्ते च नेति नेति इत्यादिवाक्यैर्निषेधमुखेन यद्रूपं परं प्रतिपादयन्ति, तदेव परं तत्त्वं मह्यं स्वस्वरूपं गुर्वन्तःप्रविश्योपदिशति मया बहुध उच्यमानमपि न कश्चिल्लोकः प्रत्येतीति । एतदर्थविषये संवादि वेदान्त-वाक्यं यथा—

सर्वे वेदायत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तेत्त पदं संग्रहेण ब्रवीम्योमित्येत्[१] ॥

यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचनेति[२] ॥

'अन्यदेव तद्विदितादथो अविदितादधि[३]' ।
'स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते[४] ।'

'गुरुमूर्तिस्थ[५]'—इत्यादिपञ्चदश्यां रामकृष्णकृतटीकाया आदौ एव दृश्यते । परतत्त्वं शुद्धब्रह्मस्वरूपमेवं वर्णितं श्रीसद्गुरुकबीरेण । तद्यथा—

अविगति अकल अनूप देख्या, कहता कह्या न जाई ।
सेन करै मन ही मन रहसे, गुंगे जान मिठाई[६] ॥

अस्यार्थः--यत्परतत्त्वम् गतिरहितम्-अकलम्-अवयवरहितम्-अखण्डत्वात् । अनुपमम्-तन्मयायोगधारणया विशुद्धया-धिया दृष्टम्, तत्तुवाचामगोचरत्वात् कथयितुं न शक्यते । यथा मूकः पुरुषो मिष्टान्नमास्वाद्य मनसेवानुभवन् तद्विषयां संज्ञां करोति न तु वद वर्णयितुं शक्त इति । तत्संवादीनि वेदान्तवाक्यानि यथा—

(१) क० उ० १।२।१५ । (२) तै० उ० २।४।१ ।
(३) के० उ० १।१।३ । (४) बृ० उ० ३।९।२६ ।
(५) 'पञ्चदशी' श्रीरामकृष्णटीका हस्तलिखिततस्योपरि पं० श्रीगुरुवर्यकाशीनाथ जी कृत ।
(६) क० ग्र० पद ६ पृ० ९०

'न तत्र चक्षुर्गच्छति न वाग्गच्छति न मनो विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथोऽविदितादधि। इति शुश्रुम पूर्वेषां ये नस्तद्व्या च चक्षिरे[1]।'

यद्विदितं तदल्पं मर्त्यं दुःखात्मकं चेति हेयम्।
तस्माद्विदितादन्यद् ब्रह्म इत्युक्ते त्वहेयत्वमुक्तं स्यात्।[2]
'तं केन कं पश्येत' इत्यादि[3]।

सर्वगं परतत्त्वस्वरूपं दर्शितं श्रीसद्गुरुणा तद्यथा—

पाया कहे सो बावरा, खोया कहे सो कूर।
पाया खोया कछु नहिं, ज्यों का त्यों भरपूर[4]॥

अस्यार्थः—अप्राप्तस्य खलु प्राप्तिर्भवति परतत्त्व तु सर्वगतत्वान्नित्यप्राप्तमेव। अतो मया परतत्त्वं प्राप्तमिति यो वदति स उन्मत्तः। परिच्छिन्नस्य हि हानं परित्यागरूपं भवति, न तु सर्वगस्य, परतत्त्वं तु सर्वगतत्वान्न हेयम्। अतो मम परतत्त्वं दूरं जातं विनष्टं वा इति यो वदति स मूर्खः 'अज्ञानी) इति। अतः परतत्त्वं नोपादेयं न हेयं नश्वरं वा किन्तु सर्वत्र परिपूर्णमिति। तत्संवादीनि वेदान्तवाक्यानि यथा—

तदेजति तन्नैजति तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः[5]॥
'दूरात्सुदूरे तदिहान्तिके च'[6]

अधोलिखितानि श्रीसद्गुरुकबीरवाक्यानि व्यापके एकाद्वितीयपरात्मतत्त्वे प्रमाणभूतानि। यथा—

ज्ञान अमरपद बहिरे, नीयरे ते है दूर[7]। इत्यादि।
कबीर सब घट आतमा, सिरजी सिरजनहार।
राम कहे सो राम सम, रहता ब्रह्म विचार[8]॥

अस्यार्थः—सृष्टिकर्ता भगवान्-आत्मस्वरूपस्सर्वेषु पिण्डेषु वर्तमाने जगत्सृष्टिं कृतवान्, यो 'राम' इति नाम सततं जपति, स ब्रह्मात्मैक्यविचारेण रामसमो

(१–२) के० उ० १।१।३। (३) बृ० उ० २।३।१४।
(४) 'साखी ग्र० पृ० ६५४ सा० २८ (५ ई० उ० ५।
(६) मु० उ० ३।१।७। (७) बी० र० ३०।
(८) 'साखी ग्र०' पृ० ६७६ सा० ३।

भवति, 'निरञ्जनः परमं साम्यमुपेति' इति श्रुतेः। अत्र रामपदेन रामस्य निर्गुणं स्वरूपं विवक्षितम्। अन्यच्च—

बाहर भीतर राम है, राम विना नहिं ठाम।
जित देखूं तित राम है, नैनन का अभिराम[1] ॥

अस्यार्थः—देहस्यान्तर्बहिश्च निर्गुणः परमात्मा रामोऽस्ति, किमपि तत्स्थानं नास्ति यत्र निर्गुणरामो न वर्तते। एवं सगुणो रामोऽपि सर्वत्र वर्तते, श्रीसद्गुरु-कबीरो वदति यत्राहं पश्यामि तत्र सर्वत्रैव नयनाभिरामो भूनभीतिकोपाधिको राम एव वर्तते। एवमेव—

मो में तो में सरव में जहं देखूं तहं राम।
राम बिना क्षण एक भी, सरे न एको काम[2] ॥

अस्यार्थः—मयि त्वयि सर्वत्र च रामो वर्तते, यत्राहं पश्यामि तत्र सर्वत्रैव तत्तदुपाध्यवच्छिन्नो राम एव दृश्यते। रामं विना क्षणमपि किञ्चिदपि कार्यं न संपद्यते, सर्वस्य कारणत्वात्। सद्गुरुः उपमानोपमेयद्वाराऽकथयत्, तद्यथा—

पावक एक अनेक ज्यों, दीपक और मसाल।
कहैं कबीर त्यों जानिये, ब्रह्म मध्य जग जाल[3] ॥

अस्यार्थः—यथा एकः पावको दीपकोल्मुकादिरूपैरनेको भवति, तथा एकस्मिन्नेव ब्रह्माणि सकलं जगज्जालं समारोपितमित्यैकं ब्रह्मैव जगद्रूपेणानेक भवति। एवमेव—

पानी मध्ये लीक ज्यों, लीक मध्य ज्यों पानि।
त्यों जग मध्ये ब्रह्म है, ब्रह्म जगत में जानि[4] ॥

अस्यार्थः—यथा रेखायां पानीयमस्ति पानीयमध्ये रेखा वा अस्ति, तथा जगन्मध्ये ब्रह्म ब्रह्ममध्ये च जगदस्तीति वेदनीयम्। तथैव—

साहब मेरा एक है, दूजा कहा न जाय।
दूजा साहब जो कहूं, साहब खरा रिसाय ॥[5]

(१) 'साखी ग्र०' पृ० ८५६ सा० ४४ (२) तत्रैव सा० ४१।
(३) तत्रैव सा० ४०,
(४) 'साखी ग्र०' पृ० ८५६ साखी १८। (५) 'साखी ग्र०' पृ० ६८५ सा० २६।

अस्यार्थः—मम स्वामी परमात्मा एक एव वर्तते, द्वितीयस्तु कथंचिन्न लभ्यते। यद्यहं द्वितीयं स्वामिनं कथयामि, तदा मम स्वामी रुष्टो भवतियन्मां विहायान्यं स्वामिनम् मनुतेऽयमिति। अन्यत्र बीजकेऽपि तदवदुक्तम्—

'भाई रे दुई जगदीश कहां ते आया'[1] इत्यादि।

यथा लोके कस्यचिद् भृत्योऽन्यो ममायं स्वामीति कथयति तदा तस्य स्वामी तस्मैक्रुध्यति।

जीवब्रह्मणोरैक्यं श्रुतिसंमतं वर्णितं श्रीसद्‌गुरुकबीरेण। तद्यथा—

देही मांहि विदेह है, साहब सुरत सरूप।
अनन्त लोक में रमि रहा, जाके रंग न रूप[2]॥

अस्यार्थः-यो विदेहोऽनन्तलोकेषु रममाणः, यस्य नीलपीतादिवर्णो न विद्यते, आकारश्चापि न विद्यते, सोऽरूपोऽपि ध्याने सविकल्पसमाधिरूपे सरूपो दृश्यते, स एव चोपाधिपरिछिन्नो देहे जीवरूपेण देहेन्द्रियाभिमानितया वर्तते इति। एतत्सम्वादीनि वेदान्तवाक्यानि यथा–

अंगुष्ठमात्रो रवितुल्यरूपस्संकल्पाङ्काहरसमन्वितो यः।
बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोऽपि दृष्टः[3]॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत्॥

ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम्।
विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति[4]॥

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति[5]॥

इहैवान्तः शरीरे सोम्य ? स पुरुषो यस्मिन्नेताः षोड्शकलाः प्रभवन्तीति[6]।

राम कबीरा एक है, दूजा कबहुँ न होय।
अन्तर टाटी भरम की, ताते देखै दोय॥

(१) बीजक शब्द २६। (२) 'साखी ग्रं०' पृ० ६८६ सा० १५।
(३) श्वे० उ० ५।८। (४) श्वे० उ० ३।१७, ३।७।
(५) क० उ० १।२।२२। (६) प्र० उ० ६।२।

राम कबीरा एक है, कहन सुनन को दोय।
दोय करि सोई जानई, सतगुरु मिला न कोय[१] ॥

तत्स्वादीनि वेदान्तवाक्यानि यथा—

"अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मापश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति[२]" इत्यादि।

'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽस्ति मन्ता[३] इत्यादि।

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः[४] ॥

परमात्मरूपं परतत्त्वं शुनि श्वपाके पण्डितेऽपण्डिते गविगर्दभे च एकरूपमेव पश्यति इति श्रीसद्गुरुकबीरमतम् तद्यथा—

उहवां तो सब एक है, परदा रहिया वेष।
भरम करम सब दूर कर, सब ही मांह अलेख[५] ॥
ज्यों नैनों में पूतली, त्यों खालिक घट माहिं।
मूरख लोग न जानहीं, वाहर ढूढ़न जाहिं[६] ॥

एतदर्थे सम्वादीनि वेदान्तवाक्यानि यथा—

'एषोऽन्तर्हृदय आकाशः[७] ॥'

अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः।
हृदा मनीषी मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति[८] ॥
अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्[९] ॥

'शुनि चैव श्वपाके च पण्डिता समदर्शिनः[१०] ।'

'सन्तो सद्गुरू अलख लखाया, जब आप आप दरशाया'[११] इत्यादि।

(१) 'साखी पृ० ९९६ सा० ५-६। (२) छा० उ० ७।२५।२।
(३) बृ० उ० ३।७।२३। (४) ई० वा० उ० ७।
(५) साखी पृ० ९७६ प्र० सा० २। (६) साखी प्र० पृ० ८४९, साखी २।
(७) बृ० उ० २।१।१७। (८) श्वे० ३।१३।
(९) तत्रैव ३।२०, क० उ० १।२।२० (१०) गीता अ० ६।
(११) सन्तो सतगुरु अलख लखाया, जब आप आप दरशाया।
बीज मध्ये ज्यों वृक्ष देखिये, वृक्षा मध्ये छाया ॥

परतत्त्वस्य सर्वगतत्वमविद्याऽऽवृत्तत्वञ्च वर्णितं श्रीकबीरेण, तद्यथा--

तेरा साईं तुझ में ज्यों पुष्पन में वास।
कस्तूरी का मृग ज्यों फिरि फिरि ढुंढै घास[1] ।।

अस्यार्थः—यथापुष्पेषु गन्धः, तथा तव स्वामी-प्रभुः परब्रह्मरूपोऽरूपस्त्वय्येव वर्तते, त्वं त्वविद्यया तीर्थेषु देवायतनेषु पुण्यवनेषु पुण्यसरःसु सत्संगेषु तमन्वेषयसि, यथा कस्तूरिकामृगो निजनाभौ वर्तमान कस्तूरिकामविद्यया न वेत्ति, बहिश्चगन्धमाजिघ्रन्, घासेतामन्वेषयतीति । एवमेवान्यैः पद्यैरुक्तं श्रीकबीरेण—

"कस्तूरी नाभी बसे, नाभि कमल हरिनामा।
ऐसे घट में पीव हैं, दुनिया जानै नाहिं ।।
जो साहब तन में बसै, मरम न जानै तास।
कस्तूरी के मृग ज्यों, फिरि फिरि ढूण्ढै घास[2] ।।

अस्यार्थः—यथा नाभौ सतिमपि कस्तूरिकां मृगो न वेत्ति, बहिश्च तामन्वेषयति तथा नाभिकमले स्थितमपि हरिनाम प्रणवरूपं बहिस्ततस्ततस्यानव्यन्वेषयति, न च प्राप्नोति गुरुं विना।

---

परमातम मे आतम दरसे, आतम मध्ये माया।
ज्यों नभ मध्ये शून्य देखिए, शून्य अण्ड ओंकारा ।।
निःअक्षर में अक्षर तैसे, अक्षरक्षर विस्तारा।
ज्यों रविमध्ये किरण देखिये, किरण मध्य परकाशा ।।
पारब्रह्म ते जीव ब्रह्म है, जीव मध्य में श्वासा।
श्वासा मध्ये शब्द देखिये, अर्थ शब्द के माहीं ।।
ब्रह्म से जीव जीव से मन है, न्यारा मिला सदा ही।
आपहिं बीज वृक्ष अंकुरा, आप फूल फल छाया ।।
सूरज किरण प्रकाश आप ही, आप ब्रह्म जिव माया।
आतम में परमातम दरसे, परमातम मे झाईं ।।
झाईं में परछाईं सोजे, लखे कबीरा साईं ।।६।।

—श० मृ० सि० पृ० ९३ । भ० ९

(१) 'साखी ग्र० पृ० ५५० सा० ६ । (२) साखी ग्र० पृ० ५५० सा० ८-९।

साक्षिरूपं-विश्वरूपं-सर्वात्मकं-व्यापकञ्च परतत्त्वं वर्णितं श्रीसद्गुरुकबीरेण, तद्यथा—

'जेता घट तेता मता बहु वाणी बहु भेख'[1] ।
'घट बढ़ काहु न देखिये, ब्रह्म सकल भरपूर[2]....'
'अगम अगोचर गम नहिं' इत्यादि शब्दैः उक्तम् साखीग्रन्थे ।

अस्यार्थः—यः सर्वेषु पिण्डेषु वर्तमानोऽगम्योऽपारोऽलेखरस्वामी स एव यावन्ति पिण्डानि तावत्सु वर्तमान उपाधिपरिच्छिन्नो बहुशब्दगोचरो बहुवेषश्च भवति ।

अदृश्यस्य ब्रह्मणस्सर्वंगतत्वं दर्शितं श्रीसद्गुरुणा 'घट बढ़' इति ।

अस्यार्थः—तस्य सर्वंगतस्य ब्रह्मणः ऊनत्वम् वृद्धिर्वा केनापि न दृष्टा, सर्वंगतत्वात् । ज्ञातुर्निकटं ब्रह्म, अज्ञातुश्च दूरेतदिति ।

एतत्संवादीनि वेदान्तवाक्यानि । तद्यथा—

'आत्मैवेदं सर्वम्'[3]
'इदं सर्वं यदयमात्मा'[4]
'वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति'[5]
'य आत्मा सर्वान्तरः एष त आत्मा सर्वान्तः[6]'
सर्वभूतेषु चात्मनं सर्वं भूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वराज्यमधिगच्छति[7] ॥
'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः[8]।'
तदेवाग्निस्तदादित्यस्तद्वायुस्तद चन्द्रमा ।
तदेव शुक्रं तद्ब्रह्म तदापः स प्रजापतिः[9] ॥ इत्यादि
अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति[10]॥

(१) साखी ग्र० पृ० ८४७ सा० १ । (२) सा० ग्र० पृ० ८५१ सा० १५ ।
(३) छा० उ० ७।२५।२ । (४) बृ० उ० २।४।६ ।
(५) मु० उ० ३।२।९ । (६) बृ० उ० ३।४।१ ।
(७) मनुस्मृ० १२।९१ । (८) ऋ० वे० सं० १।१६४।४६ ।
(९) यजु० वे० ३।३२।५ । (१०) क० उ० ३।२।२२ ।

ब्रह्म सर्वशरीरेषु बाह्ये चाभ्यन्तरे स्थितम् ।
आकाशमिव भूतेषु बुद्धावात्मा न चान्यथा[१] ॥

उक्तञ्चसद्गुरुणा–मो में तो में सरब में, जहँ देखूं तहँ राम ।
राम बिना छिन एक ही, सरे न एको काम[२] ॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तथा[३] ॥

अग्निर्यथैको भुवनं प्रविष्टो, रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च[४] ॥

परमात्मात्वमेको नान्योऽस्ति जगतः पतेः ।
तवैव महिमा येन व्याप्तमेतच्चराचरम्[५] ॥

परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ।
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ॥
तस्यात्मपरदेहेषु संयोगो ह्येक एव यत् ।
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ॥

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन कृतं पापं चौरेणात्माऽपहारिणा[६] ॥

ब्रह्म सर्वव्यापकं वर्तते । तच्च सर्वशरीरेषु सर्ववस्तुषु चोपलभ्यमानम् एकमेवाद्वितीयम्' इत्ययमेवार्थः उपर्युक्तश्रीकबीरपद्येषु श्लोकेषु च प्रतिपादितम् ।

'तेरा साँई तुझहि में' इति ।

'एक एव परो ह्ययात्मा भूतेष्वात्मन्यवस्थितः ।
यथेन्दुस्तपात्रेषु भूतन्येकात्मकानि च[७] ॥

उक्तं सद्गुरुणा "अगम अगोचर रूप बहु औ अरूप बहु भाय[८]"

(१) श्वे० उ० १।८ ( भाष्य ) । (२) साखी ग्र० पृ० ५८६ साखी ४१ ।
(३) गीता ११।१३ । (४) क० उ० २।२।९ ।
(५-६) विष्णु धर्मोत्तरपु० अ० ६।१।४।४८ । अ० ६।७।१४।२८-२९-३१ ।
(७) सा० ग्र० पृ० ८४७ । (८) श्रीमद्भा० पु० ११।१८।३२ ।
(९) बीजक रमैनी साखी ७०

न तद्भासयते सूर्यो, न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम[1] ॥
दुर्निरीक्ष्यं समन्ताद् दीप्तानलार्कद्युतिमप्रमेयम् ।
...... तेजोमयं विश्वमनन्तमाद्यं यन्मे......[2] ॥

'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति[3] ।'
'अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः[4] ।'
'इहैवान्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति[5]।'

कस्तूरीमृगदृष्टान्तेन सह साम्यत्वम्, यथा —

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्रचया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः[6] ॥
'यद् जाग्रतो दूरमुपैति देवम्...'

इत्यादिभिः समासेन साम्यत्वं दृश्यते । ब्रह्म सर्वशरीरेषु दारुष्वग्निरिव प्रच्छन्नः न शक्यते उपायं विना द्रष्टुम् । अतो जीवः स्वप्रयत्नेन ध्यानाभ्यासेन तद्द्रष्टुमर्हतीति श्रीकबीरस्याभिमतं श्रुतिसम्मतञ्च ।

आश्चर्यरूपं ब्रह्मस्वरूपं निरुपाधिकं व्यापकमिति श्रीकबीरसिद्धान्तो वेदान्त-सिद्धान्तसवादी । यथा—

'भाई रे अदबुद रूप अनुप कथा है[7].......' इत्यादि ।

(१) गीता १५।६ । (२) श्रीम० भा० ११।१७।४८ ।
(३) क० उ० २।५।१५ । (४) मु० उ० ३५ ।
(५) प्र० उ० ६।२ । (६) क० उ० १।३।१२ ।
(७) 'अदबुद रूप अनूप कथा है । कहु तो को पतिआई ॥
जहं जहं देखौं तहं तहं सोई । सब घट रहल समाई ॥
लछि बिनु सुख दारिद्र बिनु दुख । नींद बिना सुख सोवै ॥
यश बिनु ज्योतिरूप बिनु आशिक । रतन बिहूना रोवै ॥
भ्रम बिनु गंजन मान बिनु निरखन । रूप बिना बहु रूपा ॥
तिथि बिनु सुरति रहस बिनु आनन्द । ऐसो चरित्र अनूपा ॥
कहहिं कबीर जगत हरि मानिक । देखहु चित अनुमानी ॥
परिहरि लाख लोग कुटुम तजि । भजि रहु सारंग पानी ॥
—बीजक शब्द ४५ ।

"आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः[१] ।'

'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्[२]'

'आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा
दक्षिणत आत्मोत्तरत आत्ममैवेदं सर्वमिति ।'

'एकधैवानुद्रष्टव्यमिति[४]'

'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्[५] ।'

'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरि-
त्येतदनुशासनम् ।

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रस घन एव ।
एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृतस्नः प्रज्ञानघन एव[६] ॥

निरञ्जनस्यानुपाधिकस्य परतत्त्वस्याद्वैतानन्दस्य वागगोचरत्वं दर्शितं श्रीसद्गुरुणा कबीरेण तद्यथा—

'कहु हो निरञ्जन कौने वाणि[७] ।'

अस्यार्थः स्पष्टः इति । एतदर्थं सम्शादीनि वेदान्तवाक्यानि—

"स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सौम्य[८] ।'

'एवं मृत्युं जायमानं विदित्वा ज्ञानेन विद्वांस्तेज अभ्येति नित्यम् ।
न विद्यते ह्यन्यथा तस्य पन्थास्तं मत्वा कविरास्ते प्रसन्नः[९] ॥

'यद्वाचाऽनभ्युदितम्[१०] इति ।'

(१) क० उ० १।२।७ (२) मु० उ० २।१।१० (३) छा० उ० ७।२५।२ ।
(४) बृ० उ० ४।४।२० । (५) श्वे० उ० १।१२ (६) बृ० उ० २।५।१९,४।५।१३

(७) कहु हो निरञ्जन कौने वाणी ।
हाथ पांव मुख श्रवण जीभ नहि । का कहि जपहु हो प्राणी ॥
ज्योतिहिं ज्योति ज्योति जो कहिये, ज्योति कवन सहिदानी ॥
ज्योतिहिं ज्योति ज्योति दे मारै, तब कहं ज्योति समानी ।
चार वेद ब्रह्मा जो कहिया, तिनहुं न या गति जानी ।
कहहिं कबीर सुनहु हो सन्तो, बूझहु पण्डित ज्ञानी ॥

(७) बीजक शब्द ९३ । (८) प्र० उ० ४।१० ।
(९) श्वे० उ० शां० भा० पृ० २१ । (१०) के० उ० १।४ ।

'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्[१]'

'चतुर्वेदान् हि यो ब्रह्मा प्रोक्तवान् सोऽपि चिद्घने।
शुद्धे न वचसो वृत्ति गतिं वा ज्ञातवान् प्रभुः॥
आहाऽतः सद्गुरुर्धीराः ? श्रवणं सुविधीयताम्।
ज्ञायतां पण्डितान् पृष्ट्वा नाममात्रान्न तद् भवेत्[२]॥

'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्[३]'

परतत्त्वस्य व्यापकत्वम्, वागविषयत्वम्, सर्वदेहेन्द्रियधर्मराहित्यम्, एकत्वम्, सर्वसंसारधर्मराहित्यञ्च श्रीकबीरसम्मतम्, तद्यथा—

'एके काल सकल संसारा……'
'रूप निरूप जाय नहिं बोली……'
अगम अपार रूप वहु औ अरूप वहु भाय।
वहुत ध्यान के जोहिया, नहिं तेहि संख्या आय॥

तत्सम्वादीनि वेदान्तवाक्यानि यथा—

'अस्त्यनन्त विलासात्मा सर्वगः सर्वसंश्रयः।
चिदाकाशोऽविनाश्यात्मा प्रदीपः सर्वजन्तुषु[४]॥
एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्[५]॥
न नरेणावरेण प्रोक्त एष, सुविज्ञेयो बहुधा चिन्त्यमानः।
अनन्यप्रोक्ते गतिरत्र नास्ति, अणीयान्ह्यतर्क्यमणुप्रमाणात्[६]॥
'कतम आत्मेति योऽयं विज्ञानमयः[७]……'

चित्स्वभाव ज्योतिरूपेणावभासयन् तत्सदृशस्तत् समानः सन् ध्यायतीव आलोकवदेव अतो भवति चिन्तयतीति भ्रान्तिर्लोकस्य, न तु पारमार्थतो ध्यायतीव[८]। इति श्रीसद्गुरुकबीरो निर्गुणं राममेव व्यापकमद्वितीयमेकं ब्रह्मेति मन्यते। तद्यथा—

---

(१) क० उ० १।२।२१।
(२) बी० श० ९३ सं० टीका पृ० ५१५
(३) ई०उ० ८।
(४) बी० रमैनी सा० ७७।
(५) यो०वा० २।१०।११
(६) क० उ० १।२।८।
(७) बृ० उ० ४।३।७।
(८) तत्रैव शां० भाष्य।

राम रहीमा एक है, नाम धराया दोय।
कहैं कबीर दो नाम सुनि, भरम पड़ो मति कोय[1]॥

अस्य भावार्थ—एतच्चोपपद्यत एव सर्वस्य जीवतत्त्वस्य परतत्त्वस्य वा निर्गुणस्य निरुपाधिकस्य ब्रह्मरूपत्वादिति। एतदर्थसम्वादिनी वेदान्तवाक्यानि यथा—'न ह्युपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावः सम्भवति[2]।'

अतदचान्यान्तरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यं न तद्विपरीतम्। 'अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनात्मजार्तिहितम्[3]।'

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति[4]॥

परब्रह्मणः सर्वदेहस्थत्वं सर्वहृदयस्थत्वं कर्मसाक्षित्वं कर्मफलप्रदातृत्वञ्च दर्शितं श्रीसद्गुरुणा तद्यथा—

बैठा है घट भीतरे पैठा है सह चेत।
जब जैसी गति चाहिए, तब तैसी मति देत[5]॥

एतत्संवादीनि वेदान्तवाक्यानि—

'स देवो विश्वकर्मा महात्मा सदा जनानां हृदये सन्निविष्ट'
'स ह्येवैनं साधु कर्म कारयति'
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया[6]॥

अस्यार्थः—हे अर्जुन! ईश्वरः प्राणिनां हृदयदेशे स्थितः सन् कर्मार्थं प्रेरयति।

जानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः।
केनापि देवेन हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमि[7]॥

दुर्योधनः कृष्णं प्रति कथयति—अहं धर्ममधर्मञ्च जानामि किन्तु हृदयस्थितेन देवेन नियन्त्रितः सन् यथानियोगं कार्याकार्यं करोमि।

(१) 'साखी ग्र०' पृ० ९९६ सा० २।
(२) ब्र० सू० ३।२।११ शां० भाष्य। (३) मुक्ति० उ० २।७२।
(४) क० उ० ३।१।८। (५) बीजक साखी ३३७।
(६) गीता ७।१६। (७) पञ्चदशी ६।१७६।

काम एव संसारस्य मूलम्—यत्प्रयुक्ताः पुरुषा अमृतवस्तु परतत्त्वं न विदन्ति, संसारे च निमज्जन्ति। येषां पुरुषाणां हृदि कामो नास्ति ते मरणं नाप्नुवन्तीत्येषोऽर्थो दर्शितः श्रीकबीरेण तद्यथा—

अमृत वस्तु जानै नहीं, मगन भया सब लोय।
कहँहि कबीर कामो नहिं, जीवहिं मरण न होय[1]॥

एतत्सम्वादीनि वेदान्तवाक्यानि यथा—

"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य[2]"...

'तस्मात्तन्मनोऽभिषङ्गवशादेवास्य तेन कर्मणा तत्फलप्राप्तिः। तेनैतत् सिद्धं भवति, कामो, मूलं संसारस्येति[3]'।

कामं जानामि ते मूलं संकल्पात्त्वं हि जायसे।
न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि[4]॥

'...आत्मैव रिपुरात्मनः[5]।'

अक्षयपुरुषस्य मायोपहितस्य वृक्षरूपत्वं निरञ्जनस्य चानुपहितस्यैकशाखात्वम्, ब्रह्माविष्णुमहेश्वराणाञ्च शाखात्रयरूपत्वम्–संसारस्य च पत्ररूपत्वं रूपकेण कल्पितं श्रीसद्गुरुकबीरेण तद्यथा—

अक्षय पुरुष एक पेड़ है, निरञ्जन वाकी डार।
तिरदेवा साखा भये, पात भया संसार[6]॥

एतत्सम्वादीनि वेदान्तवाक्यानि यथा—

ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातनः।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते[7]॥
स वृक्षकालाकृतिभिः परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽयम्।
धर्मावहं पापनुदं भगेशं ज्ञात्वात्मस्थममृतं विश्वधाम[8]॥
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्[9]॥

---

(१) बीजक रमैनी साखी १०। (२–३) बृ० उ० ४।४।६।
(४) म० भा०, शा० प० १७७।२५। (५) गीता ६।५।
(६) 'साखी ग्र०' पृ० ६८४ सा० १। (७) क० उ० २।३।१।
(८) श्वे० उ० ६।६। (९) गीता १५।१।

निर्गुणरामस्य व्यापकत्वं दर्शितं श्रीसद्गुरुकबीरेण तद्यथा —

साधो राम विना कछु नाहीं ।
राम हि आगे राम हि पीछे, राम हि बोले माँहिं ॥[१] इत्यादि

## अनुभवरूपस्य ज्ञानस्य स्वप्रकाशत्वम्

अद्वैतिनां मते तदनुयायिनि श्रीकबीरमते च ज्ञानं द्विधा—अन्तःकरणवृत्तिरूपम्, आत्मचैतन्यरूपञ्च । तत्र वृत्तिरूपं ज्ञानमपिद्विविधानुभवरूपं स्मृतिरूपञ्च । यद्यपि वृत्तिरूपं ज्ञानमन्तःकरणपरिणामत्वाद् जडम्, तथापि चिदाभासमाश्रित्य चैतन्यमिव भासते । अत एव उक्तं वेदान्तपरिभाषायाम्—'वृत्तौ ज्ञानत्वोपचारादिति[२]' आत्मचैतन्यरूपं तु ज्ञानं प्रत्यक्षानुभवरूपमेव । तदुक्तं श्रुतौ—'यत् साक्षादपरोक्षाद् ब्रह्म[३]' इति । यदपरोक्षं तत् साक्षाद् ब्रह्म इति तदर्थः । यद्यपि वृत्तिरूपः प्रत्यक्षानुभवः साक्षिभास्यः, तथापि आत्मचैतन्यरूपः प्रत्यक्षानुभवः स्वप्रकाशः । तदुक्तं प्रत्यक्तत्त्वप्रदीपिकायाम्—

चिद्रूपत्वादकर्मत्वात् स्वयं ज्योतिरिति श्रुतेः ।
आत्मनः स्वप्रकाशत्वं को निवारयितुं क्षमः[४] ॥

(क) आत्मा स्वप्रकाशः चिद्रूपत्वात्, यन्नैवं तन्नैवं, यथा घटादि दृश्यम् ।

(ख) आत्मा स्वप्रकाशः, ज्ञानकर्मत्वाद्, यन्नैवं तन्नैवं यथा घटादिदृश्यम् ।

(ग) आत्मा स्वप्रकाशः अत्रैव आत्मा स्वयं ज्योतिः इति श्रुतिवचनविषयत्वात्, यन्नैवं तन्नैवं यथा घटादिदृश्यमित्यनुमानत्रयमेतत् कारिकया विवक्षितम् ।

स्वप्रकाशत्वञ्चावेद्यत्वे सति—अपरोक्षत्वरूपम् । स च प्रत्यक्षरूपोऽनुभवः परब्रह्मरूप एकोऽपि अविद्याप्रयुक्तया कल्पनया जीवसाक्षीश्वरसाक्षिभेदाभ्यां वेदान्तशास्त्रेषु द्विधा व्यवह्रियते इति ।

स स्वप्रकाशोऽनुभवरूपोऽस्ति, तत्प्राप्तये पत्रस्य लेखन्याश्च बलं नास्ति । अत सोऽक्षरगम्यो नास्ति । य अक्षरं विमुच्य स्वबुद्ध्या विचारयति, स एव तस्य वेत्ता भवति । यथा—

---

(१) शब्दामृतसिन्धु पृ० १०८ भ० ५–४ ।

(२) वेदान्तपरिभाषा हिं० टीका पृ० २१ । (३) बृ० उ० ३।४।१ ।

(४) चित्सुखी प्र० परि० पृ० ३८ श्लोक ९ ।

नहिं कागज नहिं लेखनी, नहिं अक्षर है सोय।
पुस्तक छाड़ि जो वांचई, पण्डित कहिये सोय[१] ॥

शब्दानां मूलं नादो भवति, पदार्थानां च मूलं बिन्दुर्भवति। तत् परतत्वं नादबिन्दुभ्यामपि अप्राप्यमस्ति। अतो यः पञ्चतत्वेभ्यो गुणत्रयाच्च व्यतिरिक्तः स एव अपारोऽलक्षश्च पुरुषः। तद्यथा--

नाद बिन्दु ते अगम है, पांच तत्व ते न्यार।
तीन गुणन ते भिन्न है अलख पुरुष अपार[२] ॥
पारब्रह्म के तेज का कैसा है उनमान।
कहिवे कूं शोभा नहीं, देखे ही परमान[३] ॥

सद्गुरोरियमुक्तिरप्युपनिषद्वचनस्यानुवादमात्रम्। नचिकेतसः प्रश्नेन तस्यान्तरिकं भावं ज्ञात्वा यमराजः कथयति—हे नचिकेतः तस्य स्वप्रकाशस्य ज्ञानस्य समक्षे सूर्यः न प्रकाशितो भवति। अर्थाद् यथा उदिते सूर्यप्रकाशे खद्योतस्य प्रकाशो लुप्तो भवति, तथैव सूर्यस्य तेजोऽपि स्वप्रकाशस्यासीमतेजसः समीपे लुप्तं भवति। तत्र चन्द्रतारागणः विद्युदपि न विद्योतते। तदा अस्य लौकिकाग्नेः का वार्ता? यतो यानि तत्वानि प्रकाशकानि सन्ति तानि कृत्स्नान्यपि स्वप्रकाशस्यांशमादायैव स्वप्रकाशकानि भवन्ति। अतः स्वप्रकाशसमीपे तानि स्वप्रकाशं कथं तन्वन्तु। यथा—

'न तत्र सूर्यो भाति च चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।
'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति[४] ॥

अन्यत्र च'--एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्यचन्द्रमसौ विधृतौ तिष्ठतः[५]......... ।

जाको मुनिवर तप करे, वेद थके गुण गाय।
सोई देउ सिखापना, कहि न कोई पतियाय[६] ॥

अर्थात् यदर्थं मुनयः तपश्चरन्ति, यस्य च स्वप्रकाशस्य गुणान् उद्गाय वेदाः श्रान्ताः भूत्वा वचनागोचर इति कथयन्ति, तस्यैव वेदान्तवेद्यस्य शिक्षां

(१) साखी ग्र० पृ० ४४३ सा० २१। (२) साखी ग्र० पृ० ४४३ सा० २२।
(३) साखी ग्र० पृ० २४९ सा० २ (४) क० उ० २।५।१५।
(५) बृ० उ० ३।८।९। (६) बी० सा० १३१।

सद्गुरुः श्रीकबीरो ददाति किन्तु अविवेकी न प्रत्येति। श्रीसद्गुरोरयमभिप्रायः सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति[१]' इति कठोपनिषदः प्रतिच्छाया।

वेदो गुणानुद्गाय कियान् श्रान्तो भवतीति दर्शनीयं—

(क) 'को अद्धा वेद क इह प्रवोचत् कुत आयाता, कुत इयं विसृष्टिः[२]'

(ख) 'स एष नेति नेत्यात्मा[३]'

(ग) नाहं मन्ये सुवेदति नो न वेदेति वेद च।
यो नस्तद् वेद तद् वेद नो न वेदेति वेद च[४]॥

केनोपनिषत् कथयति 'यदहं ब्रह्म सम्यग् जानामि इति न मन्ये, नावगच्छामि इत्यपि न मन्ये, यतो जानाम्यपि। अर्थात् मम ब्रह्मसम्बन्धिज्ञानं तादृशं न विद्यते यथा कश्चिद् ज्ञाता किमपि ज्ञेयं वस्तु जानाति। अत एव यदिदं कथयामि यदहं न जानामीत्यपि न यतो जानाम्यपि मम अस्य कथनस्य रहस्यं स एवावगन्तुं शक्नोति यस्तद् ब्रह्म जानाति।

(घ) तैत्तिरियोपनिषत् कथयति—'यतो वाचा निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्राह्मणो विद्वान्[५]' इत्यादि।

अर्थात् ब्रह्म एतादृशं वस्तु विद्यते, यद् अप्राप्य मनसा सह वागुपलक्षितानि सर्वाणीन्द्रियाणि परावर्तन्ते। इत्यमनुभवरूपस्य ज्ञानस्य स्वप्रकाशत्वं शब्दादिविषयमतीत्य वर्तते।

## अनुभवरूपस्य ज्ञानस्य सद्रूपत्वं ब्रह्मरूपत्वञ्च

अनुभवरूपं ज्ञानं सद्रूपमविनाशि चेति अद्वैतवेदान्तिनः। न तु क्षणभङ्गवादिनां बौद्धानामिव क्षणिकं ज्ञानम्। नापि शून्यवादिनां बौद्धानामिव असद्रूपम्। तथाहि—सत्यं ज्ञानमनन्तं ब्रह्म[६]' इति ज्ञानं सत्यानन्तपदाभ्यां सह सामानाधिकरण्येन श्रूयते। अनन्तमित्यस्य अन्तरहितमविनाशि इत्यर्थः। एतदेव श्रीकबीरस्यापि मतं यथा—

---

(१) कठोप० १।२।१५। (२) ऋग्वेद १०।१२९।६।
(३) बृ० उ० ४।२।४। (४) केन उ० २।३।
(५) तै० उ० २।४।१। (६) तै० उ० २।१।१।

शून्यहि बांछे शून्य हि गयऊ। हाथा छोड़ि वेहाथा भयउ[1]।

अत्र श्रुतौ सत्यमित्यस्य सत्तावदिति नार्थः, निर्धर्मकत्वाद् ब्रह्मणः। किन्तु लक्षणया सत्यपदस्यासद् व्यावृत्तमित्यर्थः। अत एव ब्रह्मणो मायाकार्यमिथ्याभूतजगदधिष्ठानत्वेन ब्रह्म गतं सत्यत्वं चित्त्वम्, आनन्दरूपत्वेन प्रियत्वञ्चाध्यारोपिते जगति भासते तदुक्तम्--

अस्ति भाति प्रियं रूपं नामचेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्[2]॥

अत्र श्रुतो ज्ञानपदस्य ब्रह्मपदेन सह सामानाधिकरण्याच्च अनुभवरूपस्य ब्रह्मरूपत्वमपि सिद्धं भवति। इति। तत्र श्रीकबीरसम्मतं ज्ञानस्य सद्रूपत्वं यथा--

ज्ञान अमर पद बाहरे, नियरे ते हैं दूर।
जानै ताको निकट है, अनजाने को दूर[3]॥

तत्संवादिवेदान्तवाक्यं यथा--

'दूरात्सुदूरे तदिहान्तिके च[4]'
तदेजति तन्नैजति तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य तदुसर्वस्यास्य बाह्यतः[5]॥

यत्र किञ्चिदपि प्रकाशान्तरं नास्ति, तज्ज्योतिस्स्वरूपं ब्रह्म वर्तते, इत्युक्त्या स्वीकृतं ज्योतिस्वरूपस्य ब्रह्मणः स्वप्रकाशत्वं श्रीसद्गुरुकबीरेण। तद्यथा--

जीव रूप एक अन्तर वासा, अन्तर ज्योति कीन्ह प्रकाशा[6]॥

अर्थात् साक्षी चैतन्यस्वरूपेण स्वयं प्रकाशरूपः। प्रपञ्चरहितः, सत्ता मात्र इति--

पण्डित मिथ्या करहु विचारा, न वहां सृष्टि न सिरजनहारा[7]।
अन्यत्र च—अलख लखो अलखे लखो, लखो निरंजन सोय।
हौं कबीर सबको लखों, मोको लखे न कोय[8]॥

इत्यस्य पद्यस्योत्तरार्धेन आत्मनः परब्रह्माभेदमनुभवता श्रीकबीरेण आत्मनः सर्वप्रकाशत्वेनानुभवरूपत्वं परप्रकाश्यत्वरूपं स्वप्रकाशत्वं च दर्शितम्। ततः--

---

(१) बीजक रमैनी १९।
(२) अनुभूति प्र० २।११६
(३) बीजक रमैनी ३०।
(४) मु० उ० ३।१।१।
(५) ईशा० उ० ५।
(६) बीजक रमैनी १।
(७) बीजक शब्द १२।
(८) बी० परिशिष्ट साखी ५४

साधो आतम सत्य प्रकाशा ।
ज्यों सूरज में नाहिं अन्धेरा, ऐसा सत्य उजासा[1] ।

इत्यादिना पद्येन श्रीकबीरेण आत्मनः सद्रूपत्वम्, अनुभवरूपप्रकाशात्मकत्वञ्च दर्शितम् । आत्मनः सद्रूपत्वे इमे अपि पद्ये उक्ते श्रीकबीरेण—

'जिन यह चित्र वनाइयां, सांचा सो सूतधार ।
कहहिं कवीर ते जन भले, चित्रहि लेहिं विचार[2] ॥'

भगवता इदं चित्रं जगद् तथा निर्मितम्, यथा सूत्रं धृत्वा ऋजुभिरयादिकं निर्मीयते । यथा वा मूसिकया किमपि प्रतिमादिकं साधु निर्मीयते । श्रीकबीरः कथयति ते जनाः भद्रा ये चित्रं दृष्ट्वा तत्कर्तारं विचार्यं निश्चिन्वन्ति ।

'नाना नाच नचाय के, नाचे नट के वेष ।
घट घट अविनाशी वसे, सुनहु तकी तुम शेख[3] ॥'

हे शेखतकी त्वं ! शृणु सर्वं जगत् नाना नृत्यैर्नर्तयित्वा नटवेषेण स्वयमपि नृत्यति । स चाविनाशीपिण्डे पिण्डे वसति इति । अतः हिंसां मा कुरु ।

## अनुभवरूपस्य ज्ञानस्यानन्दरूपत्वम्:—

अनुभवरूपं ज्ञानमानन्दरूपमलौकिकमित्यद्वैतवेदान्तिनः । 'सत्यं ज्ञानमानन्दं ब्रह्म'[4] इति 'रसो वै सः' इति । रसं हि एव अयं लब्ध्वाऽऽनन्दी भवति इत्यादि श्रुतेः । एतदेव श्रीसद्गुरुकबीरस्यापि मतम् । यथा--

'कोई राम रसिक रस पीवहुगे, पीवहुगे सुख जीवहुगे'''
''''''कहहिं कवीर स्वामी सुखसागर, राम मगन ह्वै पावै[5] ॥'

एतच्चानन्दरूपत्वं न लौकिकम्, निर्धर्मकत्वाद् ब्रह्मणः नापि दुःखाभावरूपम्, अस्तीत्येवोपलब्धव्य., इति श्रुतौ सद्रूपत्वश्रवणात् । नापि भावमुखेन आनन्दपदेन ब्रह्म वक्तुं शक्यते, वाचोऽगोचरत्वात् । अतोऽत्र श्रुतौ आनन्दपदं दुःखव्यावृत्तं लक्षणया बोधयति । तदुक्तम्—

'अतद्व्यावृत्त्यायं चकितमभिधत्तेश्रुतिरपि[6]' इति ।

तत्र ब्रह्मणः आनन्दरूपत्वे श्रीसद्गुरुकबीरवाक्यम् । यथा—

(१) छ० मृ० सि० पृ० १०६ भ २ । (२) बीजक रमैनी साखी — २६ ।
(३) बी० साखी -- ६३ । (४) तैत्तिरीयोपनिषत् — २।१।१ ।
(५) बीजक शब्द — ४२ । (६) महिम्नस्तोत्र श्लो० २ ।

'सन्तो मते मातु जन रंगी । टेक ॥

कहँहि कबीर गूंगे का शक्कर, क्यों कर कहै दिवाना ॥'[१] इति

अयम्भावः—हे सन्त आनन्दयुक्तो भूत्वा सतां संभवते आनन्देऽनुभवं प्राप्य ( उन्मत्तः ) मत्ताभवत इत्यानन्दरूपत्वं ब्राह्मणो वदति श्रीकबीरः ।

श्रीकबीरः कथयति यत् परब्रह्मानन्दानुभावेन मत्तः मूकः सितशर्करा-रसमिव, तमनुभूतमानन्दं कथमपि वक्तुं न प्रभवति । एतेन परब्रह्मरूपस्या-नन्दस्य वागगोचरत्वं दर्शितं भवति ।

तत्संवादि वेदान्तवाक्यम् । यथा—

'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' इत्यादि ।[२]

'समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनियत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तः करणेन गृह्यते[३] ॥'

ब्रह्मणः स्वरूपनिरूपणे वेदान्तस्य विषय । तत्रापि विभिन्नाः प्रवादाः समुप-लभ्यन्ते । केचन द्वैतवादिनः, केचन चाद्वैतवादिनः सन्ति । अद्वैतवादिष्वपि कश्चित् शब्दाद्वैतवादी कश्चिद्ब्रह्माद्वैतवादी, कश्चित् केवलाद्वैतवादीत्यादयो बहवो भेदाः सन्ति ।

सद्गुरुकबीरः कथयति यद् ब्रह्मसाक्षात्कारसमये चिन्मात्ररूपविश्रान्ततया एतेषां द्वैतादि विकल्पानां सत्ता एव न तिष्ठति । यथा—

'एक कहौं तो है नहीं, दोय कहौं तो गारी ।
है जैसे रहै तैसे, कहँहि कबीर पुकारी[४] ॥'

अयं भावस्तत्त्वज्ञानसमये तद्ब्रह्म एकत्वसंख्यारूपगुणवद् न भवति, तस्मिन्न-वसरे कस्यापि विकल्पस्यानुत्थानात् । द्वैतभावना तु तदा नैव भवितुमर्हति यत एवं द्वैतभावना अपशब्दरूपा विद्यते । यतो वेदस्तद्भावनाभावितं पशुरिति कथयति । यथा —

'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्'[५]

अतः यदि एकं कथयामि तदा तस्मिन्नेकत्वं नास्ति, यदि द्वैतं वदामि

(१) बीजक श० ४० ।
(२) तै० उ० २।४ ।
(३) पञ्चदशी ११।११८ पृ० ४'८ ।
(४) बीजक साखी १२८ ।
(५) बृ० उपनिषद् १।४।१० ।

तदा गाली-तुल्यो भवति । अत एवत्वेन द्वित्वादिना च रहितः स स्वप्रकाशः शब्दावाच्य एव तिष्ठति ।

सद्गुरोः कबीरस्येयमुक्तिः योगवाशिष्ठस्य प्रतिफलनरूपा प्रतीयते । तद्यथा-

'सम्यग्ज्ञानवतो ज्ञस्य यथा भूतार्थं दर्शिनः ।
बुद्धिर्भवति चिन्मात्ररूपा द्वैतैक्यवर्जिता[1] ॥'

अन्यत्र श्रीसद्गुरुकबीरः प्रकारान्तरेण विभिन्नशब्देनानुभवरूपस्यात्मन आनन्दरूपत्वं दर्शयति । यथा—

'आतम अनुभव सुख की, जो कोई बुझे बात ।
कै जो कोई जानई, कै अपनो ही गात[२] ॥'
'हम आनन्द के घर पाये[३]' इत्यादि ।

अर्थात्—तत्र वाणीविषयत्वमपि नास्ति, अनुभवगम्यत्वात् । आत्मानुभवरूपस्य सुखस्य यदि कश्चिद् वार्तां पृच्छति, तदा स उत्तरेण नावबुध्यते; किन्तु साधनान्यनुष्ठाय स्वयमेव बुध्यते स्वशरीर एव चानुभवरूपेण बुध्यते । गुरुस्तु साधनान्येव उपदिशति, नत्वात्मानुभवसुखम्—

'वाचोऽगोचरत्वात् ।' यथा—
'बोध रूप पुरुष अखण्डित, कहवें में कछु नाहिं[४] ।'

आत्मा अखण्डितबोधरूपः कथयितुं न शक्यते वागगोचरत्वात् इत्यर्थः । आत्मन आनन्दरूपत्वं दर्शितं श्रीकबीरेण—

'अपन पौ आपहिं में पायो............
कहा कहूं वा सुख की महिमा, ज्यों गुंगे गुड़ खायो ।
कहे कबीर सुनो भाई साधो, ज्यों का त्यों ठहरायो[५] ॥'

अहं सुखरूपमात्मानमात्मन्येव प्राप्तवान् नान्यत्र इत्यर्थः । तदुक्तं श्रुतावपि

'यद्वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥[६]'

(१) योगवा० मुक्ति प्र० २।२।७ । (२) साखी ग्र० पृ० ९९० सा० १ ।
(३) श० मू० सि०पृ० ११८ म० ५ । (४) सा० ग्र० पृ० ९९५ सा० २१ ।
(५) श० मू० सि०पृ० १०७ म० ३ । (६) केनोपनिषद् १।५ ।

## अनुभवरूपस्य ज्ञानस्याद्वैतानन्दस्वरूपम्

अद्वैतानन्दस्य वागगोचरत्वं दृष्टान्तान्तरप्रकारान्तराभ्यां दर्शितं श्रीसद्गुरु-कबीरेण यथा—

'अब हम एक एक करि जाना[1]'

अर्थात् —तत्र ज्ञातृज्ञेयादिविभागशून्यं ज्ञायते इति भावः।

'अवधू छाड़हु मन विस्तारा............
लख चौरासी जीव जन्तु नहिं। साखी शब्द न बानी॥
कहहिं कबीर सुनहु हो अवधू। आगे करहु विचारा॥
पूरण ब्रह्म कहां ते प्रकटे। किरतम किन उपचारा[2]॥'

हे साधो मनसः कामनाः, विधूय ब्रह्मणः विचारः कर्त्तव्यः। विचारेण च संसारशृङ्खलाऽपनेया। एतदर्थं सम्वादीनि वेदान्तवाक्यानि यथा—

'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान्, न बिभेति कदाचन[3]॥'

'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते[4]'॥

यत्र तु 'नेतिनेति' इति श्रुतावपि कथ्यते।

⁂

(१) क० प्र० पद। (२) बीजक श० ४८।
(३) क० उ० २।६।१३। (४) क० उ० ३।१।१४।

# अथ चतुर्थोऽध्यायः

## श्रीसद्गुरुकबीरमतेऽद्वैतवेदान्तिमते च मोक्षस्वरूपम्

### तत्र श्रीकबीरमते मोक्षः—

श्रीसद्गुरोः कबीरस्यमते मोक्षोनित्यरूपोऽस्ति, सांसारिकयोः सुखदुःखयोस्तत्राभावः। कस्यचनाभिमतः सुखदुःखशून्यरूपो मोक्षः सद्गुरोः कबीरस्य नाभिमतः[1]। अद्वैतवेदान्तिसम्मत आनन्दरूपः प्रकाशरूपश्च मोक्ष एव तदभिमतः। तथाहि —

'वाह वाह अमर घर पाया है।
दुख न दर्द काल नहिं व्यापे, आनन्द मंगल गाया है[१]।

उपर्युक्तं मोक्षविषयकं मतमद्वैतवेदान्तिनामपि सम्मतम्। 'न स पुनरावर्तते[२] इति', 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन[३]' इत्यादि श्रुतिभ्यः।

शब्दाद्वैतवादी भर्तृहरिरपि एतदेव कथयति—"प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिरिति। अस्मिन् मते परब्रह्मणः प्राप्तिः परब्रह्मणोऽधिगमः, परब्रह्मणः सायुज्यं वा मोक्षः। अत्र स्वोपज्ञवृत्तौ—'ममाहमित्यहंकार ग्रन्थिसमतिक्रान्तिमात्रं ब्रह्मणः प्राप्तिः सायुज्यं मोक्ष[४]' इति।

श्रीसद्गुरुकबीरेणापि तद्वदुक्तम् —

'साँचा प्यारा है साईं को, साँचा प्यारा है।
सत्य शब्द चीन्हें बिना किमि होय उबारा है॥
साँचे के मैं संग रहूँ, साँचे का प्यारा हो।
झूठे से दिल भागिया, झूठे से न्यारा हो[५]॥' इत्यादि

---

(१) श० मृ० सि० पृ० ५५ भ० ४०। (२) बृ० उ० शा० भाष्य।
(३) तै० उ० २।९।१। (४) वाक्यपदीय १।२२,
(४) श्रीशंकरात्प्रागद्वैतवादः पृ० २५४।
(५) श० मृ० सि० पृ० १९२ भ० ६।

## अद्वैतवेदान्तमते मोक्षः

अद्वैतवेदान्तिमते मोक्षो नित्यशुद्धबुद्धमुक्तात्मबोधेन आविर्भूताविद्यानावृतब्रह्मस्वरूपः। तथाहि—अविद्यानिवृत्तिर्वा, कामोपशान्तिर्वा, वासनाक्षयो वा, कर्तृत्वादिबन्धनाशो वा, स सर्वोऽपि अधिष्ठानब्रह्मस्वरूप एव। वस्तुतस्तु जीवो ब्रह्मस्वरूपो नित्यमुक्त एव। 'तत्त्वमसि[१] 'अहं ब्रह्मास्मि[२] तरतिशोकमात्मवित्[३] विमुक्तश्च विमुच्यते—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वं संशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे[४]॥'
स च मोक्षः आत्मस्वरूपत्वादानन्द स्वरूपः।

नित्यप्राप्तोऽपि आत्मसाक्षात्कारेण अविद्यानाशे प्राप्त इत्युच्यते। यथा प्राप्तमेव कण्ठगतं चामीकरं कण्ठे ते चामीकरमित्याप्तोपदेशेन तत्साक्षात्कारे जाते ततोऽप्राप्तत्वभ्रमनिवृत्तौ प्राप्तमिति मन्यते। यथा वा वलयितचरणायां रज्जौ परिहृत एव सर्पः रज्जुरेषा नायं सर्प इत्याप्तोपदेशेन सर्पविभ्रमो निवर्तते, तथैव सच्चिदानन्दरूपे आत्मनि ब्रह्मरूपे नित्यं परिहृत एव कर्तृत्वभोक्तृत्वादिबन्धरूपः संसारो गुरूपदेशेनाविद्यानाशेऽऽत्मसाक्षात्कारे जाते च परिह्रियते इति।

श्रीसद्गुरुकबीरो मोक्षस्वरूपविषये विभिन्नप्रकारान् शब्दान् प्रयुक्तवान्। स स्वग्रन्थेषु कुत्रचिद् मुक्तिपदम्, कुत्रचित् परमपदम्, क्वचिदभयपदम् क्वचिन्निर्वाणपदम्, कुत्रचित्तुरीयातीतपदम्, क्वचिन्मोक्षपदम्, क्वचिदमरपदम्, एवमादीनि पदानि प्रयुज्य मुक्तिं प्रबोधितवान्। एते सर्वे शब्दायेन्तिनां भक्तानाञ्च वाणीषु यत्र तत्र प्रचलिताः सन्ति। एतदतिरिक्ताऽपि मोक्षविषये बौद्धानां ग्रन्थेषु बहुधा प्रयुक्ताः निर्वाण-शून्य-शून्यातीतशब्दाः, नाथयोगिनाञ्च कैवल्यपदमपि श्रीकबीरवचनासु दृश्यन्ते। एते बौद्धधर्मपूर्ववर्तिनोनामुपनिषदां शब्दाः स्वगुरुश्रीरामानन्दद्वारा श्रीकबीरेण प्राप्ता इति वयं पूर्वं सम्यग् विवेचितवन्तः। श्रीकबीरो मोक्षमनुभवगम्यं मन्यते। स मोक्षं वाचां गोचरं योक्तिकज्ञानगोचरं वा, न मन्यते। तस्यायं पूर्वोऽनुभवो विश्वासश्च यत् सर्वप्रकाराणां

(१) छा० उ० ६।८।७। (२) बृ० उ० १।४।१०।
(३) बृ० उ० १।३, (४) मु०उ०—२।२।८।

बन्धनानां नाश एव मोक्षावस्थापदेनोच्यते इति। मोक्षावस्थायां जन्म-मरणे, वासना, आशा-तृष्णादयो न सन्ति। आत्मा शुद्धपरमात्मास्वरूपेण ज्ञातो भूत्वा तदाकारस्तद्रूपश्च प्रतीतो भवति। इदं श्रुतिरपि कथयति 'ब्रह्मवेद ब्रह्मैव भवति' इति। इदमेव श्रीकबीरः सर्वबन्धनाश इति निर्बन्धावस्था जीवस्येति, मुक्त आत्मा इत्यविनाशी इति शुद्ध-बुद्धनिराकारनिरञ्जनब्रह्मस्वरूपेणावस्थितिरिति मन्यते। इयं परमपदस्यावस्थाऽस्तीति मन्यते। अस्या अवस्थायाः वर्णनं श्रीकबीरेणाद्वैतवादानुसारेणैव कृतम्।

यत्र तत्र श्रीकबीररचनासु बौद्धानामुन्मनीनिर्वाणादयः शब्दाः प्रयुक्ता दृश्यन्ते, ते प्रायेण बौद्धशब्दैरेव बौद्धमतखण्डनाय प्रयुक्ता इत्यनुमीयते। अथवा-तात्कालिकसाहित्येषु प्रयुक्ता एते शब्दाः सर्वधर्मसाधारणा इति श्रीकबीररचनास्वपि समागता[1] इति वक्तुं शक्यते। वस्तुतो निर्वाणपदस्यार्थः मोक्षः, अथवा आशा, तृष्णा- वासना काम-क्रोधादीनामग्नीनामुपशान्तिः इति। एवमेव नाथ-सम्प्रदायसम्बन्धिशब्दा ज्ञातव्याः। एवञ्च श्रीकबीरसम्मते मोक्षेऽपि तस्य प्रयोगो युक्तं इति मम प्रतिभाति। एवं वासनैव जन्मकारणम्, तन्नाश एव च मोक्ष इति सिद्धम्।

बौद्धा द्वैताद्वैत विलक्षणं शून्यं मोक्षस्वरूपं मन्यते। श्रीकबीरस्तु वाङ्गशून्यादपि परं वाङ्मनसागोचरं मोक्षं मनुत्ते। तद्यथा—

'वरणहुं कौन रूप औ रेखा, दोसर कौन आहि जो देखा[2] ॥

अत्र श्रीकबीररचनायाम्—'केन कं पश्येत' इति श्रुतेरनुसरणं प्रतीयते। एवं श्रीकबीरो वासनाया अशेषात्मना क्षयं-मोक्षस्वरूपं मन्यते। तद्यथा--

'मन जीते जग जीतिया, विषया ते होय उदास।' इत्यादि

वासनानामशेषात्मना क्षयरूपं मोक्षमद्वैतवेदान्तिनोऽपि मन्यते, तद्यथा—

---

(१) शून्य स्नेही राम बिनु, चले अपन पौ खोय-- बीजक रमैनी ८३ सा०,
सहज शून्य मन सुमिरते, प्रगट भई एक जोत- " " ६ "
कुल मर्यादा खोय के, खोजिन पद निर्वाण।
अंकुर बीज नशाय के, भये विदेही थान॥ " " १६ "
इन्द्रिय पसारा मेटिबे, 'सहज' मिले भगवान—सा० प्र० मन० अ० सा० २।

(२) बीजक रमैनी ६।

वासना क्षयविज्ञानमनोनाशा महामते ।
समकालं चिराभ्यस्ता भवन्ति फलदायिनः[1] । इति ।

यावद्देहगेहादिषु—अहंता ममता रूपा वासना लेशतोऽपि तावन्मुक्तिर्न भवतीति श्रीकबीरो मन्यते । तद्यथा—

'कहइत मोहि भेलयुगचारी, समुझत नाहिं मोर सुत नारी[2] ।'
इत्यादि ।

अस्यार्थः-श्रीसद्गुरुकबीर रहस्यरूपेण वदति, मया अतिचिरादुच्यते स्वसुतकल्पं प्रियं स्वमनः प्रतिः, स्वप्रियाकल्यां स्वनारीतुल्यां स्वबुद्धि प्रति, यदहंता ममतारूपवासना भवद्भ्यां त्याज्या, सर्वानर्थहेतुत्वादिति, किन्तु ममपुत्रतुल्यं मनः, ममप्रियातुल्या च बुद्धिरिदं न प्रबुध्येते, इति ॥

अद्वैतवेदान्तेऽपि सर्ववासनाक्षयो मोक्षदशायामुपनिषदि निगद्यते—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वे संशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे[3] ॥'

हृदयग्रन्थिपदेन हृदयवासना इत्युच्यते ।

मोक्षदशायां पुण्यपापयोरभावाद् द्वयंलोकौ न भवतः इति, श्रीकबीर मतम्, तद्यथा—

'पाप पुण्य की शंका नाही, स्वर्ग नरक नहिं जाहीं[4] ॥' इत्यादि

'हमवासी वा देश का, अविनाशी का आन ।
दुःखसुख कोई व्यापे नहीं सब दिन एक समान[5] ॥'

उपनिषद्प्युच्यते—

'समाने वृक्षे पुरुषो निमग्न[6]...... ...' इत्यादि ।

अद्वैतवेदान्तिमते मुक्तात्मनो नित्यसुखानुभूतिरित्युच्यते, श्रीकबीरेणाप्येतदेवोच्यते—

'सच पाया सुख उपजा, दिलदरिया भरपूर ।
सकल पाप सहजे गया, साँई मिले हजूर ॥ इत्यादि ।

---

(१) यो०वा०—उ० श० । (२) बीजक रमैनी ४० ।
(३) मु० उ०—२।२।८ । (४) बीजक शब्द—१४ ।
(५) साखी ग्र० पृ० २५८ सा० ३८ । (६) मु० क० ३।२ ।

हीरा पाय शीतल भया, मिटि जु तन का ताप।
निशिवासर सुखनिन्दलह, अन्तर प्रकटे आप[1] ।।'

येऽलक्ष्यं मनसा निर्गुणं ब्रह्म न साक्षात्कृतवन्तस्ते सर्वे संसारसागरस्य पूर्वस्मिन् पारे एव तिष्ठन्ति, संसारसागरस्य परस्मिन् पारेस्थितं सच्चिदानन्दरूपं मोक्षं तु निर्गुणं ब्रह्म साक्षात्कृत्य श्रीकबीर एव लब्धवान् इति श्रीकबीरस्य स्वानुभूत्योक्तिः—

'सुर नर मुनि जन औलिया, ये सत्र उरली तीर।
अलह (ख) राम की गम नहीं, सां घर किया कबीर[2] ।। 'इति।

श्रीसद्गुरुकबीरो जीवनमुक्तिदशायां निर्गुणं ब्रह्मसमाधौ स्वप्रकाशज्ञानसुखरूपाभ्यामनुभूतवान्। समाधौ वाह्यब्रह्मसाक्षात्कारेण अविद्याकार्यस्य सर्वस्य विभ्रमवर्गस्य निवृत्तिः भवति। जन्ममरणे च न भवतः। तस्यां दशायामात्मनि एव स्वसंख्या द्वित्वसंख्या वा नानुभूयते। इदमात्मज्ञानं ब्रह्मस्वरूपमेव भवति, यत्र आत्मा स्वप्रकाशः। श्रीकबीरमते इदं ब्रह्मज्ञानं समाधिदशायामेव भवति। न तु अन्यसिद्धान्तेष्विव शब्दजन्यं भवति। ब्रह्मज्ञानं च गुरुकृपा विना न जायते, गुरुकृपयैव संजातज्ञानमहिम्ना हृदयग्रन्थयो भिद्यन्ते। ज्ञानरूपप्रकाशश्च हृदि उदेति। तदा सर्वे विभ्रमा विनश्यन्ति। गुरुकृपयैव संप्राप्तज्ञानद्वारा जन्मजन्मान्तरसंचितकर्मणामज्ञानस्य सर्वानर्थबीजस्य नाशो भवति। ज्ञानरूपस्य भानोरुदयेनाज्ञानरूपा निशा विलीयते। जीवोऽज्ञाननिद्रातः प्रबुद्धो भवति। विदेहकैवल्यदशायां जीवस्य या स्थितिः भवति सा वर्णयितुं न शक्यते। यथा मूको मिष्टान्नमाधुर्यं वर्णयितुं न शक्नोति। तद्यथा—

'पाक गुरु पीर समरथ साहब धनी, बहुत वाणी तजी बन्ध खोले'[3]
'सद्गुरुशरण हंस जब आवे तब हि परम पद पावे हो[4]
'कहहिं कबीर बसा है हंसा अवागमन मिटावै ।।'[5]

यथा नदीजलं समुद्रं प्राप्य समुद्र एव भवति, तथा जीवः परमात्मानं प्राप्य परमात्मैव भवति। यथा—

---

(१) सा० ग्र० पृ० ५४-५५ सा० २१-२२। (२) सा० ग्र०पृ० २५८ सा० ३६।
(३) ग्र० मू० सि० पृ० ३ अ० ५। (४) ग्र० मू० सि० पृ० १-२ श० १-२।

'कबीर दिल दरिया मिला बैठा दरगह आय।
जीव ब्रह्म मेला भया, अब कछु कहा न जाय[1] ॥'

तत्संवादी वेदान्तवाक्यम्—

'स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे समुद्र इत्येवं प्रोच्यते[2] ॥'

आत्मज्ञाने जाते सति जीवन्मुक्तिदशायां जीवः सर्वेषामद्भुतानामध्यात्मिकरहस्यानां प्रबोधे समर्थो भवति। तेनासौ जन्ममरणरूपमायाद् विमुक्तो भवति। स पुनरनित्येषु विषयेषु नासज्जते। तदुक्तम्—

श्रीसद्गुरुणा कबीरेण—

'अब मैं पाया रे पाईवो ब्रह्मज्ञान[3]' इत्यादि।

वस्तुतः श्रीकबीरस्य ब्रह्म त्रिगुणातीतं शब्दातीतं चास्ति। तदुपमानरहितमनुभवगम्यञ्चास्ति। तदुक्तं श्रीसद्गुरुणा कबीरेण—

'राम के नाई नीसान बागा, ताका मरम न जाने कोई[4]'

अस्मिन् पद्ये सम्पूर्णैहलौकिकपारलौकिकव्यवहारागोचरशुद्धब्रह्मस्वरूपो 'राम.' श्रीकबीरेण वर्णितः। अस्मिन् तत्त्वे प्राप्ते सति तस्य तत्त्वस्य श्रवणरूपरेखारहितस्य कथनं श्रवणं वा समाप्तं भवति। गुरुशिष्यभावादिः सम्बन्धोऽपि तदा समाप्तो भवति। तदुक्तं श्रीकबीरेण—

'छके निजनाम में प्रेम प्याला पिया,
मुक्ति मैदान में दिया डेरा[5] ॥' इति।

'उग्र ज्ञान जब प्रगटे भाई, सबे वाद मिटि जाई हो[6]।' इत्यादि।

श्रीसद्गुरुकबीरमतेऽद्वैतवेदान्तिमते च सकलकामनाशा एव मोक्षः तदुक्तं श्रीसद्गुरुणा—

'चाह मिटी चिन्ता गई, मनुवा बेपरवाह।
जिनको कछु ना चाहिए, सोई साहन पतिशाह[7] ॥'

---

(१) साखी ग्र० पृ० २६० सा० ४१। (२) प्रश्नोपनिषद् ६।५।
(३) क० ग्र० पद ६। (४) क० ग्र०।
(५) श० मृ० सि० पृ० ३६ श० ६। (६) श० मृ० सि० पृ० ३७ श० ८।
(७) साखी ग्र० अं० साखी ४४।

शांकराभाष्ये—'कामो मूलं संसारस्येति' पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामः इति मुण्डकोपनिषदि।

तत्रोदाहृत शांकराभाष्ये—कामो मूलं संसारस्येति तद्विपर्येण कामनिवृत्तिरेव संसारनिवृत्तिरूपो मोक्षः। मुण्डकोपनिषदि पर्याप्तकामस्येत्यस्य समाप्तकामस्येत्यर्थः। कृतात्मन इत्यस्य साक्षात्कृतात्मन इत्यर्थः। सर्व कर्म क्षयो मोक्ष इति श्रीकबीरमतम्, तद्यथा—

'कर्म धर्म कछुओ नहिं उंहवा, न उहां मन्त्र न पूजा[1]।' इत्यादि।

अद्वैतवेदान्तमतेऽपि—

'इषीका तूलवत् सर्वाणि कर्माणि प्रदूयन्ते' इत्यादि।

स्वरूपावस्थितिर्मोक्षस्तद् भ्रंशोऽहन्त्ववेदनम्, इति अद्वैतवेदान्तिनः। श्रीसद्गुरुकबीरोऽपि एतदेवाह—

'जब मैं था तब हरि नही, अब हरि है मैं नाहि।
सब अन्धियारा मिटि गया, दीपक रेखा माहि[2]।।'

'जीवन्मुक्तौ लेशाविद्यावशात् प्रारब्धकर्मानुसारेण व्युत्थितस्यभिक्षाटनादि समयेऽहंत्ववेदनं भवति इति जीवन्मुक्तिरपि गौणो मोक्षः[3]।'

जीवन्मुक्तस्य शरीरपातोत्तरं ब्रह्मणि लयरूपं विदेहकैवल्यन्तु मुख्यो मोक्ष इति अद्वैतवेदान्तिनां पन्थाः। एतदेवोक्तं मुण्डकोपनिषदि—

'गता कलाः पञ्चदश प्रतिष्ठाम्' इत्यादि।

श्रीसद्गुरुकबीरोऽपि एतदेव तत्र बहुधा बहुश आह—

'कबीर सुखदुःख सब गया, गया सु पिण्ड शरीर।
आतमपरमात्म मिले, दुधै धोया नीर[4]।।' (जीव)
'बुन्द जो परा समुद्र मे, सो जानै सब कोय।
समुद्र समाना बुन्द में बूझै विरला कोय[5]।।'

---

(१) बीजक शब्द १२। (२) साखीग्रन्थ २७।
(३) शांकरद् प्रागद्वैतवाद पृ० २१०।
(४) साखी ग्र० पृ० २८९, साखी ६७ तथा साखी ४१ पृ० २६१।
(५) बीजक साखी ७४।

## श्रीसद्गुरुकबीरसम्मता जीवन्मुक्तिः

श्रीसद्गुरुकबीरसंमताद्वैतवेदान्तिसंमता च जीवन्मुक्तिरेकैव। अत्र जीवः षष्ठीं भूमिकामारूढो भवति। ऐषा तस्यावस्थाजीवन्मुक्तिरित्युच्यते। तदा तस्य शरीराध्यासो निवृत्तो भवति, सर्वासां वासनानां क्षया भवति। आत्मात्मीय परविवेकः परिसमाप्तो भवति। एकरसानन्दनस्य च तदाऽनुभूतिर्भवति। यद्यपि जीवनमुक्तौ वासनानाशो भवति, कर्मकर्तादिभेदश्च तदा न भवति, तथापि घृतभाण्डे स्नेहानुवृत्तिवद् भिक्षाटनादि व्यवहारार्थं वासनालेशः, प्रारब्धं कर्म च तदा तथास्त्येव।

जीवन्मुक्तौ अपि सूक्ष्मोऽहंकारोऽस्त्येव। जीवन्मुक्तो पुरुषो वर्णाश्रमादि कर्मबन्धनरहितो निरङ्कुशो भवति इत्यद्वैतवेदान्तिनः। तं शरीरेन्द्रियकर्माणि न लिम्पन्ति। यथा—

'न मे कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा[1]।' इत्यादि।
'नैव किंचित्करोमीति युक्तो मन्येततत्त्ववित्[2]'। इत्यादि।

श्रीसद्गुरुकबीरो वदति—'यदि कश्चिद् जीवन्मुक्तयभिमानी भगवद्भक्तिरहितोऽभिमन्यते मम सर्वाणि कर्माणि, क्षीणानि अतस्तानि भृष्टबीजवन्मम-किञ्चिदपि विकर्तुं न प्रभवन्ति, मम वासनाया क्षयो जातः, अधुना मया यथेष्टं व्यवहर्तव्यमिति। तदाऽवश्यमेव तस्य संसारे पतनं भवति, अतो जीवन्मुक्तिदशायामपि भगवद्भक्तिर्मतिव जीवस्य रक्षिका आश्रयणीया तदुक्तं श्रीमद्भागवते—

ये चारविन्दाक्षविमुक्तमानिनस्त्वय्यस्तभावादपि शुद्धबुद्धयः।
आरुह्यकृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृत युष्मदङ्घ्रय[3] इति श्रीकबीरेणाप्युक्तम्—

जहिया जन्म मुक्ता हता, तहिया हता न कोय।
छठो तुम्हारी हो जगा, तूं कहं चला विगोय[4] ॥ इत्यादि।

अस्यार्थः—बुद्धिरूपामाता जीवरूपं पुत्रं प्रतिवदति, हे पुत्र जीव! यदा

---

(१) श्रीमद्भगवद्गी० ४।१४। (२) तत्रैव ५।८।
(३) श्रीमद्भागवत्— (४) बीजक साखी १।

तव जीवन् मुक्तावस्थायां जन्मजातं तदा तव पार्श्वे मदन्यः कोऽपि नासीत्, तदाऽहं तव षष्ठरात्रिरूपायां षष्ठ्यां भूमिकायां तव रक्षार्थं सर्वं रात्रौ जागरणं कृतवती, एवं भूतां मातरं मां विहाय त्वं विदेहकैवल्याय निर्विकल्पकसमाधिसिद्धये वा क्व परिव्रजसि इति ।

अभिमानो मुक्तेः प्रतिबन्धकः रामनामजपस्तु चित्तशुद्धिं समुत्पाद्य ज्ञानद्वारा मुक्तिसाधनम्, इति मुक्तिपथः किन्तु 'अभिमाने' सति रामनामजपादपि मुक्तिर्न भवति इति श्रीसद्गुरुकबीरो मन्यते तदुक्तं तेन---

माया तेजे क्या भया, मान तजा नहिं जाय ।
जिही माने मुनिवर ठहे, मान सबन को खाय[1] ।।
रामहि राम पुकारते, जिह्वा परिगौ रोस ।
सूधा जल पीवै नहीं, खोदि पीवन की होस[2] ।। इति

श्रीस्वामिरामतीर्थेन इदं गीतं श्रीकबीरनाम्ना प्रख्यापितं यत्र जीवन्मुक्तिदशा उपवर्णिता---

'हमन हैं इश्क मस्ताना हमन को होशियारी क्या' इत्यादि ।

वस्तुतस्तु नेदं हिन्दूकबीरपद्यम् । भाषावैषम्यात् । यवनभाषाप्राचुर्यं[3] दृश्यते । अत इदं यवनकबीरपद्यं 'शब्दामृतसिन्धुग्रन्थे' प्रक्षिप्तं केनचिदिति मदीया मनीषा । एवमेवान्यानि पद्यानि ज्ञातव्यम् । यदा ज्ञाने जाते सति जीवन्मुक्तिः समुत्पद्यते तदा सर्वे वादाः समाप्ता भवन्ति । तदा त्रिगुणजन्यस्तापोऽपि नश्यति, मनसः इन्द्रियपञ्चकविषयाणां शब्दादीनां बुभुक्षा निवर्तते, जीवस्तु तदा ब्रह्म कथ्यते । अव्यक्तम्, कारणञ्च महत्तत्त्वम्, स्थूलम्, सूक्ष्मञ्च, चतुर्विधं जगदात्मनिसद्रूपेऽधिष्ठाने कल्पितं दृश्यते । तदा पुण्यपापयोराशा नास्ति, अतस्तथाविधो जीवः स्वर्गे नरके वा न गच्छति । यदाऽखण्डात्मविषयकोऽनुभवो जायते तदा जीवब्रह्मणोरैक्यं साक्षात्करोति । ब्रह्मांशोऽसौ जीव इति सर्वैः सिद्धैर्मिलित्वा श्रुत्याऽपि च गीतम् । यस्तु जीव एव सर्वात्मकः, ब्रह्म तु नासीत्ययं ज्ञानं तदन्धज्ञानम् । अत एवोक्तं कविभिः---

(१) बीजक साखी १९९ । (२) बीजक रमैनी साखी ३४ ।
(३) श० मु० सि० पृ० ३४४ प० ३० ।

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् ।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः[1] ।। इति ।

यदा तत्त्वं पदार्थयोरैक्यं ज्ञातं भवति, तदा आत्मविषयकं श्रवणं कथनञ्च निवृत्तं भवति । यथा लवणघनो जले क्षिप्तो विलीयजलमेव दृश्यते, बहुशोऽन्वेषणेऽपि सलवणघनो नोपलभ्यते । तथा जीवन्मुक्तिः प्राप्यते तदनन्तरं पुनर्जन्म न भवति इत्येवं विधा जीवन्मुक्तिदशा सम्यगुपवर्णिता श्रीसद्गुरुकबीरेण, तद्यथा—

ज्यो लोन की पुतली, गई थाह समुद्र लेन ।
पानी मिली पानी भई, पलटि कहै को बेन[2] ।।
जलतरङ्ग जलहीं में उपजे, फिर जलमाहिं समाई[3] ।
उग्र ज्ञान जब प्रकटे भाई, सबे वाद मिटि जाई हों ।
मुक्तिदशा जब आनि समानि, त्रिगुणताप मिटि जाई हो ।।
पञ्चस्वाद की इच्छा नाहीं, यह जीव ब्रह्म कहाई हो ।
अविगति कारण सूक्ष्मस्थूल है, रूपचार दरसाई हो ।।
पाप पुण्य की नाहिं आशा, स्वर्ग नरक नहीं जाई हो ।
जीव ईश को एक करि जानै, अनुभव अभङ्ग जु आई हो ।।
आतम थापि अध्यात्म मेटे, अन्धज्ञान है भाई हो ।
आतम अंश अध्यात्म केरा, या मिलि वाको गाई हो ।।
यह वह एक भया जब निश्चय, कहन सुनन मिटि जाई हो ।
लवण की पुतली जल बीच डारी, देखत गई विलाई हो ।।
वाको खोज चले नहिं कतहुं, जित तित जलहिं दिखाई हो ।
कहैं कबीर जब या गति आवै, फिर नहिं जन्म धराई हो ।।

इदमेव जीवन्मुक्तिविषयेऽद्वैतवेदान्तिनामपि मतम् । तदुक्तम्—
'भिद्यते हृदयग्रन्थिश्छिद्यते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।।[4]
जीवन्मुक्तेः पराकाष्ठा जीवद्वैत विवर्जनात् ।
लभ्यतेऽसावतोऽत्रेदमीशद्वैताद्विवेचितम्[5] ।।

(१) श्रीशंकराचार्य षट्पदी स्तोत्रम् श्लोक् ३ । (२) साखी प्र० ।
(३) श०मू०सि०पृ०९३ भ० ७ । (४) श०मू०सि०पृ० ३७ भ० ८
(५) मु० उ० १।२।८ । (६) पञ्चदशी ४।६९ ।

स यो ह वै तत् परमं ब्रह्मवेद ब्रह्मैव भवति नास्या ब्रह्मवित्कुले भवति। तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति[१]।

अतः पूर्वोक्तमेव श्रीसद्गुरुणा–'सच पाया सुख उपजा' इत्यादीनि पद्यानि[२] एवं क्वचित् जीवन्मुक्तिदशा वर्णिता—

जानि बुझि जड़ ह्वै रहे, बल तजि निर्बल होय।
कहँहि कबीर ता सन्त के, पला न पकड़े कोय[३] ॥

एतदेवाद्वैतवेदान्तिनामपि सम्मतम् तदुक्तम्—

बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत्।
वदेदुन्मत्तवद् विद्वान्, गोचर्यां नैगमश्चरेत्[४] ॥
तद् ब्रह्मसंगो जडवन्निगूढविज्ञानवीर्यो विचारस्यपारः।
वचांसि योगग्रथितानि साधो न नः क्षमन्ते मनसाऽपि भेत्तुम् ॥

इत्येवं जीवन्मुक्तिविदेहमुक्त्योर्भेदः श्रीसद्गुरुकबीरमतेऽद्वैतवेदान्तिमते च दर्शितः तत्र जीवन्मुक्तिपूर्विकैव विदेहमुक्तिर्भवति, स शरीरस्यैवाद्वितीयात्म-साक्षात्कारसंभवादित्यवधेयमिति ।

## मोक्षस्य कार्यत्वाकार्यत्वविचारः

मोक्षो यद्यपि नानाविधसाधनसाध्यत्वात् 'कार्यं' इति प्रतीयते । अविवेकेन बन्धः, विवेकेन तु तन्नाश इत्यतोऽपि मोक्षः कार्यः । गीतासु दृश्यते—

मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः[५] ॥
विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः।
निर्ममो निरहंकारः स शान्तिमधिगच्छति[६] ॥

एवं—एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति[७] ॥
'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'[८]

---

(१) मु० उ० ३।२।९।　　(२) सा. ग्र. पृ. २५४ साखी २१।
(३) बीजक साखी १६४।　　(४) श्रीमद्भाग० ११।१८।२९
(५) गीता ७।३।　　(६) गीता २।७१।
(७) गीता [illegible]　　(८) [illegible]

मुक्तिमिच्छसि चेत्तात विषयान् विषवत्त्यज ।
क्षमार्जवंदयातोष सत्यं पीयूष वत् पिब ॥[१]

इत्यादि श्रुतिस्मृतिपुराणादिभिर्मोक्षस्य कार्यता प्रतीयते । श्रवणमनननिदिध्यासनादीनि तस्य च साधकानि प्रतीयन्ते तथापि मोक्षो नित्य एव बन्धस्य विभ्रमभावत्वेन ब्रह्म प्रमामात्रनिवर्त्यत्वात् ।

एवञ्च जीवस्य निर्विशेषस्वरूपभूतो मोक्षो नित्यप्राप्त एव साधनानुष्ठानेन प्राप्यते । तत्र दृष्टान्तः– "चामीकरं कण्ठगतं यथाऽज्ञा" इति । नित्यपरिहृत एव चानर्थरूपो बन्धः, साधनसम्पादितज्ञानेन परिह्रियते । यथा वलयितररणायां रज्जौ सर्पभयभीतस्य 'नायं सर्पो रज्जुरियमिति' ज्ञानेन परिहृत एव सर्पः परिह्रियते इति ।

## मोक्षस्वरूपे भेदाभेदविचारः

यद्यपि श्रुतिस्मृति पुराणादिभिर्मोक्षस्य बहुविधो भेदः प्रतीयते । तथाहि-जीवनमुक्तिर्विदेहमुक्तिरिति प्रथमा विधा–श्रौती । सालोक्य-सामीप्य-सायुज्य-सारूप्यादिभेदेन पौराणिकी द्वितीयाभिदा । तथापि–श्रीसद्गुरुकबीरसम्मतः–अद्वैतवेदान्तिसंमतश्चाभिन्न एव मोक्षो वस्तुनः मया विज्ञायते । जीवनन्मुक्त्यादिभेदस्तु काल्पनिक एव । श्रीसद्गुरुकबीरस्तु एकमेव विदेहकैवल्याख्यं मोक्षं श्रुत्यादिसम्मतं मन्यन्ते ।

तत्र श्रीकबीरसाहित्ये यत्र तत्र सालोक्यरूपामुक्तिर्यथा –

'कहँ कबीर हरी के दास, फगुवा मांगे बैकुण्ठ वास'[२] ।
'अमर लोक फल लावै चाय, कहँ कबीर बूझै सो खाय'[३] ॥
"जो यह पद को गाय विचारे आगे होय निर्वावै" ।[४]

तत्र सामीप्यरूपा मुक्तिर्यथा–

'हरि जननी मैं बालक तेरा[५]' इत्यादि—दृश्यते हि बाके मातृसामीप्यमात्यन्तिकं बालस्येति । तत्र सायुज्यरूपा मुक्तिर्यथा–

एक हिं ते अनन्त अनन्त एक ह्वै आया ।
परिचय भया जु एक ते एक हि माह समाया[६] ॥

---

(१) अष्टावक्र गीता । (२) बीजक बसन्त १० ।
(३) बीजक बसन्त ११ । (४) बी० श० ३६ ।
(५) श० ग० पद १११ । (६) बी० सा० ११३ ।

आदिपुरुष बैठावन बैठे. कबीरा ज्योति समाना[1]। इत्यादि। सारूप्य-रूपा मुक्तिचर्चा कबीरसाहित्ये न दृश्यते। जीवन्मुक्तिर्विदेहमुक्तिश्च पूर्वं प्रपञ्चितेऽतो नेह उपन्यस्येते।

## मोक्षोपायाः

अद्वैतवेदान्ते विशेषतः शाङ्करसिद्धान्तेऽविद्यानिवृत्तिरेव मोक्षः, स च विद्ययैव भवति। सा च "तत्त्वमस्यादि" महावाक्यैरेवोदेति। अतः केवलं ज्ञानमेव मोक्षोपायो मुख्यः साक्षान्मोक्षहेतुत्वात्। न तु कर्म, न वा भक्तिः, न वा ज्ञान कर्मसमुच्चयः। यथा—

'ज्ञात्वा देवं सर्वपाशापहानिः[2]।'

'ईश्वरस्वरूपापरिज्ञानाद्वन्धस्तत्स्वरूपपरिज्ञानात्तु मोक्षः।[3]'

परम्परया चित्तशुद्धिद्वारा ज्ञानमुत्पाद्यमोक्ष हेतुत्वात्। भक्तिः सगुणोपासना च द्वारा कारणम्, नु तु मोक्षस्य मुख्यकारणम्। भक्त्या चित्तशुद्धिस्तदनन्तरं ज्ञानम्, ज्ञानादेव च मुक्तिः। ज्ञानकर्मसमुच्चयवादस्य तु शाङ्करभाष्येऽनेकस्थले निरासः कृतो वर्तते। अयं च निरासः बृहदारण्यकोपनिषद्भाष्ये श्रीमद्भागवद्गीताभाष्ये चादौ विशेषरूपेणा द्रष्टव्यः। ब्रह्मसूत्रस्य तृतीयाध्यायस्य चतुर्थपादे शाङ्करभाष्ये केवलं विद्याया एव मोक्षोपायत्वमिति सम्यग् निरूपितम्। तन्मते ब्रह्मविद्यैव मोक्षोपाय इति सिद्धान्तः। तद्यथा—

'इत्येवं जातीयका श्रुतिः केवलायाः विद्यायाः पुरुषार्थहेतुत्वं श्रावयति[4]' अत्र रत्नप्रभाटीकायां सिद्धान्ते केवलज्ञानान्मुक्तिरिति दृश्यते।

श्रीसद्गुरुकबीरमतेऽपि मोक्षोपायो ब्रह्मज्ञानमेव। किन्तु एतत्काठिन्येन साधयितुं शक्यते इति केषाञ्चिन्मतम्। श्रीकबीरस्तु समन्वयकारी महात्मा तदनन्तरं दार्शनिकस्तेन क्वचिन्मोक्षोपायं कर्म क्वचिन्मोक्षोपायं भक्तिं, क्वचिन्मोक्षोपायं ज्ञानमिति ब्रूते, इति मन्यते विवेचकाः। एतत्साधनं, न तु सिद्धान्त इति। तद्यथा—

(१) बीजक श० २८।　　　　(२) श्वे० उ० १।११

(३) ब्रह्मसूत्र शां० भा० ३।२।५।　　　　(४) ब्रह्मसूत्र—३।४।१

'करनी गर्व निवारनी, मुक्ति सारथी सोय।
कथनी तजि करनी करै, तब मुक्ताहल होय[1] ॥'

येन कर्मणा अहङ्कारस्य निवृत्तिर्भवति तदेव कर्ममोक्षोपायभूतं भवति। यः वाचालतां परित्यज्य मोक्षोपायं करोति स मुक्ति रूपं मौलिकं प्राप्नोति। अत्र वाचा ज्ञानरूपमुक्ति न स्वीकरोति।

'करनी करनी सब कहै, करनी मांहि विवेक।
सो करनी बहि जान दे, जो नहिं परखै एक[2] ॥'

अर्थभावः--कर्मकर्तुं सर्वे उपदिशन्ति किन्तु कर्मस्वपि विवेको वर्तते, येन कर्मणा एकस्य परमात्मनः सर्वत्र दृश्यता न भवति तत्त्याज्यमेवेति श्रीसद्गुरु-कबीरमतम्।

गीतायामपि दृश्यते—

'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मण।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः[3] ॥'

अन्यत्र च श्रीसद्गुरुणा उक्तम्—

'भरम हिंड़ोला ना जामें, सब जग झूले आय ॥
यह कर्म पटरि बैठिके को को न झूलै आनि।[4]'
मूढ़ कर्मि मानै नहीं, नख शिख पाखण्ड आहि।
वाहनिहारा क्या करै, वाह न लागै ताहि[5] ॥'

भक्तेः स्वरूपविवेचनमग्रे वक्ष्यामि।

## प्रणवजपो मोक्षप्राप्त्युपायः

मात्रारहितः प्रणव एव उच्चारणे यः नागच्छति, प्रपञ्चातीतः, कल्याण-मयः, अद्वितीयः पूर्णब्रह्मणः चतुर्थः पाद अस्ति अयं भावः। औंकारस्य तिसृणां

(१) साखीग्र० पृ० ५३० साखी ३। (२) सा० ग्र० पृ० ५३१ साखी ८।
(३) गीता—४।१८-१९। (४) बीजक हिंड़ोला—१।
(५) बीजक साखी—१६०।

मात्राणां यथा ब्रह्मण: पूर्वोक्तैस्त्रिभि: पादै: सह समता अस्ति । तथैव ओंकारस्य निराकारस्वरूपस्य परमात्मन: निर्विशेषरूपेण चतुर्थेन पादेन सह समता अस्ति । य: नाम नामिनोरेकता रहस्यं ज्ञात्वा तत प्राप्तये नाम जपमङ्गीकरोति स नि:संशयं परमात्मनि प्रविशति ।

अत्र भाष्यकार: कथयति यद् ब्रह्मवित् तृतीयं बीजभावं ज्ञानाग्निना दग्ध्वा आत्मानं प्रविष्ट, न पुनरुत्पद्यते । अयमेव भाव: श्रीकबीरस्य पद्य दृश्यते—

'काया कफ चित चकमके, झारों बारम्बार ।
तीन वार धुंवा भया, चौथे परा अंगार[1] ॥'

इति साखी पद वाच्यस्यास्ति । इदं शरीरं कफ पदवाच्यम्, तूलवस्त्रादि-रूपं चित्तपदवाच्यम्, चैतन्यं चकमकाख्यपाषाणम् । तत्र तु संघर्षणेन विना आत्मतत्त्वं नावगन्तुं शक्यते । तिसृष्ववस्थासु त्रिपु गुणादिषु वा तत्त्वज्ञानं मोक्षप्राप्ति: वा न भवति, तुरीयायामवस्थायां तु प्राप्यते, तदेव अंगार स्वरूपं ज्ञानं कथ्यते । यथा—

'ज्ञानाग्नि: सर्व कर्माणि भस्मासात् कुरुतेऽर्जुन[2] ।'
'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया:[3] ।

उपनिषदुक्तस्य भावस्यापि श्रीकबीरोक्तसिमावेशो विद्यते ।

'ना हरि भजे न आदत छूटी ॥ टेक ॥
शब्दहिं समुझि सुधारत नाहीं, अन्धरे भये हियहुं की फुटी[4] ॥' इत्यादि

'गुरुभ्यो हि परं यावद्धरिं न भजते नर: ।
मुच्यते न स्वभावोऽयं वासनारसरञ्जित: ॥
अन्धास्ते ह्यभवंस्तेषां हृच्चक्षुर्व्यनशत् किल ।
अतो नैवेह पश्यन्ति स्वात्मनोऽपि हिताहिते[5] ॥

तथैव गुरुदेशरूपो मोक्षोपाय:—

'सतगुरु मिले बहुत सुख लहिया, सत गुरु शब्द सुधारै ।
कहहिं कबिर सो सदा सुखारी, जो यह पदहिं विचारै ॥'[6]

---

(१) सा० प्र० पृ० ८५० सा० ५ । (२) गीता-४।३७ ।
(३) मु० उ०-२।२।८ । (४) बी० श० ७९ ।
(५) बी० श० ७९ सं० टीका । (६) बीजक शब्द-७३ ।

पुण्यपुञ्जेन चेत्कश्चित्प्राप्नुयाद् गुरुसन्निधौ ।
लभ्यते तेन सत्सौख्यमनन्तं नात्र संशयः ॥
मिलेद् वै सद्गुरुर्यस्य तस्य भाग्यं परं मतम् ।
जीवन्मुक्तो विमुक्तः स मोदते सर्वदैव हि ॥
गुरवः शोधयन्तीह शब्दांस्तेषां च शब्दकाः ।
साधयन्तीह कार्याणि चित्तसंशोधयन्ति च ॥
सद्गुरोः सारशब्दं यो हृदये धरति ध्रुवम् ।
भाजनं स महार्थानां जायते मुक्तिभाजनम्[1] ॥ इत्यादि

रामनामजपरूपो मोक्षोपायः —

राम न रमसि कवन डण्ड लागा, मरि जैबे का करबै अभागा[2] ॥
कहहि कबीर राम रमि रहिये, हिन्दू तुरुक न कोई[3] ॥
राम न रमसि मोह के मांते, परेहु कालवश कूवाँ[4] ॥

## श्रीसद्गुरुकबीरमतेऽद्वैतवेदान्तिमते च परम्परया मोक्षोपायः

अन्येऽपि बहवः परम्परया दर्शिताः स्वीकृताश्च श्रीसद्गुरुकबीरेण, ते यथा—सत्सङ्गतिः (सत्संगः) भक्तिः गुरुशरणागतिः, सद्गुरुप्राप्तिः, तच्छिक्षाश्च, साधनमार्गः, साधने विघ्नाः, साधनाभूमिका, सारभूतं साधनान्तरञ्चेति । तत्र सत्संगो यथा—

शब्द उपदेश सबको कहत हूं[5] ......अथवा
आन पड़ा चोरन की नगरी, सत्संग बिना जीव तरसे हो[6]
जनम धरि जो न कियो सत्संग ॥
ताको केवल पशु करि मानो, यद्यपि मानुष का अङ्ग ।
करत अहार निद्रा भय मैथुन लाग्यो विषय सुरंग ॥
वा में अजहुं न चेत्यो मूरख, काल करेगा भंग ॥

---

(१) बीजक शब्द ७९, तत्रैव सं० टीका । (२) बीजक शब्द ८० ।
(३) बीजक शब्द ८२ । (४) बीजक शब्द १०० ।
(५) श० सि० पृ० ६० श० ५५ । (६) श०मृ०सि०पृ० २१ श० २ ।

काह भयो पिताम्बर पहिरे, चढ़े कुँ हस्ति तुरंग।
वा में क्या बड़ाई नर देखी, फूल्यो हृदय उमंग॥
निर्मल चित करि कभी न न्हायो, सन्त स्वरूपी गंग।
कहैं कबीर नर क्यों करि पावै, पूरण रूप अभंग[1]॥
सन्तन के संग लाग रे तेरी अच्छी बनेगी[2]।

सत्संगस्य परम्परया मोक्षोपायत्वमद्वैतवेदान्तिनामपि सम्मतम्। तथाहि—

संगः सर्वात्मना त्याज्यः स चेत्युक्तं न शक्यते।
स सद्भिः सहकर्त्तव्यः, सतां सङ्गो हि भेषजम्[3]॥
सत्संगश्च विवेकश्च निर्मलंनयनद्वयम्।
यस्य नास्ति नरः सोऽन्धः कथं न स्यादमार्गगः[4]॥
मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः।
शमो विचारः सत्संगश्चतुर्थः साधुसमागमः[5]॥
संगो यः संसृतेर्हेतुरसत्सु विहितो धिया।
स एव साधुषु कृतो निःसंगत्वाय कल्पते[6]॥ इति।

मोक्षद्वारस्य इमे शमविचारसङ्गतिसाधुसमागमाः चत्वारः रक्षिणः वर्तन्ते। एतैरनुमता एव प्रवेशं लब्धुमर्हन्ति। सत्सङ्गविवेकरूपे नयने स्तः. ताभ्यां हीनः पुरुषः अन्धः सन् अमार्गगो भवति। असत्सु विहितः असद्भिः सह कृतः संगः संसृतेर्बन्धस्य हेतुर्भवति। किन्तु स एव साधुषु कृतो निःसंगत्वाय मोक्षाय भवति।

## निर्गुणकाव्ये श्रीसद्गुरुकबीरसिद्धान्ते भक्तेः स्वरूपम्

भक्तिरेव मुक्तिसाधनमिति मतम्—

भक्ति दुहेली राम की, जस खाड़े की धार।
जो डोले सो कटि परै, निश्चल उतरे पार॥

---

(१) श० मृ० सि० पृ० २१ भ० ४।        (२) तत्रैव पृ० २१ भजन ३।
(३) मार्कं० पु० ३४।.३।        (४) गरुड़ पु० ४९।
(५) महाभा० शा० प०        (६) श्रीमद्भाग० ३।२३।५५।

भक्ति दुहेली राम की, जैसी अग्नि की झार।
डाग पड़ा तो ऊबरा, दाझे कौतुक हार[1] ॥
जाति वरन कुल खोय के, भक्ति करै चितलाय।
कहैं कबीर सतगुरु मिलै, आवागमन नशाय[2] ॥
कामी क्रोधी लालची, इनते भक्ति न होय।
भक्ति करै कोई सूरमा, जाति पाति कुल खोय[3] ॥

उक्तञ्च गीतायाम्--

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्[4] ॥

तथ्यतः मुक्तिमार्गे सुलभतमं साधनं यदि किञ्चिद् द्रष्टुं लभ्यते तत्साधनं भक्तिरेव[5]। गुरुभक्तिरीश्वरभक्तिश्च। उपासनायां भक्तौ च मौलिको भेदो वर्तते। शास्त्रीया उपासना द्विविधा भवति, बाह्य वस्तुविषया मानसी च। तत्र बाह्या उपासना कर्म संयुक्ता भवति। तस्यां विशिष्टजातीयस्यैवाधिकारः। मानसी तु--उपासना द्विविधा भवति, वैदिकी पौराणिकी च। तत्राद्याऽपि द्विविधा--कर्मसंबद्धा, सगुणब्रह्मसंबद्धा च। अत्राप्याद्यायां विशिष्टाधिकारिजातीयस्यैवाधिकारः। द्वितीयायां तु यद्यपि कर्मानधिकृतस्य यतेरपि अधिकारस्तथापि न तस्यां कर्मानधिकृतस्य शूद्रान्त्यजजातेरधिकारः, वेदानधिकारेण उपासना स्वरूपानभिज्ञानात्।

पौराणिक्यामपि उपासनायां कर्मसंयुक्तायां शूद्राणामधिकारेऽपि नान्त्यजानामधिकारः। पुराणानधिकारात्। 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रत' इति वचनात् शूद्राणामेवपुराणश्रवणादिषु अधिकारात्। पौराणिक्यान्तु भगवत्स्वरूपसंबद्धायां मानस्यामुपासनायामन्त्यजादेरपि अधिकारः। इयमेव भगवद् ध्यानरूपा भक्तिः पौराणिकी उपासना ध्यानरूपा भगवद्भक्तिदार्ढ्यंकारिणी

---

(१) 'सा० ग्र०' पृ० ८०६ सा० २६-२७। (२) साखी ग्र० पृ० १८१ सा० २९
(३) सा० ग्र० पृ० १७४ सा० ८। (४) गीता १८।१५।
(५) भक्ति निसैनी मुक्ति की, सन्त चढ़े सब धाय।
जिन जिन मन आलस किया जन्म जन्म पछताय ॥
सा० ग्र० १७१ साखी २।

भगवद् भक्तिमूलिका च श्रीस्वामिरामानन्देन प्रचालिता, श्रीसद्गुरुकबीरेण तदनुयायिभिश्च प्रचारिता प्रसारिता[1] च बभूव। न तु यवनानुयायिनः एकादशकबीराः।

अत एव शबरी, कैवर्त, गृध, गणिका, अजामिलादयः कर्मानधिकारिणोऽपि अनयैव भगवदुपासनया परां सिद्धिमुपागताः[2] पुराणेषु स्मर्यन्ते। तदुक्तं श्रीसद्गुरुणा—

'ऐसो गुरू (हरि) भजन को परमान।
अधम जाति मलिनगणिका, चढ़ी जात विमान[3]॥'

---

(१) 'भक्ति द्राविड़ उपजी, लाये रामानन्द।
परगट करी कबीर ने, सातद्वीप नव खण्ड॥'
—सा० ग्र० पृ० ११७ सा० १।

(२) 'प्रभु तो भक्ति के वश भाई।
जाति वरण कुल रीझत नाहीं ना रीझै चतुराई॥
करमा कौन आचार कियो है, कब काशी करि आई।
छप्पन भोजन पीछे लागे पहिले खिचड़ी पाई॥
सेवरी जाति कौन कुल कहिये, जूठ बेर ले आई।
प्रीति जानि ताके फल खाए, तीनौं लोक बड़ाई॥
ब्याधा कब आचार कियो है, कब गीता पढ़ भाई।
तुरत गोपाल पकरि ले आया, घड़ी न दुसर बिताई॥
त्रिरलोचन, नामदेव, पीपा हरि सो होत लगाई॥
सैन रूप ह्वै मर्दन कीन्हा, आप भये हरि नाई॥
सहस अठासी मुनि यज्ञ में जेमे, तबहु न घण्टा बाजे।
कहैं कबीर सुपच के जेमे, घंट मगन ह्वै गाजे॥'
—श० मृ० सि० पृ० २०४ भ० २६।

(२) 'ऐसो गुरू भजन को परमान ॥ टेक ॥
अधम जाति मलीन गणिका, चढ़ी जात विमान।
नीचे कुल की ऊँच पदवी, बाजत तबल निशान ॥ अ० पृ०

यद्यपि पुराणेषु बहूनि भक्तिस्वरूपाणि उपलभ्यन्ते, तथापि श्रीसद्गुरुकबीर-साहित्ये[1] पराभक्तिरेव समादृता उपलभ्यते। इयञ्चोपास्योपासकयोरभेद-भावनारूपा। इयञ्च श्रीकबीरसाहित्ये क्वचिद् रहस्यरूपेण, क्वचिद्भावात्मक-रूपेण, क्वचित्सेव्यसेवकभावरूपेण, क्वचिद्वात्सल्यभावरूपेण वर्णिता। किन्तु तत्र सर्वत्र जीवब्रह्मणोरभेदसिद्धिरेव लक्ष्यभूता वर्तते। सद्गुरुकबीरः सर्वत्रात्मपर-मात्मनोः परस्परं सम्मेलनमेवनिरूपितवान्। श्रीसद्गुरुकबीरः क्वचित् पति-पत्नीरूपाभ्याम्, क्वचिन्मातापुत्ररूपाभ्याम्। क्वचित् जलतरङ्गरूपाभ्याम्, क्वचित् स्वर्णतद्भूषणरूपाभ्याम्, क्वचित् मृतपिण्डतत्पात्ररूपाभ्याम्, क्वचिद्-जीवब्रह्मरूपाभ्याम् निरूपितवान्।

सर्वत्र एता एव भावना सन्ति। तद्यथा—

श्रीशान्तिस्वरूपत्रिपाठी अपि पूर्वोक्तं सर्वं मन्यते।[2] तत्र श्रीकबीरसाहित्ये मातापुत्रभावो यथा—

'हरि जननी मैं बालक तेरा, काहे न अवगुण बकसहु मेरा[3] ॥'

तत्र पतिपत्नीभावो यथा—

---

चलत तारा चलत मण्डल, चलत शशि औ भान।
दास ध्रुव को अटल पदवी, राम के दीवान॥
रावण के दशमस्तक छेदे, कर गहे धनुष बान।
विभीषण को राज दीनो, भक्त आपनो जान॥
निगम जाकी साखि बोलै, सुनिय सन्त सुजान।
कहैं कबीर जो शरण आये, राखि अपना जान॥

—श० मू० सि० पृ० ८१ भजन १४।

(१) 'भक्तन की यह रीति है, मन दे कीजै भाव।
परमार्थ परतीति में, यह तन रहा की जाव॥
जब लग भक्ति सकाम है, तबलग निष्फलसेव।
कहैं कबीर वह क्यों मिले निसकामी निज देव॥

सा० प० पृ० १७६ सा० १४-१५।

(२) शांकर अद्वैतवेदान्त का निर्गुण काव्य पर प्रभाव —पृ० ४२१।

(३) क० ग्र० पद १११।

'बहुत दिनन मैं प्रीतम पाये'[१]
'हरि मोर पीव मैं राम की बहुरिया'[२]

तत्र.सेव्यसेवकभावो यथा—

'तुम्ह साहिब हम कहाँ भिखारी, देत जवाब होत बजगारी[३] ॥'

श्रीसद्गुरुकबीरादीनां सतां मते भक्तिरद्वैतानुभूतिरूपस्य ज्ञानस्य साधनं कथयितुं शक्यते। श्रीकबीरकाव्येषु भक्तिनिरूपणावसरे विरह, संयोगस्यानन्दः वियोगाशङ्कायां कातरता, स्वामिसेवायामुत्कृष्टनिष्ठा, दीनता, आत्मसमर्पणरूपाभावना, आत्मनिन्दा, भगवत्प्राप्तौ मनस उत्कण्ठा, भगवत्प्राप्तये मनस उद्बोधनम्, साहसम्, धीर्यम्, पातिव्रत्यम्,·इत्यादयो भावाः तथा सत्काव्योपयोगिनी शान्तशृंगाररूपो रसो तथा तयोः सर्वाङ्गपूर्णानि उदाहरणानि चोपलभ्यन्ते। तद्यथा—

(१) प्रेमरूपा भक्तिर्यथा—

'प्रेम पियाला सो पियै, शीस दच्छिणा देय।
लोभी शीस न दे सकै, नाम प्रेमका लेय[४] ॥'
'जो कोई या विधि प्रीति लगावै[५] ॥'टेक ॥

भगवत्प्राप्तये विरहव्यथा यथा—

---

(१) क० ग्र० पद–१. श० मृ० सि० पृ० ७६-भ० १६।
(२) बीजक शब्द–७४, क० ग्र० पद–११७।
(३) क० ग्र० पद–२३९ (टुकड़ा),।
(४) साखीग्रन्थ प्रेमअ० सा० ६–पृ० १९१।
(५) 'जो कोई या विधि प्रीति लगावै। टेक ॥
गुरु (प्रभु। का नाम ध्यान छूटे, परग ना गुहरावै।
कूर्म सुतन को धरतं ऊंचे, आप उदर को धावै।
निशिदिन सुरत रहै अण्डन पर, पलभर ना बिसरावै ॥
जैसे चातक रटैस्वाति को, सरिता निकट न आवै।
दीन दयाललगन हितकारी, स्वाती जल पहुंचावै ॥
फूटी सुगन्ध कंज (कमल) के जैसे, मधुकर के मन भावै।
[illegible] ॥

बहुत दिनन की जोवती बाट तुम्हारी राम।
जिय तरसै तुम मिलन को, मन नाही विसराम[1] ॥'

संयोगानन्दो यथा—

'पिञ्जर प्रेम प्रकाशिया, जागी जोति अनन्त।
संशय छूटा भय मिटा, मिला पियाराकन्त[2] ॥

वियोगाशङ्कायां कातरता यथा—

ना प्रतीति न प्रेम रस, ना कोइ तन में ढंग।
ना जानों उस पीव सो, क्यों कर रहसी रंग[3] ॥'

स्वामिसेवायामुत्कृष्टनिष्ठा यथा—

'साहब को भावै नहीं, सो हम सो जनि होय।
सतगुरू लाजै आपना, साधु न मानै कोय[4] ॥

दीनता यथा—

'दीन लखत मुख सबन को, दीन हि लखै न कोय।
भली विचारी दीनता, नरहु देवता होय॥
इक बानी सो दीनता, सब कछु हरि दरबार।
यही भेट जगदीश की, सन्तन किया विचार[5] ॥'
'कबीर सब ते हम बुरे, हम ते भल सब कोय।'

आत्मसमर्पणरूपा भावना यथा—

जैसे चकोर शशि तन निरखै, तन की सुधि बिसरावै।
शशि तन रहत एक टक लागो, तब शीतल रस पावै॥
ऐसी युक्ति करै जो कोई, तब सो भक्त कहावै।
कहैं कबीर सत् गुरु की मूरति, तिहि प्रभु दरश दिखावै॥

—श० मृ० सि०—पृ० ७१ भजन २,३

(१) सा० ग्र० पृ० २१२ सा० ७।
(२) ,, पृ० २७७, सा० १५।
(३) ,, पृ० ९५५, सा० १४।
(४) ,, पृ० ९७७, सा० १४।
(५) ,, पृ० ५२१ २ अन्यत्र १–९।

'अवगुण किया ते बहु किया, करत न मानी हार।
भावे बन्दा बकशिया, भावै गरदन मार[1] ॥'

आत्मनिन्दा यथा—

'और पतित सब कूप है, मैं हूँ समुंद समान।
एक टेक तव नाम की, सुनियो कृपा निधान[2] ॥'

'माधो मैं ऐसा अपराधी, तेरी भगति होत नहीं साधी[3] ॥

भगवत्प्राप्ती मनस उत्कण्ठा यथा—

'अबकी जौं साईं मिले, सब दुःख आखूं रोय।
चरणों ऊपर शिर धरूं, कहूँ जो कहना होय[4] ॥'

भगवत्प्राप्तये मनस उद्बोधनं यथा—

'कबीर साईं मिलहिंगें, पूछेगें कुशलात्।
आदि अन्त की सब कहूं, उर अन्तर की बात[5] ॥'

साहसं यथा—

'भागें भली न होयगी, कहाँ धरोगे पांव।
सिर सौंपो सीधैं लड़ों, काहे करों कुदाव[6] ॥'

शौर्यं यथा—

'सूर सनाह न पहिरई, मरता नहीं डराय।
कायर भागा पीठ दे, सूर मुंहामुंह खाय[7] ॥

पातिव्रत्यं यथा—

'सांई मेरा एक तूं, दूजा और न कोय।
दूजा सांई तब करूं, जो कुल दूजा होय[8] ॥'

---

(१) साखी ग्रन्थ पृ० ९५२, साखी ३।
(२) „ पृ० ९५६, सा० ६।
(३) क० ग्र० पद १६१।
(४) साखीग्रन्थ पृ०९५ ६ सा० ७।
(५) „ पृ० ९५६। सा० ८७।
(६) साखीग्रन्थ पृ० ८१०, सा ४१।
(७) „ पृ० ८११ सा०।
(८) „ पतिव्रता पृ० ३२० सा० ३८।

शान्तरसो यथा--

'दीठा है तो क्या कहूं, कहूं तो को पतिआय।
हरि जैसा का तैसा रहै, हरषि हरषि गुण गाय[1] ॥'

श्रृंगाररसो यथा--

'हसत मुसुकत चितवत रहे, लगै टकटकी नैन।
कहैं कबीर वह लखि गई, सखी सखी की सैन[2] ॥'

एवं भक्तिः तद्विशेषाश्च प्रेमादयः पुराणेषु प्रह्लादध्रुवादि चरितेषु उपलब्धाः मुक्तेः परम्परया साधनभूता, श्रीकबीरसाहित्ये तत्र तत्र सरसगीतरूपेण दर्शिताः, शास्त्रीयज्ञानशून्यानां लोकानामनुजिघृक्षया स्वान्तः सुखाय चेतिगीतं श्रीसद्गुरुणा कबीरेणा—

अत एव सुष्ठूक्तं विवेकचूड़ामणिकारः।

'मोक्षकारणसमग्र्यां भक्तिरेव गरीयसी।
स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते[3] ॥'

## श्रीसद्गुरुशरणागतिमहत्त्वम्

श्रीसद्गुरुकबीरः गुरोर्महत्त्वं साखी शब्दादिप्रकरणे सुनियोजितया रीत्या प्राकटयत्। कथयति यद् गुरुसङ्गसरसि स्नानेन दुर्बुद्धिर्नश्यति। तस्य जलमेतादृशं निर्मलमस्ति, यस्मिन्मज्जनादेव ज्ञानमुत्पद्यते। गुरुसङ्गं बिना इतस्ततः भ्राम्यति, लक्ष्यञ्च नासादयति। स्वयं भगवान् श्रीकृष्णः गुरोर्महत्त्वं श्रीमुखात् निरदिशत्[4]। यथा--श्रीमद्भागवतस्यैकादशस्कन्धे दशमाध्याये श्रीभगवान्

(१) सा० ग्र० पृ० ३०७ सा० २।

(२) सा० ग्र० पृ० ३०५ सा० ५।

(३) विवेकचूडाभक्ति वि० प्र०।

(४) गुरु दरियाव नहाना हो जासो दुर्मति भागे।
गुरु दरियाव सदा जल निर्मल, पैठत उपजत ज्ञाना हो।
जब लग गुरु दरियाव न पावै, तब लग फिरत भुलाना हो॥
कोटिन तीरथ गुरु के चरणन, श्रीमुख आप बखाना हो।
कहैं कबीर सुनो भाई साधो ? अजर अमर हो घर जाना हो॥
—शब्दामृतसिन्धु पृ० २३ भ० १।

नोट—यह शब्द पलटू साहब की बाणी में ज्यों का त्यों मिलता।

कृष्णः उद्धवमुपदिशति यद् यो गुरुर्ब्रह्मवेत्ता स्यात् तस्योपासनां कुरु यथा—

'मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम्[1]' इति ।

य. साधकः गुरोरमलं महिमानं गायति, गायंश्च मोदमनुभवति, स न पुनरावर्तते किन्तु प्रभोरुत्सङ्गे उपविशति । यथा—

गुरु महिमा गावत सदा, मन अति राखै मोद ।
सो फिरि भव आवै नहीं, बैठे प्रभु की गोद[2] ॥

गुरावेव तादृशी क्षमता विद्यते यत् स चतुरशीतियोनिरूपं बन्धनं छित्वा जीवं मोचयति । गुरो पार्श्वे एव तत्प्रमाणपत्रं भवति, येन यमस्य सम्बन्धिता नश्यति । तद्यथा—

बिगरी जन्म अनेक की, सुधरी अब आय ।
जब गुरु आप कृपा करी, शब्द दियो परखाय ॥[3]

गुरु मुक्तावै जीव को, चौरासी बन्ध छोर ।
मुक्ति प्रवाना देइ गुरु, यम से तिनुका तोर[4] ॥

श्रीसद्गुरुः कबीरः कथयति यद् गुरुर्गोविन्दरूप एव भवति, अतः गुरोर्वचने स्थैर्यमापादनीयम्[5] । संस्कृतसाहित्येऽपि एतत्संवादिवाक्यमुपलभ्यते । यथा—

यस्मान्महेश्वरः साक्षात् कृत्वा मानुष विग्रहम् ।
कृपया गुरुरूपेण मग्नाः, प्रोद्धरति प्रजाः[6] ॥

अर्थात् स्वयं माहेश्वर एव मानवमूर्तिमादाय गुरुरूपेण माया मग्नान जीवान् उद्धरति । श्रीसद्गुरुकबीरस्तु गोविन्दादपि गुरोर्महत्त्वमधिकतरं मन्यते । कथयति गोविन्दस्य सृष्टौ ये जीवाः भवन्ति ते देहादिसंघातरूपा एव, किन्तु गुरोः सृष्टौ ये शिष्याः सन्ति ते संघातान्मुक्ता भवन्ति—

गुरु हैं बड़ गोविन्द ते, मन में देखु विचार ।
हरि सिरजें ते वार हैं गुरु सिरजें ते पार[7] ॥

तस्मात् स कथयति—

(१) श्रीमद्भागवत् ११।१०।५ । (२) साखी ग्र० पृ० २४ साखी १२ ।
(३) बी० साखी परि० ६१ । (४) सा० ग्र० पृ० २५; सा० १४
(५) [illegible]

गुरु गोविन्द दोनों खड़े, काको, लागूं पांय।
वलिहारी गुरु आपने जिन गोविन्द दियो वताय[1] ॥

रुष्टेऽपि हरौ यदि गुरुः प्रसन्नो भवति, तदा ज्ञानादिमार्गाणागुरुदेशेन हरेः प्रसन्नतायाः रहस्यमवबोधयति। येन शिष्यस्य मनोवृत्तिर्हृदयकमलमध्ये निराधारपदे आमोदिनि। इत्थं रुष्टोऽपि हरिः गुरोः प्रसादात् प्रसीदति। किन्तु यदि गुरुः रुष्टो भवति तदा हरिरपि सहायतां न करोति। यथा—

कवीर ते नर अन्ध हैं, गुरु को कहते और।
हरि रूठे ते ठौर है, गुरु रूठे नहिं ठौर[2] ॥
'कवीर हरि के रूठते, गुरु के शरणे जाय'
कहैं कवीर गुरु रूठते, हरि नहि होत सहाय[3] ॥

पुराणेऽपि सद्गुरोः स्तुतिर्दृश्यते—

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे शिवो नहि।
गन्तव्यो गुरुरेवात्र स्वात्मज्ञानेन देहिना[4] ॥

सद्गुरोरभिगमनविषये इमानि वचनानि शास्त्रस्य प्रतिबिम्बरूपाणि सन्ति। मुण्डकोपनिषत् कथयति—'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्[5]।' ईश्वरस्य ज्ञानाय अपि सद्गुरुरेव आश्रयणीयो भवति। श्रीकबीरः कथयति यश्चो गुरुं ज्ञानञ्च शिरसि धारयति स एव भवाब्धिं तरति। गुरुं बिना कोऽपि जनः कदाऽपि मुक्तिसुखं न प्राप्तुमर्हति। यथा—

जाके शिर गुरु ज्ञान हैं, सोई तरत भव माहिं।
गुरु विनु जानो जन्तु को, कवहुं मुक्ति सुख नाहिं[6] ॥

श्रीकबीरो वेदपुराणानां वचनं गुरोर्महत्त्वप्रकरणे प्रमाणीकृत्य, यद् वेदाः पुराणादीनि च सर्वाणि शास्त्राणि कथयन्ति, यत् कोऽपि गुरोरधिको नास्ति। यथा—

(१) साखी ग्र० पृ० ८ सा० ७।
(२) सा० ग्र० पृ० १६ सा० १६।
(३) साखी ग्र० सा० २३ पृ० १८;।
(४) आत्मपुराण ९।२२।
(५) मु० उ० १।२।१२।
(६) सा० ग्र० साखी ४३ पृ० ३५।

वेद पुरान साधु गुरु, सवन कही निज वात।
गुरु ते अधिक न दूसरा, का हरि का पितु मात[1] ॥

तत्सम्बादिवेदान्तवाक्यम्—

'आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयतीति[2]' गुरुं विना जीवस्य संशयो न नश्यति। गुरुं विना जीवस्याज्ञानान्धकारो न पलायते। गुरुं विना सूक्ष्मतत्त्वस्य पथः संकेतो न मिलति--

गुरुदेव विनु जीव की कल्पना न मिटै[3]

श्रीकबीरः कथयति यत् सद्गुरुः रामनामोपदिशति, स चेन्द्रियैरगम्यस्य वस्तुनः प्राप्तये संकेतं दत्वा सर्वाणि तत्त्वानि अर्पयति। जीवञ्च स्वरूपे मेलयति। सद्गुरुः बाह्यविषयेभ्यः इन्द्रियाणि परावर्त्य मनः साधयति, येन कालाधीनतां मोचयित्वा अज्ञमपि प्राज्ञं करोति। यथा श्रीकबीरेणोक्तम्--

"भाई कोई सतगुरु सन्त कहावै।
नयन अलख लखावै ॥[4]"

इति प्रतीकमादाय रवीन्द्रनाथ 'गोरमहोदयैः व्याख्या कृता'[5]। स कथयति यत् सद्गुरुरलक्ष्यमपि वस्तु नयनाभ्यां लक्षयति। गुरोरुपदेशेन तत्त्वज्ञानं दृढं भवति, तन्न तु विचलति, न वा विस्मृतमेव भवति। प्राणोपासनादपि ज्यायान् कर्मकाण्डाद्युपरिष्टाद् यः स्वाभाविकः समाधिर्भवति गुरुस्तं शिक्षयति। एतदर्थं गुरुः शिष्यस्येन्द्रियाणां मार्गं न रुणद्धि, प्राणायाममपि नाग्रहं करोति, नापि-अनहृदनादस्यावश्यकतां दिशति। किन्तु यत्र यत्र मनो गच्छति तत्र तत्र गुरुः शिष्यं परमात्मानं दर्शयति। सद्गुरुः तां युक्तिं शिक्षयति यया सर्वाणि कार्याणि कृत्वाऽपि शिष्यः तत्फलकांक्षा न भवति। सदैव आनन्द एव शिष्यो निमज्जति। तदा कस्यापि त्रास. तस्य मनसि न भवति। एवं रीत्या भोगे एव योगं शिक्षयति। मूलाधारादिकं परित्यज्य हृदये स्थिरो भवेत्। तदपि परित्यज्य त्रिकुट्यां मण्डपाच्छादनं कुर्यात्। हृदये ब्रह्माण्डस्य सारतत्त्वानुभवः स्थिरो भवेत्। तेन यदन्तरात्मतत्त्वं तदेव बहिरपि दृश्यते। तदा द्वैतस्य भानं न भवतीति। इत्थं स्थिरनिश्चयरूपेणानुभवेन मुक्तस्य परमहंसस्य पुनर्जन्म न भवति। तद्यथा—

(१) साखी ग्र० पृ० ३६ सा० ५१। (२) छा० उ० ४।९।३।
(३) शब्दामृतसिन्धु पृ० २६ श० ९। (४) श० मृ० सि० प्र० १ श० २।
(५) वन हण्ड्रेड पोयम्स आफ कबीर।

'भाई कोई सतगुरु सन्त कहावै'[1] इत्यादि ।

केचन कथयन्ति यत् साधकस्य जीवनपथे गुरोः काप्यावश्यकता नास्ति, मनुष्येण स्वयमेव जीवनपथेऽग्रसारिणा भवितव्यम् । शक्तिविकासः स्वयमेव भविष्यति, भगवान् स्वयमेव साधकस्य सहायतां करिष्यति, साधकभगवतोर्मध्ये न कस्यचन गुरुनामकस्य मध्यमस्यावश्यकता । यद्येतन् मतं समीचीनं स्यात्, तदा श्रीकबीरस्य गुरोः प्रशंसायां विस्तरेणोक्ताः समस्ताः शिक्षाः निष्फलाः स्युः । यथा—

गुरु बिनु माला फेरता, गुरु बिन देता दान ।
सो दान हराम है, पूछो वेद पुरान[2] ॥

अर्थात् पूर्वोक्तमतं न समीचीनम् । यत उपर्युक्तं मतं सामान्यमानवानां कृतेऽपि विद्यते । सामान्यमानवानामपि यदा पदे पदे लौकिकशिक्षायामपि पथनिर्देशकस्यावश्यकता भवति, तदा अध्यात्मजीवनस्य दुर्गमे पथि निर्देशकस्यावश्यमेव आवश्यकता सम्भाव्यते । ये तु स्वयमुद्भूतप्रज्ञासम्पन्नाः सन्ति, ते तु उत्तमकोटिमा टीकन्ते—

'उत्तमानां तु विज्ञानं गुरुशास्त्रानपेक्षणम्[3]'

गुरूपदेशं विना मध्यमानां श्रद्धा शास्त्रोक्तेषु न भवति । अश्रद्धया च कृतं व्यर्थं भवति

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह[4] ॥
'शिष्यप्रज्ञाप्रबोधस्य कारणं गुरुवाक्यतः[5] ।'

सद्गुरुः प्रत्यक्षज्ञानेन सह इच्छाशक्तिं क्रियाञ्च योजयति । अस्यामवस्थायां गुरोः इच्छया सह शिष्यस्य हृदये ज्ञानस्य स्रोतः प्रवहति । एवं तत्क्रियाशक्तेश्च प्रभावेण साधनमार्गस्य कृत्स्ना बाधा नश्यति[6] ।

---

(१) शब्दमूनसिन्धु पृ० १ भ० २ । (२) साखी ग्र० पृ० ८९५ साखी १२ ।
(३) त्रिपुरारहस्य ज्ञानखण्ड (४) गीता १७।२८ ।
(५) यो० वा० नि० प्र० ११ १२८।१६३ ।
(६) भारतीय संस्कृति और साधना—पृ० २४४ ।

अतोऽध्यात्मजीवने सद्गुरोरावश्यकता निर्बाधा । श्रीसद्गुरुः कबीरः कथयति—

गुरु बिन ज्ञान न उपजै, गुरु बिन मिलै न मोख ।
गुरु बिन संशय ना मिटै, जय जय जय गुरुदेव ।
गुरु बिन ज्ञान न उपजै, गुरु बिन मिलै न मोष ।
गुरू बिन लखै न सत्य को, गुरू बिन मिटै न दोष[1] ॥

अत एव गुरोरावश्यकता निश्चिनैव सिद्ध्यति । श्रुतिरप्याह-एतद्विज्ञानार्थं गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति[1] । किन्तु प्रपञ्चबहुले संसारे गुरोर्विषयेऽपि प्रपञ्चो भवति । कोऽपि वञ्चकः गुरुर्भूत्वा लोभवशात् शिष्यरूपसम्पत्ति वर्द्धयति । यः स्वयमेवान्धो भवति, स अन्यस्य मार्गं कथं दर्शयिष्यति । यदि दर्शयितुं दुश्चेष्टते तदा गुरुशिष्ययोरुभयोरपि पदे पदे विनिपातः स्यात् । अतः सद्गुरुः कबीरः गुरुपारख अंगसाखीप्रकरणेऽसद्गुरोः सकाशात् सम्भावितानां बाधानामपि निर्देशमकार्षीत् । यथा—

पूरा सद्गुरु ना मिला रहा अपूरा सीष ।
निकसा था हरि भजन को, चली सका नहिं सीष[3] ।

एतादृशो गुरुर्न भवति, स तु वञ्चकः, एतादृशस्य वञ्चकस्य सपदि त्याग एव त्याज्यात् । सद्गुरुकबीरः कथयति—

जा गुरु ते भय ना मिटै, भ्रान्ति न जीव की जाय ।
सो गुरु झूठा जानिये, त्यागत देर न लाय[4] ॥

अर्थात् सद्गुरुः कबीरः कथयति एतादृशस्य गुरोः त्यागे एकस्यापि क्षणस्य विलम्बं न कुर्यात् । अत एवोपर्युक्तश्रुतौ श्रोत्रियं ब्रह्मनिष्ठमिति गुरोर्विशेषणद्वयं दत्तम् । तत्र श्रोत्रियपदस्यार्थः—वेदाध्ययनेन वेदार्थविचारेण च वेदार्थज्ञानसम्पन्नः । ब्रह्मनिष्ठपदेन च ब्रह्मज्ञानी विवक्षित इति । उपनिषदोऽपि कथयति —

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः[5] ॥

परमार्थपथे यथा सद्गुरोरबाधिना आवश्यकता अस्ति, तथैव—असद्गुरोर्हेयतापि आवश्यकी इति सद्गुरुणा श्रीकबीरेण मुहुर्मुहुः कथितम् । यथा—

---

(१) गुरुमाहात्म्य ज्ञान पृ० ३२ । २) सा/ग्र० पृ० २८ सा० ९-१० ।
(३-४) सा०ग्र०पृ० ४५ सा०९ । (५) मु० उ० २।३।८ ।

बन्धे को बन्धा मिलै, छूटै कौन उपाय।
कर सेवा निरबन्ध की, पल में लेइ छुड़ाय॥
जाका गुरू है गीरही, गीरही चेला होय।
कीच कीच के धोवते, दाग न छूटै कोय[1]॥

अनयोः पद्ययोरयं भावः—अज्ञानिनः गुरोः सेवाकरणेन बन्धान्मुक्तिर्न भवति निर्बन्धस्य ज्ञानिनः सेवाकरणेन सङ्गतिकरणेन ज्ञानद्वारा मुक्तिः सम्भाव्यते। यस्य गुरु अज्ञानग्रस्तो भवति स शिष्योऽपि तादृश एव भवति। यथा पङ्काद् धर्वात्रिमा नायाति तथैवाज्ञानी ज्ञानोपाय सम्मार्जने असक्तः।

## श्रीसद्गुरुशिक्षा

वाङ्मनसागोचरस्य प्रतिपत्तये गुरुशिक्षाया आवश्यकता अस्ति। अनुभूतस्य सत्यस्य मनसा वाचा वा अभिव्यक्तिः नैव सम्भविनी। अतः सद्गुरुणा स्वानुभूतस्य सत्यस्य साक्षात्कारः शक्तिपातेन स्वशिष्ये क्रियते। अस्मिन् सन्दर्भे सद्गुरोः कबीरस्य शक्तिपातसम्बन्धिस्थलेभ्योऽनेकानि उदाहरणानि दातुंशक्यन्ते। यथा—धरमदासगोपालगोबरदास-घीसादासादीन् प्रतिश्रूयते। किन्तु असद्गुरुणा नैव शक्तिपातः क्रियते। तदुक्तम्—

जल परमानै माछली, कुल परमानै शुद्धि।
'जाको जैसा गुरू मिला, ताको तैसी बुद्धि'[2]॥

कुसंगादिदोषेभ्यो वारयित्वा सन्मार्गस्य प्रदर्शकः सद्गुरुः यं नानुगृह्णाति स व्याकुलो भूत्वा दशसु दिक्षु धावति। किन्तु धावित्वापि विवेकरूपं प्रकाशं नैवाप्नोति। प्रकाशं विना च विकले तस्य नेत्रे सद्वस्तु द्रष्टुं नैव शक्नुतः। अतः कामक्रोधशोकादिभिर्व्याकुलो भूत्वा शान्त्यर्थं मिथ्यावस्तु प्राप्तये यतते। तथा च हृदये स्थितं भगवन्तं परमानन्दरूपं परित्यज्य तृणस्थानीयाय संसारसुखाय चेष्टते। अत एव व्याकुलो भवति। यथा—

जाको सद्गुरु ना मिला, व्याकुल दहुं दिशि धाव।
आंखि न सूझै बावरा, घर जर घूर बुताव[3]॥

---

(१) साखी प० पृ० ४६। सा० १४-१५।
(२) साखी प० पृ० ३० साखी ३२। (३) बीजक साखी २४९।

यदा सद्गुरुर्न प्राप्यतेऽसद्गुरुः सत्यमार्गं न प्रदर्शयेत्, तदा कस्याप्यध्यात्मपथिकस्य सत्यप्राप्तिः कथं स्यात्? अतस्तस्य जीवननौका कुघट्टे निमज्जति। तदुक्तं श्रीसद्गुरुकबीरेण—

ताकी पूरी क्यों परे गुरु न लखाई वाट।
ताके बेड़ा बूड़हीं फिरि फिरि औघट घाट[1]॥

यदि कश्चिद् मन्येत यदहं ग्रन्थानधीत्य ज्ञानी भविष्यामि ज्ञात्वा च मुक्तो भविष्यामि तदा तस्येदं मन्तव्यं ध्रुवमेवानुभवविरुद्धमस्ति। यतो सद्गुरु-शिक्षां विना ज्ञानस्य प्राप्तिर्नैव भवितुमर्हति। यथा—

पण्डित पढ़ि गुनि पचि मुये, गुरु विन न मिले ज्ञान।
ज्ञान विना नहि मुक्ति है सत्य शब्द परमान[2]॥

अत्र श्रीसद्गुरुकबीरः सद्गुरोर्विषये स्वमन्तव्यस्य दार्ढ्यार्थं वेदादि-वचनानि प्रमाणयति—'सत्य शब्द परमान' इति। सत्यशब्देन सत्यशास्त्ररूपं वेदादिवचनमेव सद्गुरोरभिप्रेतम्। वेदानां वचनानि च यथा—

'आचारवान् पुरुषो वेद[3]'।
'आचार्याद्ध्यैव विद्या विदिता साधिष्ठं प्रापयतीति[4]'

अयं भावः—यस्योपदेष्टा आचार्यो भवति स एव परमात्मानं वेत्ति। आचार्याद् विद्यां प्राप्य स्वेष्टं भगवन्तं प्राप्तुं शक्नोति जीवः गुरु शिष्याय तत्त्वतः ब्रह्म विद्यामुपदिशति। यथा मुण्डकेऽपि दृश्यते—

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय समन्विताय।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्म विद्याम्[5]॥

अतः श्रीसद्गुरुकबीरेणोक्तम्—यत् ध्यानस्य मूलं गुरोर्मूर्तिरस्ति, पूजायाश्च मूलभूतौ गुरोश्चरणौस्तः। गुरुवचनमेव मूलमन्त्रो विद्यते, वास्तविकी गुरुनिष्ठा एव सत्यप्राप्तेर्मूलमस्ति। यथा—

मूल ध्यान गुरु रूप है, मूल पूजा गुरु पांव।
मूल नाम गुरु वचन है, मूल सत्य सत भाव[6]॥

---

(१) बीजक साखी २०५।
(२) साखी ग्र० पृ० ३७, सा० ३२।
(३) छा० उ०।
(४) छा० उ० ४।९।३।
(५) मु० उ० १।२।१३।
(६) सा० ग्र० पृ० ३३ सा० ३।

सद्गुरुकबीरः गुरोः स्वरूपं परब्रह्मणोऽभिन्नं मन्यते। स कथयति यः सद्गुरुं मनुष्यं मन्यते, स नरके पतिष्यति। स नरकात् परावृत्य च श्वाजायते। यथा—

गुरु को मानुष जानते, चरणामृत को पान।
ते नर नरके जायेंगे, जन्म जन्म ह्वै श्वान[1]।

गुरुं प्रति शिष्येण सदा विनम्रेण भवितव्यम्, शिष्यस्य कृते निरभिमानता नितान्तमपेक्षिता। यदि–अविवेकितया अल्पोऽप्यभिमानः स्यात् तदा ज्ञानस्योपलब्धेर्न सम्भवः। अतः सद्गुरुशरणागतेर्मध्यात्मभागे वासनाऽभिमानादि अपाकर्तुमत्यन्तं सहयोगि दृश्यते। यथा––

गुरु से भेद जो लीजिये, सीस दीजिये दान।
बहुतक भोंदू बहि गये, राखि जीव अभिमान[2]॥

उपर्युक्त विवेचनया सिद्ध्यति यद् वेदमारभ्य अद्यावधि समग्रेऽप्यध्यात्मसाहित्ये गुरोर्महिमा मुक्तकण्ठेन गीयते। सद्गुरोः कबीरस्य साहित्ये गुरोर्महिमा अधिकेन विस्तारेण प्रतिपादितः। साखीग्रन्थे (गुरुदेव का अंग, गुरुशरण अंग, सद्गुरु अंग) इत्येतेषु त्रिषु प्रकरणेषु गुरोर्महिमा, गुरुसम्बन्धिन्यः अन्याश्च साखयः विस्तारेण प्रतिपादिताः। शब्दामृतसिन्धौ, बीजकेऽपि गुरोर्महिमाविवेचनादि-संक्षिप्तरूपेण यत्र तत्रोपलभ्यते।

अन्यत्र वेदपुराणादिसंस्कृतग्रन्थेऽपि सद्गुरोर्वर्णनं मिलति, किन्त्वसद्गुरोर्विवेचनं परिचयश्च विस्तरेण न प्रतिपादितम्, येन भक्तिकालस्य मध्ययुगे गुरोः शक्तिपातस्य स्थानेऽन्धविश्वासस्य प्रचलनमभवत्। श्रीसद्गुरुकबीरैः तीक्ष्णैः शब्दैः एतस्य खण्डनं कृत्वा अध्यात्ममार्गस्य परिष्कारः कृतः। यथा––

गुरुआ तो सस्ता भया, कौड़ी केर पचास।
अपने तन की सुधि नहीं, सिप करने की आस[3]॥

श्रीसद्गुरुणा कबीरेण साक्षिभिर्भजनैश्चासद्गुरूणां हेयता प्रतिपादिता, सद्गुरोः लक्षणानि प्रकटीकृतानि। सद्गुरुदीक्षया च निःश्रेयसप्राप्तिः प्रतिपादिता अधुनाऽपि सत्यासत्यविवेकस्य परमावश्यकता अस्ति। अत एव राष्ट्रभाषायां

(२) सा० ग्र० पृ० १५ सा० २०। (३) सा० ग्र० पृ० १९ सा० २८।
(१) साखी ग्र० पृ० ४६–४७ सा० १४–१५, १८।

हिन्द्यां श्रीसद्गुरोः कबीरस्यायमुपदेशो बीजकादिरूपः अभूतपूर्वोऽमृतमयश्च विद्यते।

## साधनामार्गः—

अथ मुक्तिसाधनाया मार्गाः प्रदर्श्यंते। तत्र संक्षेपतो मुक्तिसाधनायाः मार्गत्रयं सिद्धान्तभेदेन शास्त्रेषु दृष्टम्, श्रीकबीरेण च दर्शितम्। तद्मार्गत्रयं यथा— योगः, ध्यानम्, विचार इति।

तत्र योगः—प्राणवृत्तिनिरोधपूर्वकश्चित्तवृत्तिनिरोधः, ध्यानन्तु मनो निरोधपूर्विकाप्रत्ययैकतानता, विचारस्तु वेदान्तवाक्यानां मननरूपः[1]। योगध्यानाभ्यामात्मसाक्षात्कार इति सांख्ययोगशास्त्रयोर्मतम्। विचारात्स इति अद्वैतवेदान्तिनां मतम्। यतः सांख्ययोगश्च प्रकृतिं तत्कार्यं जगच्च सत्यं मन्यते। व्युत्थाने च बुद्धिपुरुषयोः सारूप्यम्, निर्विकल्पसमाधौ च पुरुषस्य स्वरूपेऽवस्थानम्। तदुक्तं योगसूत्रे—

'तदा द्रष्टुः स्वरूपेऽवस्थानम्, वृत्ति सारूप्यमितरत'[2] इति। तेषां मते प्रकृतिपुरुषान्यथाख्यातिरेव मोक्षसाधनम्। सा च पुरुषस्य प्रकृतिकार्यबुद्धयन्यत्वेन साक्षात्काररूप इति।

अद्वैतवेदान्तिनस्तु त्रिगुणात्मिकां प्रकृतिरूपां मायां तत्कार्यं जगच्च सत्त्वासत्त्वाभ्यामनिर्वाच्यं मिथ्यापदव्यपदेश्यं मन्यते। अतो यथा रज्ज्ववच्छिन्ने चैतन्ये मिथ्याभूतं सर्पधारादण्डमालादि आरोपितमिति विचारेण रज्जुसाक्षात्कारपूर्विका सर्पादिविभ्रमस्य निवृत्तिः, तथा विचारेणात्मसाक्षात्कारे जाते मायातत्कार्यंजगतोर्निवृत्तिरिति। एवमिदं मोक्षसाधना मार्गस्य भेदत्रयमिति।

तत्र श्रीकबीरेण क्वचिद्योगध्याने समाहृते तद्यथा—

'रस भंवर गुफा में अझर झरै।
गंगा यमुना मध्य सरस्वती, नाद बिन्दु से गांठ जुरै।
आसन मार अमृत रस चाखै, दिल की दुबिधा दूर करै॥

(१) मनः स्वबुध्यामलया नियम्य क्षेत्रज्ञ एतां निनयेद् तमात्मनि।
आत्मानमात्मन्यवरूध्य धीरो लब्धोपशान्तिर्विरमेत कृत्यात्॥
(२) योगसूत्र।

दश दरवाजे तारी लागी, कोई कोई हंसा ध्यान धरै।
कहे कबीर सुनो भाई साधो, अजर अमर कबहूं न मरै[1] ॥'

तथा च--

अवधू योगी जग से न्यारा।
मुद्रा निरति सुरति की सींगी, नाद न खण्डै धारा।
बसै गगन में दुनी न देखै, चेतन चौकी बैठा ॥
'चढ़ि आकाश आसन नहिं छाड़ै, पीवै महारस मीठा।
परगट कंथा मांहे योगी, दिल में दर्पण जोवै।
सहस इक्कीस सौ धागा, निश्चल नाकै पोवै ॥
ब्रह्म अग्नि में काया जारै, त्रिकुटी संगम जागै।
कहै कबीर सोई जोगेश्वर, सहज शून्य लौ लागै।'[2]
'सुरत से देख ले वह देश[3]............................'

श्रीकबीरपद्ये विचाररूपः साधनामार्गो यथा—

'ऐसा ज्ञान विचारो अवधू'[4] इत्यादि

व्याख्यातञ्चेदं पद्यं शब्दामृतसिन्धुटीकायां श्रीस्वामिहनुमद्दासषट्शास्त्रिकृतायामिति तत एवास्याऽर्थोऽवधार्यः। इति ।।

अथ साधनामार्गे विघ्नाः तन्निवारणोपायाश्चः—

(१) माया (२) देवादिश्च।

तत्र मायाया रूपद्वयम्। माया अविद्या चेति। तत्र शुद्धसत्त्वप्रधाना माया सा च भगवतः परमेश्वरस्योपाधिभूता तदधीनातच्छक्तिभूता च न तत्र विक्रियां जनयति। उक्तञ्च श्रीकबीरेण—

'माया है दो भांति की, देखो ठोक बजाय'[5] ॥'

अविद्या तु मलिनसत्त्वप्रधाना जीवस्योपाधिर्जीवे विविधा विक्रिया आरोपयति। तत्राविद्यायाः शक्तिद्वयम्, आवरणशक्तिर्विक्षेपशक्तिश्चेति। तत्रावरण-

(१) श० मृ० सि० पृ० ११६ भजन १।
(२) श० मृ० सि० प्र० पृ० ११७ भजन २।
(३) श० मृ० सि० पृ० ४९ भजन २६। (४) श० मृ० सि पृ० २६१ भ० ९

घक्त्या जीवमावृत्य विमोहयति । विक्षेपशक्त्या तु जीवेन मानसीं सृष्टिं कारयति भार्या मातापिताभ्रातबन्धुः भगिनी इत्यादिकाः, सैव च सृष्टिर्जीवस्य बन्ध हेतुः । तदुक्तम्—

'मैवं मांसमयी योषित् काचिदन्या मनोमयी ।
मांसमय्या अभेदेऽपि भिद्यते हि मनोमयी[1] ॥'

तदनुसारिणा श्रीकबीरेणापि—

'वैयर वैनी एक है, भूलि करै मति कोय ।
याही में मरि जाहुगे, मुक्ति कहां ते होय[2] ॥'

मायारूपस्य साधनामार्गे विघ्नस्य निवारणोपायाश्च भगवद् शरणागतिरूपः । वदुक्तं गीतासु —

'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते[3] ॥' इति

मायायाः साधनामार्गे विघ्नरूपत्वं तत्र तत्र दर्शितं श्रीसद्गुरुकबीरेण, तद्यथा–

'माया मोहिनी मन हरन ॥ टेक ॥
भोगियन सब पीस डारे, योगिया वश करन ।
कहहिं कबीर कोई भागि बाचे अभय सतगुरु शरन[4] ॥'

साधने विघ्नाः—'रमैया के दुलहिन लूटल हो बजार[5] ।' टेक॥
'क्या देख दिवाना हुवा रे[6] ।' टेक ॥
'माया महा ठगिनि हम जानी[7]' इत्यादि ।

मायायाः निवारणोपायश्च ज्ञानरूपो भगवन्नामप्रीतिरूपश्च दर्शितः श्रीकबीरेण । तद्यथा—

'आन्धी आयी ज्ञान की, ढही भ्रम की भीति ।
माया टाटी उड़ गई, लगी नाम सो प्रीति ॥'[8]

---

(१) पंचदशी ४।२५ ।
(२) साखीग्रन्थ पृ० ५४० साखी १७ ।
(३) गीता अ० ७।१४ ।
(४) श० मृ० सि० पृ० १६० भजन १ ।
(५) श मृ०सि० पृ० १६१ भजन ३ ।
(६) श०मृ० सि० पृ० १६२ भजन ७ ।
(७) बीजक शब्द २ ।
(८) साखीग्रन्थ पृ० [illegible] साखी ६८ ।

कबीर माया रूखरी, दो फल की दातार।
खावत खरचत मुक्ति भौ, संचत नरक दुवार॥
झीनी माया जिन तजी, मोटी गई बिलाय।
ऐसे जन के निकट से, सब दुःख गये हिराय[1] ॥'

कामरूपः साधनामार्गे विघ्न :—

तत्र गीतासु—

'काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्[2] ॥
धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय, दुष्पूरेणानलेन च॥
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम्॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मानं प्रजहीह्येनं ज्ञानविज्ञाननाशनम्[3] ॥'

अन्यत्रापि—'कामं जानामि ते मूलं संकल्पात् किल जायसे।
नाहं संकल्पमिष्यामि ततो नत्वं भविष्यसि॥'

कामरूपः साधनामार्गे विघ्नस्तन्निवारणोपायश्च दर्शितः श्रीसद्गुरुणा कबीरेण। तद्यथा—

'सन्तो काम सकल जग खाया[4]' इत्यादि।
'कामिनी काली नागिनी, तीनों लोक मंझार।
नाम स्नेही ऊबरे। विषयी खाये झार॥
कामिनी सुन्दर सर्पिनी, जो छेड़े तिहि खाय।
जो हरि चरणन राचियां, तिनके निकट न जाय॥[5]'

---

(१) सा०ग्र०पृ०४८०-४८२सा० १-१२। (२) गीता ३।३७।
(३) गीता अ० ३।३८-४१ (४) श० मू० सि० पृ० १७१ भजन १॥
(५) सा० ग्र० पृ० ५३७ सा० ३-४।

